नीचैर्गोत्रम्, नीचैर्गोत्रे बध्यमाने उच्चैर्गोत्रम्, संज्वलनमाने क्षपिते संज्वलनमाया संज्वलनलोभे, मिथ्यात्वे क्षपिते मिश्रं सम्यक्त्वे, सम्यक्त्वे उद्वलिते मिश्रं बध्यमाने मिथ्यात्वे संक्रमयतीत्येकैकप्रकृतिसंक्रमः । एवं यदा चारित्रमोहनीयदर्शनमोहनीययोरुभयोर्युगपत् संक्रमो विवक्ष्यते–यथा एकोनविंशतौ सप्तविंशत्यादयः संक्रमयन्ति तदा सप्तदशप्रकृतौ पञ्चविंशतिप्रकृत्यात्मकं स्थानं, सम्यक्त्वमोहनीये द्विप्रकृत्यात्मकं स्थानं, मिश्रे मिथ्यात्वरूपैकप्रकृत्यात्मकप्रकृतिसंक्रमः, यद्वा द्वाविंशतौ षड्विंशतिप्रकृतयो यदा संक्रामन्ति तदा एकविंशतिप्रकृत्यात्मके प्रतिग्रहे पञ्चविंशतिप्रकृत्यात्मकं स्थानं, मिथ्यात्वे मिश्ररूपैका प्रकृतिः संक्रामतीति कल्पनापि न विरुध्यते, एवमन्यत्रापि । तथा प्रकृतिस्थानसंक्रमेऽपि यदैकैव प्रकृतिः संक्रम्यमाणा विवक्ष्यते तदा प्रकृतिसंक्रमोऽभिधीयमानो न विरुध्यते । स्थानसंक्रमो यथा ज्ञानावरणपञ्चके बध्यमाने बन्धावलिकातिक्रान्तं प्राग्बद्धमेव ज्ञानावरणपञ्चकं संक्रमयति, एवमन्यत्रापि स्वयं बोध्यमिति ।

प्रतिग्रहोऽपि द्विविधः–प्रकृतिप्रतिग्रहः स्थानप्रतिग्रहश्च । तत्र प्रकृतिप्रतिग्रहोऽसातवेदनीये संक्रम्यमाणे बध्यमानं सातवेदनीयम्, सातवेदनीये संक्रम्यमाणे बध्यमानमसातवेदनीयं वा, उच्चैर्गोत्रे संक्रम्यमाणे बध्यमानं नीचैर्गोत्रम्, नीचैर्गोत्रे संक्रम्यमाणे बध्यमानमुच्चैर्गोत्रम्, क्षपके संज्वलनमायायाः प्रतिग्रहताव्यवच्छेदे सति संज्वलनलोभः, मिश्रमोहनीयस्य सम्यक्त्वं सम्यक्त्वमिश्रयोः मिथ्यात्वं प्रतिग्रहः । तथा नाम्नः त्रिंशत्प्रकृतिबन्धव्यवच्छेदानन्तरमेका यशःकीर्तिः प्रतिग्रहरूपा भवतीति एकैकप्रकृतिप्रतिग्रहः । स्थानप्रतिग्रहः संक्रम्यमाणज्ञानावरणपञ्चकस्य बध्यमानज्ञानावरणपञ्चकमेवमन्यत्रापि स्वयमवसेयमिति ।

तदेवं निरूपितः सामान्यविशेषलक्षणविधिरपवादो नियमश्च । अथ विकल्पावसरः । स च स्थितिसंक्रमादौ उद्वर्तनापवर्तनारूपसंक्रमसम्भवेन प्रदेशसंक्रमे विध्यातादिभेदसम्भवेन च तत्र संभवत्येव, तदुक्तं "ठितिसंकमातिसु संभवति उद्दिट्ठो" इति । प्रकृतिसंक्रमे तु त्रिषु दर्शनावरणमोहनीयनामकर्मसु संभवति, नान्यत्र, तदुक्तं कर्मप्रकृतिचूर्णौ– "इदाणिं विगप्पावसरो, सो य दंसणावरणमोहनामाणमेव पगतिसंकमे संभवति" इति । स्वामित्वे ज्ञाते तस्य ज्ञानं भवत्येवेति पृथग् नोच्यते, चूर्णावपि पृथक्त्वेन नोक्तः, तदुक्तं–"सामित्तेण च सह जातित्ति न पृथगुच्यते" इति विकल्पः ।

साम्प्रतं साद्यादिप्ररूपणा उच्यते–तत्र ज्ञानावरणपञ्चकस्य संक्रमश्चतुर्विधो भवति, तथाहि–कश्चिदुपशमश्रेणिमारूढः सूक्ष्मसम्परायचरमसमये ज्ञानावरणपञ्चकस्य बन्धव्यवच्छेदं कृत्वोपशान्तमोहं प्राप्तः, तत्र बन्धाभावेन संक्रमो न भवति, कालक्षयेण ततः प्रतिपाते सूक्ष्मसम्परायगुणस्थाने ज्ञानावरणपञ्चकस्य बध्यमानत्वेन प्रतिग्रहसत्त्वात् तत्र संक्रमयन् सादिः । तत्स्थानमप्राप्तस्यानादिः । अभव्यस्य ध्रुवः, कालान्तरेऽपि बन्धव्यवच्छेदाभावात् । भव्यस्याध्रुवः कालान्तरे बन्धव्यवच्छेदसम्भवात् । एवं दर्शनावरणनवकचारित्रमोहनीयपञ्चविंशतिनरकमनुजदेवद्विकवैक्रियसप्तकाहारकसप्तकतीर्थकरवर्जनाम-

त्र्यशीत्यन्तरात्पञ्चकरूपाणामेकविंशत्यधिकशतप्रकृतीनामपि भावनीयम् । अमीषां ध्रुवसत्कर्मप्रकृतीनां संक्रमविषयप्रतिग्रहप्रकृतिबन्धव्यवच्छेदे सति संक्रमो न भवति, पुनरपि संक्रमविषयप्रतिग्रहप्रकृतिबन्धारम्भे भवतीति सादिः, बन्धव्यवच्छेदस्थानमप्राप्तस्यानादिः, अभव्यस्य ध्रुवः कदाचिदपि बन्धव्यवच्छेदस्थानाप्राप्तेः, भव्यस्याध्रुवः, कालान्तरे बन्धव्यवच्छेदस्थानसम्भवात् । सम्यक्त्वमिश्रनरकद्विकमनुजद्विकदेवद्विकवैक्रियसप्तकाहारकसप्तकतीर्थकरोच्चैर्गोत्रलक्षणानां चतुर्विंशतीनामध्रुवसत्कर्मणां संक्रमः साद्यध्रुवो भवति, अध्रुवसत्कर्मत्वादेव । परावर्तमानानां सातासातवेदनीयनीचैर्गोत्ररूपाणां त्रयाणां ध्रुवसत्कर्मणां परावर्तमानत्वात् साद्यध्रुवो संक्रमो भवति । तथाहि—साते बध्यमानेऽसातस्य संक्रमः, असाते बध्यमाने सातस्य संक्रमः नान्यदा । तथा उच्चैर्गोत्रे बध्यमाने नीचैर्गोत्रस्य, नीचैर्गोत्रे बध्यमाने उच्चैर्गोत्रस्य संक्रमः अत एतासां साद्यध्रुवो भवतीति । तथा मिथ्यात्वस्य संक्रमः सम्यग्दृष्टेरेव भवति, सम्यग्दृष्टित्वं च कादाचित्कं, ततस्तस्य संक्रमः साद्यध्रुव एवेति । यच्च "मिथ्यात्वस्य संक्रमो विशुद्धसम्यग्दृष्टेर्भवति, विशुद्धसम्यग्दृष्टित्वं च कादाचित्कं" इत्यत्र विशुद्धत्वविशेषणं सम्यग्दृष्टेः कृतं तत्सास्वादनमिश्रदृष्टिनिराकरणार्थं स्वरूपावबोधकं वा द्रष्टव्यम् । आयुषः संक्रमाभावात्साद्यादिविचारणा न भवत्येवेति ।

॥ आयुषां संक्रमाभावेन चतुष्पञ्चाशदधिकशतप्रकृतीनां संक्रमस्य साद्यादिभङ्गकयन्त्रम् ॥

| प्रकृतीनां संक्रमः | सादिः | अध्रुवः | अनादिः | ध्रुवः |
|---|---|---|---|---|
| १२६ ध्रुवसत्ताकानां | प्रतिग्रहरूपबन्धविच्छेदानन्तरं पुनर्बन्धे | भव्यानाम् | सादित्वाप्राप्तस्य | अभव्यानाम् |
| २४ अध्रुवसत्ताकानां | अध्रुवसत्त्वादेव | अध्रुवसत्त्वादेव | ० | ० |
| वेदनीययोः नीचैर्गोत्रस्य च | बन्धे परावर्त्तमानत्वात् | बन्धे परावर्त्तमानत्वात् | ० | ० |
| मिथ्यात्वस्य | विशुद्धसम्यग्दृष्टेः संक्रम्यमाणत्वेन कादाचित्कत्वात् | सादित्वात् | ० | ० |

ननु कासां प्रकृतीनां किं संक्रमपर्यवसानं? येन तत ऊर्ध्वमभवन् प्रतिपाते च भवन् संक्रमः साद्यादिरूपतया सुखावबोधः स्यात् । उच्यते—ज्ञानावरणीयस्य मिथ्यादृष्टेरारभ्य सूक्ष्मसम्परायपर्यवसानाः सर्वेऽपि संक्रामकाः, न परे, परतस्तेषां बन्धाभावेन प्रतिग्रहाभावात् । एवमेव दर्शनावरणनवकस्यापि भावनीयम् । सातवेदनीयस्य मिथ्यादृष्टेः प्रारभ्य प्रमत्तसंयतं यावत् सर्वेऽपि संक्रामकाः, नान्ये, परतो हि असातवेदनीयस्य बन्धाभावेन प्रतिग्रहाभावात् । असातवेदनीयस्य मिथ्यादृष्टेरारभ्य सूक्ष्मसम्परायपर्यवसानाः सर्वे संक्रामकाः, नोपशान्तादयः, तत्र योगप्रत्ययिकसातवेदनीयस्य बन्धसद्भावेऽपि साम्परायिकबन्धाभावेन प्रतिग्रहाभावात् । मोहनीयकर्मणि मिथ्यात्वमोहनीयस्य अविरतसम्यग्दृष्ट्यादय

उपशान्तमोहपर्यवसाना वेदितव्याः, न परे, परतस्तस्य सत्ताऽभावात् । मिथ्यादृष्टयस्तु मिथ्यात्वं स्वभावत एव न संक्रमयन्ति 'नियनियदिट्ठि न केइ' इतिवचनात्, द्वितीयतृतीयगुणस्थानवर्तिनौ न किमपि दर्शनत्रिकं संक्रमयतः, प्राग् निषेधात् । मिश्रमोहनीयस्य मिथ्यादृष्टिरविरतसम्यग्दृष्टेरारभ्योपशान्तमोहपर्यवसानाश्च सर्वेऽपि संक्रामकाः, न परे, परतः सत्ताऽभावात्, नापि द्वितीयतृतीयगुणस्थानवर्तिनौ, "दुइयतइयज्जा न दंसणतिगंपि" इति वचनप्रामाण्यात् । सम्यक्त्वमोहनीयस्य मिथ्यादृष्टिरेव संक्रामकः, नान्यः, यतो मिथ्यात्वे वर्तमान एव सम्यक्त्वं संक्रामति, स तु मिथ्यादृष्टिरेवेति । अनन्तानुबन्धिनां मिथ्यादृष्ट्यादयोऽप्रमत्तगुणस्थानपर्यन्तवर्तिनः सर्वे, न परे, परतस्तेषां विसंयोजितत्वेन क्षीणत्वेन वा केषाञ्चिन्मते उपशान्तत्वेन वा संक्रमाभावात् । अनन्तानुबन्धिवर्जद्वादशकषायनवनोकषायाणां मिथ्यादृष्टेरारभ्यानिवृत्तिबादरसम्परायपर्यन्ताः सर्वेऽपि संक्रामका द्रष्टव्याः, न परे, परतस्तेषामुपशान्तत्वेन क्षीणत्वेन वा संक्रमाभावात् । आयुःकर्मणि संक्रमाभावात् न तत्र विचारणापि । नामकर्मणि यशःकीर्तेर्मिथ्यादृष्टेरारभ्य निवृत्तिबादरसम्परायषष्ठभागपर्यवसानाः सर्वे संक्रामका वेदितव्याः, न परे, परतस्तेषां केवलाया यशःकीर्तेरेव बध्यमानत्वेन तदन्यस्य प्रतिग्रहाभावात् । यशःकीर्तिजिननामवर्जशेषनामकर्मणः एकोत्तरशतस्य मिथ्यादृष्टेरारभ्य सूक्ष्मसम्परायपर्यवसानाः संक्रामका भवन्ति, न परे, परतो नामकर्मणो बन्धाभावेन प्रतिग्रहाभावात् । जिननाम्नस्तु द्वितीयतृतीयवर्जा मिथ्यादृष्टेरारभ्य सूक्ष्मसम्परायपर्यन्ता उक्तहेतोरेव, द्वितीयतृतीयगुणस्थाने सत्ताभावात् तद्वर्जनं कृतमिति । तथा उच्चैर्गोत्रस्य आद्यगुणस्थानद्वयवर्तिन एव संक्रामकाः, नान्ये, अन्येषां नीचैर्गोत्राबन्धकत्वेन प्रतिग्रहाभावात् । नीचैर्गोत्रस्यान्तरायपञ्चकस्य च मिथ्यादृष्ट्यादयः सूक्ष्मसम्परायपर्यवसाना बोध्याः, न परे, परत उच्चैर्गोत्रस्यान्तरायपञ्चकस्य च बन्धाभावेन प्रतिग्रहाभावादिति ।

॥ चतुष्पञ्चाशदधिकशतप्रकृतीनां संक्रमपर्यवसानाः ॥

| | | | |
|---|---|---|---|
| ज्ञानदर्शनावरणयोः | सूक्ष्मसम्परायान्ताः | आद्यवर्जद्वादशकषायाणां नोकषायाणां च | अनिवृत्तिबादरान्ताः |
| सातवेदनीयस्य | प्रमत्तान्ताः | यशःकीर्तेः | अपूर्वकरणषष्ठभागपर्यवसानाः |
| असातस्य | सूक्ष्मसम्परायान्ताः | जिनस्य | द्वितीयतृतीयवर्जसूक्ष्मसम्परायपर्यन्ताः |
| मिथ्यात्वस्य | अविरतसम्यग्दृष्टेरारभ्योपशान्तपर्यवसानाः | जिनयशोवर्जितशेषनाम्न एकोत्तरशतस्य | सूक्ष्मसम्परायपर्यवसानाः |
| मिश्रस्य | मिथ्यादृष्टिरविरतसम्यग्दृष्टेरारभ्योपशान्तपर्यवसानाश्च | उच्चैर्गोत्रस्य | प्रथमद्वितीयगुणस्थानवर्तिनः |
| सम्यक्त्वस्य | मिथ्यादृष्टयः | नीचैर्गोत्रस्यान्तरायपञ्चकस्य च | सूक्ष्मसम्परायपर्यवसानाः |
| अनन्तानुबन्धिचतुष्कस्य | अप्रमत्तान्ताः | | |

अथ प्रतिग्रहमाश्रित्य साद्यादिप्ररूपणा क्रियते—तत्र ज्ञानावरणपञ्चकदर्शनावरणनव-

कषोडशकषायभयजुगुप्सातैजसकार्मणसप्तकवर्णादिविंशतिनिर्माणागुरुलघूपघातान्तरायपञ्चकरूपाणां सप्तषष्टिसंख्याकानां ध्रुवबन्धिनीनां प्रकृतीनां प्रतिग्रहता चतुष्प्रकारा साद्यनादिध्रुवाध्रुवरूपा भवति। तथाहि–एतासां ध्रुवबन्धिनीनां स्वस्वबन्धव्यवच्छेदे सति प्रतिग्रहत्वं न भवति, तत्र न किमपि प्रकृत्यन्तरदलिकं संक्रमयतीति तात्पर्यम्, स्वस्वबन्धहेतुं समासाद्य पुनरपि बन्धारम्भे सति प्रतिग्रहत्वं भवतीति सादिः, तत्तद्बन्धव्यवच्छेदस्थानमप्राप्तस्यानादिः, अभव्यस्य ध्रुवा कदाचिदपि बन्धव्यवच्छेदाभावात्, भव्यस्याध्रुवा कालान्तरे बन्धव्यवच्छेदसंभवात्। मिथ्यात्वस्य ध्रुवबन्धित्वेऽपि द्विपुञ्जी त्रिपुञ्जी वाऽसम्यग्दृष्टिरेव तत्र सम्यक्त्वमिश्रौ संक्रमयति नान्य इति मिथ्यात्वस्य प्रतिग्रहता साद्यध्रुवा। आयुश्चतुष्टयवर्जचतुरशीतिसङ्ख्याकानामध्रुवबन्धिनीनां प्रतिग्रहता साद्यध्रुवाऽध्रुवबन्धित्वादेव। सम्यक्त्वमिश्रयोः बन्धाभावेऽपि द्विपुञ्जिनस्त्रिपुञ्जिनो वा पतद्ग्रहत्वं भवति, नान्यस्येति साद्यध्रुवता।

॥ पतद्ग्रहप्रकृतीनां साद्यादिभङ्गकयन्त्रम् ॥

| प्रकृतीनां प्रतिग्रहता | सादिः | अध्रुवा | अनादिः | ध्रुवा |
|---|---|---|---|---|
| ६७ ध्रुवबन्धिनीनाम् | स्वस्वबन्धव्यवच्छेदानन्तरं पुनर्बन्धारम्भे | भव्यानाम् | सादित्वाप्राप्तस्य | अभव्यानाम् |
| ८४ अध्रुवबन्धिनीनाम् | अध्रुवबन्धित्वादेव | अध्रुवबन्धित्वादेव | ० | ० |
| मिथ्यात्वस्य | पतद्ग्रहताया एव कादाचित्कत्वात् | पतद्ग्रहताया एव कादाचित्कत्वात् | ० | ० |
| मिश्रसम्यक्त्वयोः | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |

तदेवमेकैकप्रकृतेः संक्रमस्य प्रतिग्रहतायाश्च साद्यादिप्ररूपणा कृता, साम्प्रतं संक्रमस्थानेषु प्रतिग्रहस्थानेषु च साद्यादिप्ररूपणा क्रियते–तत्र ज्ञानावरणान्तराययोरेकं पञ्चप्रकृत्यात्मकं संक्रमस्थानमेकमेव पञ्चप्रकृत्यात्मकं प्रतिग्रहस्थानं, इमौ संक्रमप्रतिग्रहभावौ साद्यादिरूपतया चतुष्प्रकारौ, तथाहि–उपशान्तमोहगुणस्थाने तयोरभावात् ततः प्रतिपाते च पुनः संभवात् सादी, तत्स्थानमप्राप्तस्यानादी, भव्याभव्यापेक्षया अध्रुवध्रुवाविति। दर्शनावरणस्य द्वे संक्रमस्थाने नवप्रकृत्यात्मकं, षट्प्रकृत्यात्मकं च। नवकषट्कचतुष्करूपाणि त्रीणि प्रतिग्रहस्थानानि। तत्र नवकसंक्रमस्थानं प्रतिग्रहस्थानं च साद्यादिचतुष्प्रकारं भवति, तद्यथा–सादि, अनादि, ध्रुवं, अध्रुवमिति। तत्र सास्वादने स्त्यानर्द्धित्रिकबन्धव्यवच्छेदेन मिश्रादौ षट्प्रकृत्यात्मकस्य प्रतिग्रहत्वात्, क्षपकश्रेण्यां पुनः स्त्यानर्द्धित्रिकक्षपिते सति षट्प्रकृत्यात्मकस्य संक्रमस्थानस्यानिवृत्तिकरणादौ प्राप्यमाणत्वेन, नवप्रकृत्यात्मकं प्रतिग्रहस्थानं संक्रमस्थानं च न भवति, ततः प्रतिपाते भवतीति सादि, तत्तत्स्थानमप्राप्तस्यानादि, ध्रुवमभव्यापेक्षया, भव्यापेक्षयाऽध्रुवम्। षट्प्रकृत्यात्मकं संक्रमस्थानं षट्प्रकृत्यात्मकं चतुष्प्रकृत्यात्मकं च प्रतिग्रहस्थानं कादाचित्कत्वेन साद्यध्रुवमिति। वेदनीयस्य बध्यमानायां प्रकृतौ अन्यतराऽ-

बध्यमाना प्रकृतिः संक्रामति, तेन संक्रमप्रतिग्रहौ द्वावपि परावर्तमानत्वात्साद्यध्रुवौ । सामान्येन सातासाताऽविवक्षणे तु वेदनीयस्य संक्रमस्थानं प्रतिग्रहस्थानं च साद्यादिचतुष्प्रकारं भवति, वेदनीयस्य ध्रुवबन्धित्वात्, तदुक्तम्—"वेयणीयस्स पगतिट्ठाणं एगमेवेति सातियातिचउविहं" इति । तथा गोत्रस्यापि परावर्तमानत्वेन साद्यध्रुवौ संक्रमप्रतिग्रहौ भावनीयौ । ननु वेदनीयवत् गोत्रस्यापि उच्चैर्गोत्रनीचैर्गोत्राविवक्षया ध्रुवबन्धित्वेन साद्यादिचतुष्प्रकारौ संक्रमप्रतिग्रहौ कथं न भवत इति चेत्? न, ध्रुवबन्धित्वेऽपि उच्चैर्गोत्रस्योद्वलने संक्रमप्रतिग्रहाभावात् । वेदनीयस्योद्वलनाया अभावात् न तथेति ।

॥ मोहायुर्नामवर्जप्रकृतिसंक्रमस्थानानां साद्यादिभङ्गकयन्त्रम् ॥

| प्रकृतिस्थानानां संक्रमः | सादिः | अध्रुवः | अनादिः | ध्रुवः |
|---|---|---|---|---|
| ज्ञानावरणान्तराय-दशकस्य | उपशान्तमोहात् प्रतिपततः | भव्यानाम् | उपशान्तमोहा-प्राप्तस्य | अभव्यानाम् |
| दर्शनावरणीयनवकस्य | ,, | ,, | अत्यक्तमिथ्यात्वस्य | ,, |
| दर्शनावरणीयषट्कस्य | क्षपकश्रेणौ विद्यमानत्वेन कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| असातवेदनीयस्य | परावर्त्तमानबन्धित्वात् | परावर्त्तमानबन्धित्वात् | ० | ० |
| सातवेदनीयस्य | ,, | ,, | ० | ० |
| उच्चैर्गोत्रस्य | ,, | ,, | ० | ० |
| नीचैर्गोत्रस्य | ,, | ,, | ० | ० |

॥ मोहायुर्नामवर्जकर्मणां पतद्ग्रहस्थानानां साद्यादिभङ्गकयन्त्रम् ॥

| प्रकृतिस्थानानां प्रतिग्रहता | सादिः | अध्रुवा | अनादिः | ध्रुवा |
|---|---|---|---|---|
| ज्ञानावरणान्तराय दशकस्य | उपशान्तमोहात् प्रतिपततः | भव्यानाम् | उपशान्तमोहाप्राप्तस्य | अभव्यानाम् |
| दर्शनावरणनवकस्य | षट्कबन्धात् नवबन्धकस्य | ,, | अत्यक्तमिथ्यात्वस्य | ,, |
| दर्शनावरणषट्कस्य | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| दर्शनावरणचतुष्कस्य | ,, | ,, | ० | ० |
| सातस्य | अध्रुवबन्धित्वात् | अध्रुवबन्धित्वात् | ० | ० |
| असातस्य | ,, | ,, | ० | ० |
| उच्चैर्गोत्रस्य | ,, | ,, | ० | ० |
| नीचैर्गोत्रस्य | ,, | ,, | ० | ० |

मोहनीयस्य वक्ष्यमाणानि सप्तविंशत्यादीनि त्रयोविंशतिः संक्रमस्थानानि, द्वाविंशत्या-

दीनि अष्टादश प्रतिग्रहस्थानानि । तत्र पञ्चविंशतिप्रकृत्यात्मकं संक्रमस्थानं साद्यादिचतुष्प्रकारं भवति । तथाहि—अष्टाविंशतिसत्कर्मणः सम्यक्त्वमिश्रयोरुद्वलनया भवदेतत्सादि, अनादिमिथ्यादृष्टेरनादि, अध्रुवध्रुवता तु भव्याभव्यापेक्षयेति । शेषाणि तु संक्रमस्थानानि कादाचित्कत्वेन साद्यध्रुवाणि । एकविंशतिप्रतिग्रहः साद्यादिरूपतया चतुर्विधः, तथाहि—सादिमिथ्यादृष्टेरुद्वलितयोः सम्यक्त्वमिश्रयोः सतोः षड्विंशतिसत्कर्मणः एकविंशतिरूपः प्रतिग्रहः सादिः, अनादिमिथ्यादृष्टेः षड्विंशतिसत्कर्मणोऽनादिः, ध्रुवाध्रुवावभव्यभव्यापेक्षया। शेषाणि प्रतिग्रहस्थानानि कादाचित्कत्वेन साद्यध्रुवाणि । नाम्नस्त्र्युत्तरशतादीनि वक्ष्यमाणानि द्वादशसंक्रमस्थानानि, त्रयोविंशत्यादीन्यष्टौ प्रतिग्रहस्थानानि । सर्वाणि कादाचित्कत्वेन साद्यध्रुवाणि । आयुषः संक्रमाभावेन न तद्विचारणापीति कृता साद्यादिप्ररूपणा ।

॥ मोहनीयसंक्रमस्थानानां साद्यादिभङ्गकयन्त्रम् ॥

| प्रकृतिस्थानसंक्रमः | सादिः | अध्रुवः | अनादिः | ध्रुवः |
|---|---|---|---|---|
| २७ | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| २६ | ,, | ,, | ० | ० |
| २५ | सम्यक्त्वमिश्रयोरुद्वलनात् | भव्यानां | अनादिमिथ्यादृष्टेः | अभव्यानाम् |
| २३ | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| २२ | ,, | ,, | ० | ० |
| २१ | ,, | ,, | ० | ० |
| २० | ,, | ,, | ० | ० |
| १९ | ,, | ,, | ० | ० |
| १८ | ,, | ,, | ० | ० |
| १४ | ,, | ,, | ० | ० |
| १३ | ,, | ,, | ० | ० |
| १२ | ,, | ,, | ० | ० |
| ११ | ,, | ,, | ० | ० |
| १० | ,, | ,, | ० | ० |
| ९ | ,, | ,, | ० | ० |
| ८ | ,, | ,, | ० | ० |
| ७ | ,, | ,, | ० | ० |
| ६ | ,, | ,, | ० | ० |
| ५ | ,, | ,, | ० | ० |
| ४ | ,, | ,, | ० | ० |
| ३ | ,, | ,, | ० | ० |
| २ | ,, | ,, | ० | ० |
| १ | ,, | ,, | ० | ० |

## ॥ मोहनीयस्य प्रतिग्रहस्थानानां साद्यादिभङ्गकयन्त्रम् ॥

| प्रकृतिस्थानप्रतिग्रहः | सादिः | अध्रुवः | अनादिः | ध्रुवः |
|---|---|---|---|---|
| २२ | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| २१ | उद्वलितमिश्रसम्यक्त्वस्य सादिमिथ्यादृष्टेः | भव्यानाम् | अनादिमिथ्यादृष्टेः | अभव्यानां |
| १९ | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| १८ | ,, | ,, | ० | ० |
| १७ | ,, | ,, | ० | ० |
| १५ | ,, | ,, | ० | ० |
| १४ | ,, | ,, | ० | ० |
| १३ | ,, | ,, | ० | ० |
| ११ | ,, | ,, | ० | ० |
| १० | ,, | ,, | ० | ० |
| ९ | ,, | ,, | ० | ० |
| ७ | ,, | ,, | ० | ० |
| ६ | ,, | ,, | ० | ० |
| ५ | ,, | ,, | ० | ० |
| ४ | ,, | ,, | ० | ० |
| ३ | ,, | ,, | ० | ० |
| २ | ,, | ,, | ० | ० |
| १ | ,, | ,, | ० | ० |

## ॥ नाम्नः संक्रमस्थानानां साद्यादिभङ्गकयन्त्रम् ॥

| स्थानसंक्रमः | सादिः | अध्रुवः | अनादिः | ध्रुवः |
|---|---|---|---|---|
| १०३ | कादाचित्कत्वात् | कादाचित्कत्वात् | ० | ० |
| १०२ | ,, | ,, | ० | ० |
| १०१ | ,, | ,, | ० | ० |
| ९६ | ,, | ,, | ० | ० |
| ९५ | ,, | ,, | ० | ० |
| ९४ | ,, | ,, | ० | ० |
| ९३ | ,, | ,, | ० | ० |
| ८९ | ,, | ,, | ० | ० |
| ८८ | ,, | ,, | ० | ० |
| ८४ | ,, | ,, | ० | ० |
| ८२ | ,, | ,, | ० | ० |
| ८१ | ,, | ,, | ० | ० |

॥ नाम्नः प्रतिग्रहस्थानानां साद्यादिभङ्गकयन्त्रम् ॥

| स्थानप्रतिग्रहः | सादिः | अध्रुवः | अनादिः | ध्रुवः |
|---|---|---|---|---|
| ३१ | ,, | ,, | ० | ० |
| ३० | ,, | ,, | ० | ० |
| २९ | ,, | ,, | ० | ० |
| २८ | ,, | ,, | ० | ० |
| २६ | ,, | ,, | ० | ० |
| २५ | ,, | ,, | ० | ० |
| २३ | ,, | ,, | ० | ० |
| १ | ,, | ,, | ० | ० |

॥ आयुषोऽन्यप्रकृतिनयनलक्षणसंक्रमाभावादेव नास्ति तद्विचारणा ॥

सर्वेषां कर्मणां सत्स्थानतुल्यानि संक्रमस्थानानि, बन्धस्थानतुल्यानि प्रतिग्रहस्थानानि भवन्ति, मुक्त्वा द्वितीयचतुर्थकर्मणी, तदुक्तं पञ्चसंग्रहे—"सत्तट्ठाणसमाइं संकमठाणाइ दोण्णि बीयस्स। बन्धसमा पडिग्गहगा अट्ठहिया दोवि मोहस्स ॥ १ ॥" इत्यतः सत्स्थानबन्धस्थानभणनपुरस्सरं संक्रमप्रतिग्रहस्थानभणनं, तद्भणनपूर्वकं च स्वामित्वं प्रतिपाद्यते—

तत्र ज्ञानावरणान्तराययोः प्रत्येकमेकैकं पञ्चप्रकृत्यात्मकं सत्स्थानं बन्धस्थानं च, एवं संक्रमस्थानं प्रतिग्रहस्थानं चैकैकं पञ्चप्रकृत्यात्मकं। द्वयोरपि पञ्चप्रकृत्यात्मकं संक्रमस्थानं पञ्चप्रकृत्यात्मके प्रतिग्रहस्थाने संक्रामति। पृथक्प्रकृतिविवक्षायां तु संक्रम्यमाणं मतिज्ञानावरणीयं स्वभिन्नचतुष्प्रकृत्यात्मके प्रतिग्रहे संक्रामति, एवं श्रुतज्ञानावरणादिचतुष्कमन्तरायपञ्चकं च बोध्यम्। एवं मतिज्ञानावरणीयरूपे एकप्रकृत्यात्मके प्रतिग्रहे स्वभिन्नचतुष्प्रकृत्यात्मकं संक्रमस्थानं संक्रामति, एवमेव श्रुतज्ञानावरणीयादिचतुष्के अन्तरायपञ्चके च ज्ञातव्यमिति। वेदनीयस्य द्विप्रकृत्यात्मकमेकप्रकृत्यात्मकं च सत्स्थानं, तत्र द्विप्रकृत्यात्मकं सत्स्थानमयोगिद्विचरमसमयं यावत्, एकप्रकृत्यात्मकं तु सत्तास्थानमयोगिचरमसमये। बन्धस्थानमेकप्रकृत्यात्मकं, संक्रमस्थानमबध्यमाना प्रकृतिः, बध्यमाना प्रकृतिस्तु प्रतिग्रहस्थानं भवति। गोत्रस्य द्विप्रकृत्यात्मकमेकप्रकृत्यात्मकं च द्वे सत्स्थाने, तत्रैकप्रकृत्यात्मकं सत्स्थानमुच्चैर्गोत्रे उद्वलिते क्षीणे वा भवति। बन्धस्थानं संक्रमस्थानं प्रतिग्रहस्थानं चैकैकमेव भवति। तत्र सत्तायां यावत् प्रकृतिद्वयं वर्तते यावच्च गोत्रबन्धो विद्यते तावदबध्यमाना प्रकृतिः संक्रमस्थानं बध्यमाना प्रकृतिः प्रतिग्रहस्थानम्। तेन बन्धाभावे उच्चैर्गोत्रे उद्वलिते वा न संक्रमस्थानं नापि प्रतिग्रहस्थानमिति। ज्ञानावरणान्तरायवेदनीयगोत्रकर्मणां संक्रमप्रतिग्रहस्थानानि अल्पवक्तव्यत्वेन क्रममुल्लङ्घ्य पूर्वं प्रतिपादितानि। आयुषः संक्रमाभावात् न तद्विचारणेति।

॥ दर्शनावरणमोहायुर्नामवर्जकर्मणां सत्स्थानादियन्त्रम् ॥

| | सत्स्थानम् | संक्रमस्थानम् | बन्धस्थानरूपेषु | प्रतिग्रहस्थानेषु |
|---|---|---|---|---|
| ज्ञानावरणान्तराययोः | ५-प्रकृत्यात्मकं १ | ५-प्र. १ | ५-प्र. १ | ५-प्र. १ |
| पृथग्विवक्षया | एकप्रकृत्यात्मकम् | एकप्रकृत्यात्मकम् | स्वभिन्नचतुष्के | स्वभिन्नचतुष्के |
| मतिज्ञानावरणस्य | ,, | ,, | ,, | ,, |
| श्रुतज्ञानावरणस्य | ,, | ,, | ,, | ,, |
| अवधिज्ञानावरणस्य | ,, | ,, | ,, | ,, |
| मनःपर्यवज्ञानावरणस्य | ,, | ,, | ,, | ,, |
| केवलज्ञानावरणस्य | ,, | ,, | ,, | ,, |
| वेदनीयगोत्रयोः | २ | अबध्यमाना प्रकृतिः संक्रामति | अन्यतरस्यां बध्यमानायां | अन्यतरस्यां बध्यमानायां |

अथ दर्शनावरणमोहनीयनाम्नां क्रमेण प्रतिपाद्यन्ते—तत्र दर्शनावरणीयस्य नवकषट्कचतुष्कलक्षणानि त्रीणि सत्स्थानानि । नवकषट्कलक्षणे द्वे संक्रमस्थाने । नवकषट्कचतुष्कलक्षणानि त्रीणि बन्धस्थानानि त्रीणि च प्रतिग्रहस्थानानि । तत्रोपशमश्रेण्यामुपशान्तमोहं यावत्, क्षपकश्रेण्यां पुनः स्त्यानर्द्धित्रिकं यावत् न क्षीयते तावत् नवप्रकृत्यात्मकं सत्स्थानं भवति, क्षीणे तु षट्प्रकृत्यात्मकं सत्स्थानं भवति, निद्राद्विके क्षीणे क्षीणमोहचरमसमये चतुष्प्रकृत्यात्मकं सत्स्थानं भवति । संक्रमस्थानं नवप्रकृत्यात्मकं षट्प्रकृत्यात्मकं च । तत्र नवकमुपशमश्रेण्यां सूक्ष्मसम्परायं यावत् षट्कं क्षपकश्रेण्यां स्त्यानर्द्धित्रिकक्षयानन्तरं संक्रामति । बन्धस्थानं नवप्रकृत्यात्मकं सासादनगुणस्थानकं यावत्, स्त्यानर्द्धित्रिकबन्धव्यवच्छेदे सम्यग्मिथ्यादृष्टिगुणस्थानकादारभ्यापूर्वकरणसंख्येयतमं भागं यावत् षट्प्रकृत्यात्मकं तथा अपूर्वकरणस्य संख्येयतमे भागे निद्राद्विकबन्धव्यवच्छेदे तत ऊर्ध्वं सूक्ष्मसम्परायं यावत् चतुष्प्रकृत्यात्मकं बन्धस्थानं भवति । बन्धस्थानवत् प्रतिग्रहस्थानान्यपि भावनीयानि । नवकं सत्तास्थानं नवकषट्कचतुष्कप्रतिग्रहेषु संक्रामति । षट्कं च चतुष्कप्रतिग्रहे संक्रामति ।

॥ दर्शनावरणीयस्य सत्स्थानादियन्त्रम् ॥

| | सत्स्थानानि ३ | संक्रमस्थाने २ | बन्धस्थानरूपेषु ३ | प्रतिग्रहस्थानेषु ३ |
|---|---|---|---|---|
| दर्शनावरणीयस्य | ९-६-४ | ९-६ | ९-६-४ | ९-६-४ |

मोहनीयस्य पञ्चदश सत्स्थानानि तद्यथा–अष्टाविंशतिः सप्तविंशतिः षड्विंशतिः चतुर्विंशतिस्त्रयोविंशतिः द्वाविंशतिरेकविंशतिः त्रयोदश द्वादश एकादश पञ्च चतस्रः तिस्रः द्वे एका चेति। तदुक्तं सप्ततिकायाम्–"अट्ठ य सत्त य छच्चउ तिग दुग एगाहिगा भवे वीसा। तेरस बारेक्कारस एत्तो पंचाइ इक्कूणा" ॥ १ ॥ तत्र सर्वप्रकृतिसमुदायोऽष्टाविंशतिः, सम्यक्त्वमोहनीये उद्वलिते सप्तविंशतिः, मिश्रमोहनीये उद्वलिते षड्विंशतिः, यद्वाऽनादिमिथ्यादृष्टेः षड्विंशतिः, अष्टाविंशतिसत्कर्मणोऽनन्तानुबन्धिनामुद्वलिते सति चतुर्विंशतिः, मिथ्यात्वमोहनीये क्षीणे त्रयोविंशतिः, मिश्रमोहनीये क्षपिते द्वाविंशतिः, सम्यक्त्वे क्षपिते एकविंशतिः, अप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टके क्षीणे त्रयोदश, नपुंसकवेदे क्षीणे द्वादश, स्त्रीवेदे क्षीणे एकादश, हास्यादिषट्के पञ्च, पुरुषवेदे क्षीणे सति चतस्रः, संज्वलनक्रोधे क्षपिते तिस्रः संज्वलनमाने क्षपिते द्वे, मायायां क्षीणायां सत्यां संज्वलनलोभरूपैकैवेति।

मोहनीयस्य पञ्चदश सत्त्वस्थानानि

| | |
|---|---|
| २८ | सर्वप्रकृतिसमुदायः |
| २७ | सम्यक्त्वव्यतिरिक्ताः |
| २६ | सम्यक्त्वमिश्रव्यतिरिक्ताः |
| २४ | अनन्तानुबन्धिचतुष्कव्यतिरिक्ताः |
| २३ | अनन्तानुबन्धिचतुष्कमिथ्यात्वव्यतिरिक्ताः |
| २२ | अन० च० मि० मिश्रव्यतिरिक्ताः |
| २१ | अन० दर्शनत्रिकव्यतिरिक्ताः |
| १३ | आद्यद्वादशकषायदर्शनत्रिकव्यतिरिक्ताः |
| १२ | आद्यद्वादशकषायदर्शनत्रिकनपुंसकवेदव्यतिरिक्ताः |
| ११ | संज्वलनचतुष्कस्त्रीनपुंसकवर्जनोकषायाः |
| ५ | पुंवेदसंज्वलनचतुष्करूपाः |
| ४ | संज्वलनचतुष्करूपाः |
| ३ | संज्वलनमानमायालोभरूपाः |
| २ | संज्वलनमायालोभरूपे |
| १ | लोभरूपैकैव |

संक्रमस्थानानि त्रयोविंशतिः, तद्यथा–सप्तविंशतिः षड्विंशतिः पञ्चविंशतिः त्रयोविंशतिः द्वाविंशतिरेकविंशतिः विंशतिरेकोनविंशतिरष्टादश चतुर्दश त्रयोदश द्वादश एकादश दश नवाष्टौ सप्त षट् पञ्च चतस्रः तिस्रः द्वे एका चेति। तदुक्तं कर्म्मप्रकृतौ– "अट्ठचउरहियवीसं सत्तरसं सोलसं च पन्नरसं। वज्जि य संकमट्ठाणाइं होन्ति तेवीसइं मोहे ॥१॥" इति। सम्यक्त्वमिश्रानन्तानुबन्धिनामुद्वलनतः, मिथ्यात्वमिश्रक्षपणतः, औपशमिकसम्यग्दृष्टेरावलिकाभ्यन्तरवर्तिनः श्रेण्योरन्तरकरणे कृते संज्वलनलोभासंक्रमतः, उपशान्तयोर्मिथ्यात्वमिश्रयोः संक्रमतः, उपशान्तसम्यक्त्वमोहनीयस्यान्यप्रकृतिरूपसंक्रमाभावेन तद्वर्जनं कृतं, सप्तानां नोकषायाणां क्षपणत इत्यादिकं परिभाव्य संक्रमस्थानानि परिभावनीयानि। तथाहि–अष्टाविंशतिसत्कर्मणो मिथ्यादृष्टेः मिथ्यात्वस्य सम्यक्त्वमिश्रयोः प्रतिग्रहत्वेन तद्व्यतिरिक्ताः शेषाः सप्तविंशतिः संक्रमे लभ्यन्ते चारित्रमोहनीयं परस्परं संक्रामति, सम्यक्त्वमिश्ररूपं प्रकृतिद्वयं मिथ्यात्वमोहनीये पल्यो-

पमासंख्येयभागं कालं यावत् संक्रामति । यद्वौपशमिकसम्यग्दृष्टेरष्टाविंशतिसत्कर्मण आवलिकाया ऊर्ध्वं सम्यक्त्वमोहनीयस्य मिथ्यात्वमिश्रयोः प्रतिग्रहत्वेन तद्व्यतिरिक्ताः शेषाः सप्तविंशतिः संक्रामति, तथाहि–पञ्चविंशतिः प्रकृतयः बध्यमाने चारित्रमोहनीये संक्रामन्ति, मिथ्यात्वं मिश्रे सम्यक्त्वे च मिश्रं सम्यक्त्वे उपशान्ताद्धां यावत् संक्रामति, परतो वेदकसम्यग्दृष्टित्वादिभवनात् । वेदकसम्यग्दृष्टेरुत्कर्षतः साधिकषट्षष्टिसागरोपमं यावत् तयोः संक्रमो भवति । सम्यक्त्वमोहनीये उद्वलिते सति सप्तविंशतिसत्कर्मणो मिथ्यादृष्टेर्मिश्रमोहनीयस्य मिथ्यात्वं प्रतिग्रहत्वे कृतमिति तदपनीय शेषाः षड्विंशतिः प्रकृतयः पल्योपमासंख्येयभागं यावत् संक्रामन्ति । तत्र चारित्रमोहनीयं बध्यमाने चारित्रमोहनीये, मिश्रं च मिथ्यात्वे संक्रामति । यद्वौपशमिकसम्यग्दृष्टेरष्टाविंशतिसत्कर्मण आवलिकाया अभ्यन्तरे वर्तमानस्य मिश्रं सम्यक्त्वमोहनीये न संक्रामति, यतो मिथ्यात्वपुद्गलाः सम्यक्त्वानुगतविशोधिना(सम्यक्त्वानुकूलविशोधिना वा सम्यक्त्वप्राप्त्युपान्तसमय इति कर्म्मप्रकृतिकाराभिप्रायेण) मिश्ररूपपरिणामान्तरापादिताः, परिणामान्तरापादनं च संक्रमः, संक्रमावलिकागतं सकलकरणायोग्यमिति कृत्वा सम्यक्त्वप्राप्तेरारभ्यावलिकाया अभ्यन्तरे वर्तमानो मिथ्यात्वमेव केवलं सम्यक्त्वे संक्रामत्यतस्तद्वर्जाः षड्विंशतिरावलिकामात्रं यावत् संक्रामति । मिश्रमोहनीये उद्वलिते सति षड्विंशतिसत्कर्मणो मिथ्यादृष्टेः पञ्चविंशतिः प्रकृतयो बध्यमाने चारित्रमोहनीये उत्कर्षतो देशोनार्धपुद्गलपरावर्तं यावत् संक्रामन्ति । यद्वाऽनादिमिथ्यादृष्टेः षड्विंशतिसत्ताकस्य चारित्रमोहसत्काः पञ्चविंशतिः प्रकृतयो बध्यमाने चारित्रमोहनीयेऽनन्तं कालं यावत् संक्रामन्ति । चतुर्विंशतिसंक्रमस्थानं नास्त्येव, यतो विसंयोजितानन्तानुबन्धिनश्चतुर्विंशतिसत्ताकस्य सम्यग्दृष्टेः सम्यक्त्वमोहनीयस्य प्रतिग्रहत्वेन तद्वर्जशेषत्रयोविंशतिप्रकृतीनां संक्रमो भवति, साधिकषट्षष्टिसागरोपमं यावत् । ननु चतुर्विंशतिसत्त्वस्थानं साधिकद्विषट्षष्टिसागरोपमं यावद्भवति, ततस्त्रयोविंशतिसंक्रमस्थानमपि कथमेतावन्तं कालं न संक्रामतीति चेत्? सत्यं, परं मिश्रगमनेनैतावान् कालः पूर्यते, तत्र च चतुर्विंशतिसत्ताकस्यैकविंशतेरेव संक्रमो भवति, दर्शनमोहनीयसंक्रमाभावादिति । चतुर्विंशतिसत्कर्मा सम्यग्दृष्टिर्मिथ्यात्वं गतः सन् यद्यपि अनन्तानुबन्धिनो भूयोऽपि बध्नाति तथापि तान् सतोऽपि न संक्रमयति, बन्धावलिकागतं सकलकरणायोग्यमिति कृत्वा, मिथ्यात्वं च सम्यक्त्वमिश्रयोः प्रतिग्रह इति तस्मिन्नपसारिते शेषाः त्रयोविंशतिरावलिकामात्रं यावत् संक्रामति । चतुर्विंशतिसत्ताकस्य सम्यग्दृष्टेर्मिथ्यात्वे क्षीणे मिश्रस्य सम्यक्त्वं प्रतिग्रह इति तस्मिन्नपसारिते शेषा द्वाविंशतिप्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति । यद्वाष्टाविंशतिसत्ताकस्य चतुर्विंशतिसत्ताकस्य वौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यामन्तरकरणे कृते संज्वलनलोभस्य संक्रमाभावेनानन्तानुबन्धिनामुपशान्तत्वेन विसंयोजितत्वेन वा सम्यक्त्वस्य प्रतिग्रहत्वेन शेषा द्वाविंशतिः प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति । अन्तरकरणे च कृते नपुंसकवेदे उपशान्ते चतुर्विंशतिसत्ताकस्याष्टाविंशतिसत्ता-

कस्य वान्तर्मुहूर्तं यावदेकविंशतिः प्रकृतयः संक्रमयन्ति । यद्वा वेदकसम्यग्दृष्टेः द्वाविंशतिसत्ताकस्य सम्यक्त्वस्य प्रतिग्रहाभावेन संक्रमाभावात् शेषा एकविंशतिः प्रकृतयोऽन्तर्मुहूर्तं यावत्संक्रामन्ति । यद्वोपशमश्रेण्यामेकविंशतिसत्ताकस्य क्षायिकसम्यग्दृष्टेरन्तरकरणादर्वागन्तर्मुहूर्तं यावदेकविंशतिः प्रकृतयः संक्रामन्ति, यद्वा क्षायिकसम्यग्दृष्टेरेकविंशतिसत्ताकस्य मध्यमकषायाष्टकक्षयादर्वागेकविंशतिः प्रकृतयः साधिकत्रयस्त्रिंशत्सागरोपमं यावत् संक्रामन्ति । अष्टाविंशतिसत्ताकस्य चतुर्विंशतिसत्ताकस्य वौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्योपशान्ते नपुंसकवेदे स्त्रीवेदे चानन्तानुबन्धिचतुष्टयसंज्वलनलोभपुंवदवर्जवेदद्विकसम्यक्त्वमोहनीयवर्जाः शेषा विंशतिः प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति । ननूपशमश्रेण्यामौपशमिकसम्यग्दृष्टेः सप्तकप्रतिग्रहे विंशतिः प्रकृतयोऽन्तर्मुहूर्तं यावत्संक्रामन्तीति तस्यैव षट्कप्रतिग्रहे विंशतिः प्रकृतयः समयोनावलिकाद्विकं यावत् संक्रमयन्तीति च वक्ष्यमाणत्वेनोभयमीलने विंशतेः प्रकृतीनां संक्रमकालः समयोनावलिकाद्विकाभ्यधिकान्तर्मुहूर्तं प्राप्नोतीति चेत् ? सत्यम्, समयोनावलिकाद्विकस्यान्तर्मुहूर्तान्तर्भूतत्वेन न दोषः । एवमेवाग्रेऽपि वाच्यम् । नन्वेतत्कालमानं कर्मप्रकृत्तिवृत्तिद्वये पञ्चसंग्रहबृहद्वृत्तौ चानुक्तत्वेन कुतोऽवसितम् ? इति चेत् पञ्चसंग्रहमूलवृत्तेः । तदुक्तं "ततस्त्रीवेदे उपशान्ते विंशतिः तत्रैव सप्तकेऽन्तर्मुहूर्तं संक्रामति । ततः पुरुषवेदस्य समयोनद्व्यावलिकशेषायां प्रथमस्थितौ प्रतिग्रहताऽपगच्छति, सा एव विंशतिः संज्वलनदृष्टिद्विकात्मके षट्प्रतिग्रहे समयोनद्व्यावलिकाकालं संक्रामति" इति । यद्वैकविंशतिसत्ताकस्य क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्यान्तरकरणे च कृते संज्वलनलोभस्य संक्रमाभावेन चारित्रमोहनीयस्य विंशतिः प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति । एकविंशतिसत्ताकस्य क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य नपुंसकवेदे उपशान्ते एकोनविंशतिः प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति । क्षायिकसम्यग्दृष्टेरेव स्त्रीवेदे चोपशान्ते शेषा अष्टादश प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति । औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य हास्यादिषट्के चोपशान्तेऽनन्तानुबन्धिचतुष्टयसंज्वलनलोभनपुंसकवेदस्त्रीवेदहास्यादिषट्कसम्यक्त्वमोहनीयप्रकृतीरन्तरेण शेषाश्चतुर्दश प्रकृतयः समयोनावलिकाद्विकं यावत्संक्रामन्ति । औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य पुंवेदे उपशान्ते शेषाः त्रयोदशप्रकृतयोऽन्तर्मुहूर्तं यावत्संक्रामन्ति । यद्वा कषायाष्टकक्षयानन्तरं त्रयोदशसत्ताकस्य क्षायिकसम्यग्दृष्टेः क्षपकश्रेण्यामन्तरकरणादर्वाक् त्रयोदश प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति । कृते चान्तरकरणे संज्वलनलोभस्य संक्रमाभावेन शेषा द्वादश प्रकृतयोऽन्तर्मुहूर्तं यावत्संक्रामन्ति । यद्वा क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य हास्यादिषट्के उपशान्ते शेषा द्वादश प्रकृतयः समयोनावलिकाद्विकं यावत् संक्रामन्ति । ततः पुंवेदे उपशान्ते शेषा एकादश प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति । यद्वा नपुंसकवेदे क्षीणे द्वादशसत्ताकस्य क्षपकस्य शेषा एकादश प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति । यद्वौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्त-

मानस्य प्रागुक्ताभ्यस्त्रयोदशभ्यो मध्यमेऽप्रत्याख्यानावरणप्रत्याख्यानावरणलक्षणे क्रोधद्विके उपशान्ते शेषा एकादश प्रकृतयः समयोनावलिकाद्विकं यावत् संक्रामन्ति। क्षपकश्रेण्यामेकादशसत्ताकस्य स्त्रीवेदे क्षपिते हास्यादिषट्कपुंवेदसंज्वलनक्रोधमानमायारूपा दश प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति। यद्वौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य संज्वलनक्रोधे उपशान्तेऽप्रत्याख्यानप्रत्याख्यानावरणमानमायालोभसंज्वलनमानमायामिथ्यात्वमिश्ररूपा दश प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति। क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्याप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विके उपशान्तेऽप्रत्याख्यानप्रत्याख्यानावरणमानमायालोभसंज्वलनक्रोधमानमायारूपाः नव प्रकृतयः समयोनावलिकाद्विकं यावत् संक्रामन्ति। तस्यैव संज्वलनक्रोधे उपशान्ते अष्टौ प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति। यद्वौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्याप्रत्याख्यानप्रत्याख्यानावरणमानद्विके उपशान्तेऽप्रत्याख्यानप्रत्याख्यानावरणमायालोभसंज्वलनमानमायामिथ्यात्वमिश्ररूपा अष्टौ प्रकृतयः समयोनावलिकाद्विकं यावत् संक्रामन्ति। तस्यैव संज्वलनमाने उपशान्ते शेषाः सप्त प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति। क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्याप्रत्याख्यानप्रत्याख्यानावरणमानद्विके उपशान्तेऽप्रत्याख्यानप्रत्याख्यानावरणमायालोभसंज्वलनमानमायारूपाः षट्प्रकृतयः समयोनावलिकाद्विकं यावत् संक्रामन्ति। तस्यैव संज्वलनमाने उपशान्ते शेषाः पञ्च प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति। यद्वौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्याप्रत्याख्यानप्रत्याख्यानावरणरूपे मायाद्विके उपशान्तेऽप्रत्याख्यानप्रत्याख्यानावरणलोभसंज्वलनमायामिथ्यात्वमिश्ररूपाः पञ्च प्रकृतयः समयोनावलिकाद्विकं यावत् संक्रामन्ति। तस्यैव संज्वलनमायायामुपशान्तायां मध्यमलोभद्वयमिथ्यात्वमिश्ररूपाश्चतस्रः प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति। यद्वा हास्यादिषट्के क्षीणे पञ्चसत्ताकस्य क्षपकश्रेण्यां वर्तमानस्य पुंवेदसंज्वलनक्रोधमानमायारूपाश्चतस्रः प्रकृतयः समयोनावलिकाद्विकं यावत् संक्रामन्ति। नन्वेतत् कालमानं कुतोऽवसितमिति चेत्? पञ्चसङ्ग्रहमूलवृत्तितः, तदुक्तम्—"ततो हास्यादिषट्के क्षपिते चत्वारि (चतस्रः समयोन) द्व्यावलिकाकालं तस्मिन्नेव चतुष्कप्रतिग्रहे संक्रामन्ति" इति। पुंवेदे क्षपिते चतुःसत्ताकस्य क्षपकस्य संज्वलनक्रोधमानमायारूपं प्रकृतित्रिकमन्तर्मुहूर्तं कालं यावत् संक्रामति। यद्वा क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्याऽप्रत्याख्यानप्रत्याख्यानावरणमायाद्विके उपशान्तेऽप्रत्याख्यानप्रत्याख्यानावरणलोभद्विकसंज्वलनमायारूपं प्रकृतित्रिकं समयोनावलिकाद्विकं यावत् संक्रामति। अस्यैव संज्वलनमायायामुपशान्तायामप्रत्याख्यानप्रत्याख्यानावरणलोभद्विकमन्तर्मुहूर्तं कालं यावत् संक्रामति। यद्वौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्याप्रत्याख्यानप्रत्याख्यानावरणलोभद्विके उपशान्ते मिथ्यात्वमिश्ररूपं प्रकृतिद्वयमन्तर्मुहूर्तं यावत् संक्रामति। यद्वा संज्वलनक्रोधे क्षपिते त्रिकसत्ताकस्य क्षपकस्य संज्वलनमानमायारूपं प्रकृतिद्वयमन्तर्मुहूर्तं यावत् संक्रामति। संज्वलन-

मानें क्षपिते द्विकसत्ताकस्य क्षपकस्यैकैव संज्वलनमायारूपान्तर्मुहूर्तं यावत्कालं संक्रामतीति मोहनीयस्य संक्रमस्थानविधिरुक्ता ।

## ॥ मोहनीयस्य सत्स्थानादियन्त्रम् ॥

| सत्स्थानानि | प्रकृतयः | संक्रमस्थानानि | प्रकृतयः | कालमानम् | गुणस्थानकादिविवक्षया स्वामित्वम् |
|---|---|---|---|---|---|
| २८ | सर्वप्रकृतिसमुदायः | २७ | मिथ्यात्वव्यतिरिक्ताः | पल्योपमासंख्येयभागं यावत् | मिथ्यादृष्टिः |
| २८ | ,, | २७ | सम्यक्त्वव्यतिरिक्ताः | आवलिकावर्जोपशमसम्यक्त्वकालं यावत् | उपशमसम्यग्दृष्टिः |
| २८ | ,, | २७ | ,, | साधिकषट्षष्टिसागरोपमं यावत् | वेदकसम्यग्दृष्टिः |
| २७ | सम्यक्त्वव्यतिरिक्ताः | २६ | मिथ्यात्वसम्यक्त्वव्यतिरिक्ताः | पल्योपमासंख्येयभागं यावत् | मिथ्यादृष्टिः |
| २८ | सर्वप्रकृतिसमुदायः | २६ | मिश्रसम्यक्त्वव्यतिरिक्ताः | आवलिकामात्रं यावत् | औपशमिकसम्यग्दृष्टिः |
| २६ | सम्यक्त्वमिश्रव्यतिरिक्ताः | २५ | दर्शनमोहव्यतिरिक्ताः | अर्द्धपुद्गलपरावर्तं यावदभव्यमाश्रित्यानन्तकालं यावत् | उद्वलितमिश्रमोहनीययोर्मिथ्यादृष्टिरभव्याश्च |
| २४ | अनन्तानुबन्धिव्यतिरिक्ताः | २३ | अनन्तानुबन्धिसम्यक्त्वव्यतिरिक्ताः | साधिकषट्षष्टिसागरोपमं यावत् | विसंयोजितानन्तानुबन्धिसम्यग्दृष्टिः |
| २८ | सर्वप्रकृतिसमुदायः | २३ | अनन्तानुबन्धिमिथ्यात्वव्यतिरिक्ताः | आवलिकामात्रं यावत् | विसंयोजितानन्तानुबन्धिसम्यग्दृष्टिः मिथ्यात्वं गतः |
| २३ | अनन्तानुबन्धिमिथ्यात्वव्यतिरिक्ताः | २२ | अनन्तानुबन्धिमिथ्यात्वसम्यक्त्वव्यतिरिक्ताः | अन्तर्मुहूर्तं यावत् | सम्यग्दृष्टिः |
| २८ | सर्वप्रकृतिसमुदायः | २२ | अन० सम्यक्त्वसंज्वलनलोभव्यतिरिक्ताः | अन्तर्मुहूर्तं यावत् | उपशमश्रेणावन्तरकरणे कृते सति नवमगुणस्थानवर्ति |
| २४ | अनन्तानुबन्धिव्यतिरिक्ताः | २२ | ,, | ,, | ,, |

| | | | | | |
|---|---|---|---|---|---|
| २८ | सर्वप्रकृतिसमुदायः | २१ | अन० सम्यक्त्वसंज्वलनलोभनपुंसकवेदव्यतिरिक्ताः | ,, | नपुंसकवेदे उपशान्तेऽनिवृत्तिबादरः |
| २४ | अनन्तानुबन्धिव्यतिरिक्ताः | २१ | ,, | ,, | ,, |
| २२ | अनन्तानुबन्धिमिथ्यात्वमिश्रव्यतिरिक्ताः | २१ | अन० दर्शनत्रिकव्यतिरिक्ताः | ,, | वेदकसम्यग्दृष्टिः |
| २१ | अनन्तानुबन्धिदर्शनत्रिकव्यतिरिक्ताः | २१ | ,, | ,, | उपशमश्रेण्यामन्तरकरणादर्वाक्क्षायिकसम्यग्दृष्टिः |
| २१ | ,, | २१ | ,, | साधिकत्रयस्त्रिंशत्सागरोपमं यावत् | क्षायिकसम्यग्दृष्टिः कषायाष्टकक्षयादर्वाक् |
| २८ | सर्वप्रकृतिसमुदायः | २० | अन० स्त्रीनपुंसकसंज्वलनलोभसम्यक्त्ववर्जाः शेषाः | अन्तर्मुहूर्तं यावत् | उपशमश्रेण्यामौपशमिकसम्यग्दृष्टिः |
| २४ | अनन्तानुबन्धिव्यतिरिक्ताः | २० | ,, | ,, | ,, |
| २१ | अनन्तानुबन्धिदर्शनत्रिकव्यतिरिक्ताः | २० | अन० संज्वलनलोभदर्शनत्रिकव्यतिरिक्ताः | ,, | उपशमश्रेण्यां क्षायिकसम्यग्दृष्टिरन्तरकरणे कृते सति |
| २१ | ,, | १९ | अन० दर्शनत्रिकसंज्वलनलोभनपुंसकवेदव्यतिरिक्ताः | ,, | ,, |
| २१ | ,, | १८ | अन० दर्शनत्रिकसंज्वलनलोभनपुंसकस्त्रीवेदवर्जाः | ,, | ,, |
| २८ | सर्वप्रकृतिसमुदायः | १४ | अन० सम्यक्त्वसंज्वलनलोभस्त्रीनपुंसकवेदहास्यषट्कवर्जाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेण्यामुपशमसम्यग्दृष्टिः |
| २४ | अनन्तानुबन्धिव्यतिरिक्ताः | १४ | ,, | ,, | ,, |

| | | | | | |
|---|---|---|---|---|---|
| २८ | सर्वप्रकृतिसमुदायः | १३ | पूर्वोक्ताः पुंवेदश्च व-र्जाः शेषाः | अन्तर्मुहूर्तं यावत् | ” |
| २४ | आद्यकषायविहीनाः | १३ | ” | ” | ” |
| १३ | संज्वलनचतुष्कनव-नोकषायाः | १३ | संज्वलनचतुष्कनव-नोकषायाः | ” | क्षपकश्रेण्यामन्तरक-रणात्पूर्वं मध्यम-कषायाष्टकक्षया-दनन्तरम् |
| १३ | ” | १२ | संज्वलनलोभहीनाः पूर्वोक्ताः | ” | क्ष० श्रे० अन्तरकर-णादनन्तरम् |
| २१ | अन० दर्शनत्रिकव-र्जाः शेषाः | १२ | पुंवेदमध्यमकषाया-ष्टकलोभवर्जसंज्व-लनत्रिकरूपाः | समयोनावलिकाद्विकं यावत् | उ. श्रे. क्षा. स. दृष्टेः हास्यादिषट्के उप-शान्ते |
| २१ | ” | ११ | पुंवेदवर्जाः पूर्वोक्ताः | अन्तर्मुहूर्तं यावत् | उ. श्रे. क्षा. पुंवेदे उपशान्ते सति |
| १२ | संज्वलनचतुष्कनपुं-सकवर्जनोकषायाः | ११ | संज्वलनक्रोधमान-मायानपुंसकवर्ज-नोकषायाः | ” | नपुंसकवेदे क्षीणे क्ष-पकश्रेण्याम् |
| २८ | सर्वप्रकृतिसमुदायः | ११ | मध्यममानमायालो-भसंज्वलनक्रोध-मानमायामिथ्या-त्वमिश्ररूपाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेण्यामौप-शमिकसम्यग्दृष्टेः मध्यमक्रोधद्विके उपशान्ते |
| २४ | अनन्तानुबन्धिव्य-तिरिक्ताः | ११ | ” | ” | ” |
| ११ | हास्यादिषट्कपुंवेदसं-ज्वलनचतुष्करूपाः | १० | हास्यादिषट्कपुंवेदलो-भवर्जसंज्वलनत्रि-करूपाः | अन्तर्मुहूर्तं यावत् | क्षपकश्रेण्यामनिवृ-त्तिबादरः |
| २८ | सर्वप्रकृतिसमुदायः | १० | मध्यममानमायालो-भसंज्वलनमान-मायामिथ्यात्वमि-श्ररूपाः | ” | उपशमश्रेण्यामुपश-मसम्यग्दृष्टिः |
| २४ | अनन्तानुबन्धिव्यति-रिक्ताः | १० | ” | ” | ” |

| | | | | | |
|---|---|---|---|---|---|
| २१ | अन० दर्शनत्रिकव्यतिरिक्ताः | ९ | मध्यममानमायालोभसंज्वलनक्रोधमानमायाख्याः | समयोनावलिकाद्विकं यावत् | उपशमश्रेणौ क्षायिकसम्यग्दृष्टिः |
| २१ | ,, | ८ | संज्वलनक्रोधव्यतिरिक्ताः पूर्वोक्ताः | अन्तर्मुहूर्तं यावत् | ,, |
| २८ | सर्वप्रकृतिसमुदायः | ८ | मध्यममायालोभसंज्वलनमानमायामिथ्यात्वमिश्ररूपाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेणावुपशमसम्यग्दृष्टिः |
| २४ | अन० व्यतिरिक्ताः | ८ | ,, | ,, | ,, |
| २८ | सर्वप्रकृतिसमुदायः | ७ | मध्यममायालोभसंज्वलनमायामिथ्यात्वमिश्राख्याः | अन्तर्मुहूर्तं यावत् | ,, |
| २४ | अन० व्यतिरिक्ताः | ७ | ,, | ,, | ,, |
| २१ | अन० दर्शनत्रिकवर्जाः | ६ | मध्यममायालोभसंज्वलनमानमायारूपाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेणौ क्षायिकसम्यग्दृष्टिः |
| २१ | ,, | ५ | संज्वलनमानवर्जपूर्वोक्ताः | अन्तर्मुहूर्तं यावत् | ,, |
| २८ | सर्वप्रकृतिसमुदायः | ५ | मध्यमलोभद्विकसंज्वलनमायामिथ्यात्वमिश्ररूपाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेणावुपशमसम्यग्दृष्टिः |
| २४ | अनन्ता० व्यतिरिक्ताः | ५ | ,, | ,, | ,, |
| २८ | सर्वप्रकृतिसमुदायः | ४ | मध्यमलोभद्विकमिथ्यात्वमिश्ररूपाः | अन्तर्मुहूर्तं यावत् | ,, |
| २४ | अनन्तानुबन्धिव्यतिरिक्ताः | ४ | ,, | ,, | ,, |
| ५ | पुंवेदसंज्वलनचतुष्करूपाः | ४ | पुंवेदसंज्वलनक्रोधमानमायारूपाः | समयोनावलिकाद्विकं यावत् | क्षपकश्रेण्यामनिवृत्तिबादरः |

| | | | | | |
|---|---|---|---|---|---|
| ४ | संज्वलनचतुष्करूपाः | ३ | संज्वलनक्रोधमान-मायारूपाः | अन्तर्मुहूर्तं यावत् | ,, |
| २१ | अन० दर्शनत्रिकव्य-तिरिक्ताः | ३ | मध्यमलोभद्विकसं-ज्वलनमायारूपाः | समयोनावलिकाद्विकं यावत् | उपशमश्रेणौ क्षायि-कसम्यग्दृष्टिः |
| २१ | ,, | २ | मध्यमलोभद्विकं | अन्तर्मुहूर्तं यावत् | ,, |
| २८ | सर्वप्रकृतिसमुदायः | २ | मिथ्यात्वमिश्ररूपम् | ,, | उपशमश्रेणावुपशम-सम्यग्दृष्टिः |
| २४ | अन० वर्जाः | २ | ,, | ,, | ,, |
| ३ | संज्वलनमानमाया-लोभरूपम् | २ | संज्वलनमायालोभ-रूपौ | ,, | क्षपकश्रेणावनिवृत्ति-बादरः |
| २ | संज्वलनमानमाया-रूपम् | १ | संज्वलनमायारूपा | ,, | ,, |

अथ मोहबन्धस्थानानि प्रोच्यन्ते । मोहनीयस्य बन्धस्थानानि दश भवन्ति, तद्यथा—द्वाविंशतिप्रकृत्यात्मकं, एकविंशतिप्रकृत्यात्मकं, सप्तदशप्रकृत्यात्मकं, त्रयोदशप्रकृत्यात्मकं, नवप्रकृत्यात्मकं, पञ्चप्रकृत्यात्मकं, चतुष्प्रकृत्यात्मकं, प्रकृतित्रिकलक्षणं, द्विप्रकृत्यात्मकं, एकप्रकृत्यात्मकमिति । तदुक्तं "बावीस एक्कवीसा सत्तरस तेरसेव नव पंच । चउ तिगदुगं च एगं बन्धट्ठाणाणि मोहस्स ॥१॥" इति । तत्र षोडशकषायभयजुगुप्सामिथ्यात्वान्यतमवेदहास्यरतियुगलारतिशोकयुगलान्यतरयुगलरूपं द्वाविंशतिप्रकृत्यात्मकं भवति । तदेव मिथ्यात्ववर्जमेकविंशतिप्रकृत्यात्मकं भवति, केवलं स्त्रीपुंवेदयोरन्यतरो वेद इति । तदेव अनन्तानुबन्धिकषायचतुष्टयविरहितं सप्तदशप्रकृत्यात्मकं भवति, इतः प्रारभ्य सर्वत्र पुंवेद एवैकः । अप्रत्याख्यानावरणकषायचतुष्टयमन्तरेण तदेव त्रयोदशप्रकृत्यात्मकं भवति । तन्मध्यात् प्रत्याख्यानावरणचतुष्टयबन्धव्यवच्छेदे नवप्रकृत्यात्मकं भवति । ततो हास्यादिबन्धव्यवच्छेदे पुंवेदसंज्वलनचतुष्टयरूपं पञ्चप्रकृत्यात्मकं भवति । ततः पुरुषवेदस्य बन्धव्यवच्छेदे पुंवर्जं चतुष्प्रकृत्यात्मकं भवति । संज्वलनक्रोधबन्धव्यवच्छेदे सति त्रिप्रकृत्यात्मकं भवति । मानबन्धव्यवच्छेदे सति द्विप्रकृत्यात्मकं भवति । मायाबन्धव्यवच्छेदे सति एकप्रकृत्यात्मकं बन्धस्थानं भवतीति ।

## ॥ मोहनीयस्य बन्धस्थानयन्त्रम् ॥

| | |
|---|---|
| २२ | कषायभयजुगुप्सान्यतमवेदान्यतरयुगलमिथ्यात्वरूपाः । |
| २१ | षोडश कषायाः भयजुगुप्से स्त्रीपुंवेदयोरन्यतरवेदोऽन्यतरयुगलमिति । |
| १७ | प्रथमचतुष्कवर्जद्वादशकषायाः १२ भयजुगुप्सेऽन्यतरयुगलं पुंवेदश्चेति । |
| १३ | अनन्तानुबन्ध्यप्रत्याख्यानकषायवर्जाः पूर्वोक्ता एकविंशतिः । |
| ९ | संज्वलनचतुष्कपुंवेदभयजुगुप्सान्यतरयुगलमिति । |
| ५ | पुंवेदः संज्वलनचतुष्करूपाः । |
| ४ | संज्वलनचतुष्कम् । |
| ३ | क्रोधवर्जत्रिकम् । |
| २ | क्रोधमानवर्जद्विकम् । |
| १ | लोभरूपम् । |

मोहनीयस्य प्रतिग्रहस्थानान्यष्टादश भवन्ति तद्यथा—द्वाविंशतिप्रकृत्यात्मकमेकविंशतिप्रकृत्यात्मकमेकोनविंशतिप्रकृत्यात्मकमष्टादशप्रकृत्यात्मकं सप्तदशप्रकृत्यात्मकं पञ्चदशप्रकृत्यात्मकं चतुर्दशप्रकृत्यात्मकं त्रयोदशप्रकृत्यात्मकमेकादशप्रकृत्यात्मकं दशप्रकृत्यात्मकं नवप्रकृत्यात्मकं सप्तप्रकृत्यात्मकं षट्प्रकृत्यात्मकं पञ्चप्रकृत्यात्मकं चतुष्प्रकृत्यात्मकं त्रिप्रकृत्यात्मकं द्विप्रकृत्यात्मकं एकप्रकृत्यात्मकमिति । प्रतिग्रहस्थानान्यपि बन्धस्थानवत् भावनीयानि । नवरमौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यन्तर्वर्तिनो बहिर्वर्तिनो वा वेदकसम्यग्दृष्टेश्च मिश्रसम्यक्त्वयुताः, वेदकसम्यग्दृष्टेर्मिथ्यात्वे क्षीणे वा सम्यक्त्वयुताः प्रतिग्रहा भवन्ति । तदुक्तम्—"खवगस्स सबन्धच्चिय उवसमसेढीए सम्ममीसजुया । मिच्छखवगे सम्मा अट्ठारस इय पडिग्गहया ॥ १ ॥" व्याख्या—क्षपकस्य क्षीणसप्तकस्य चारित्रमोहनीयक्षपकस्य च स्वबन्धा एव—आत्मीया एव बन्धाः पतद्ग्रहा भवन्ति । तत्र क्षीणसप्तकानामविरतदेशविरतसंयतानां यथाक्रमं सप्तदशत्रयोदशनवाख्याः, चारित्रमोहनीयक्षपकस्य तु पञ्चचतुस्त्रिव्येकरूपाः । तथोपशमश्रेण्यामौपशमिकसम्यग्दृष्टीनां क्षपकसत्का एव पञ्चादयः पतद्ग्रहाः सम्यक्त्वमिश्रयुता वेदितव्याः, तथा च सति तेष सप्तषट्पञ्चचतुस्त्रिरूपाः पतद्ग्रहा भवन्ति । तथा मिथ्यात्वक्षपके क्षीणे मिथ्यात्वेऽविरतदेशविरतसंयतरूपे ये प्राक् क्षीणसप्तकस्योक्ताः सप्तदशत्रयोदशनवकरूपाः पतद्ग्रहा ते यावन्नाद्यापि सम्यग्मिथ्यात्वं क्षयमुपयाति, तावत्ससम्यक्त्वाः सम्यक्त्वसहिता द्रष्टव्याः । तथा च सति ते यथाक्रममष्टादशचतुर्दशदशरूपा भवन्ति । यावच्च मिथ्यात्वमपि न क्षीयते तावत्सम्यक्त्वसम्यग्मिथ्यात्वसहिता इति यथाक्रममेकोनविंशतिपञ्चदशैकादशरूपा वेदितव्याः, द्वाविंशत्येकविंशतिरूपौ च मिथ्यादृष्टिसास्वादनेषु सुप्रतीतावित्येवंप्रकारेणाष्टादशैव पतद्ग्रहा भवन्ति, नाधिकाः ॥ १ ॥" इति ।

## ॥ मोहनीयस्य प्रतिग्रहस्थानयन्त्रम् ॥

| | |
|---|---|
| २२ | बन्धस्थानवत् । |
| २१ | बन्धस्थानवत् । |
| १९ | सप्तदशबन्धस्थानं मिश्रसम्यक्त्वयुतम् । |

| | |
|---|---|
| १८ | सप्तदशबन्धस्थानं सम्यक्त्वयुतम् । |
| १७ | बन्धस्थानतुल्यम् । |
| १५ | त्रयोदशबन्धस्थानं मिश्रसम्यक्त्वयुतम् । |
| १४ | त्रयोदशबन्धस्थानं सम्यक्त्वयुतम् । |
| १३ | बन्धस्थानतुल्यम् । |
| ११ | नवप्रकृत्यात्मकं बन्धस्थानं मिश्रसम्यक्त्वयुतम् । |
| १० | नवप्रकृत्यात्मकं बन्धस्थानं सम्यक्त्वयुतम् । |
| ९ | बन्धस्थानतुल्यम् । |
| ७ | संज्वलनचतुष्कपुंवेदमिश्रसम्यक्त्वरूपाः । |
| ६ | संज्वलनचतुष्कमिश्रसम्यक्त्वरूपाः । |
| ५ | संज्वलनमानमायालोभमिश्रसम्यक्त्वरूपाः, यद्वा संज्वलनचतुष्कपुंवेदरूपाः । |
| ४ | संज्वलनमायालोभमिश्रसम्यक्त्वरूपाः, यद्वा संज्वलनचतुष्कम् । |
| ३ | लोभमिश्रसम्यक्त्वरूपाः, यद्वा क्रोधवर्जसंज्वलनत्रिकम् । |
| २ | मिश्रसम्यक्त्वरूपम्, यद्वा मायालोभरूपे । |
| १ | लोभरूपा । |

अथ कस्मिन्प्रतिग्रहे के संक्रमाः संक्रामन्तीति संवेध उच्यते—तत्र द्वाविंशतिप्रतिग्रहे सप्तविंशतिषड्विंशतित्रयोविंशतिसंक्रमाः संक्रामन्ति । तत्राष्टाविंशतिसत्ताकस्य मिथ्यात्वं प्रतिग्रहत्वेन कृतं परिहृत्य शेषाः सप्तविंशतिप्रकृतयो द्वाविंशतिप्रतिग्रहे संक्रामन्ति । सम्यक्त्वे उद्वलिते तस्मिन्नेव प्रतिग्रहे षड्विंशतिप्रकृतयः संक्रामन्ति । विसंयोजितानन्तानुबन्धिनः पुनः मिथ्यात्वं प्राप्तस्य तस्मिन्नेव प्रतिग्रहे आवलिकामात्रं यावत् त्रयोविंशतिप्रकृतयः संक्रामन्ति । षड्विंशतिसत्ताकस्याष्टाविंशतिसत्ताकस्य वा एकविंशतिप्रतिग्रहे पञ्चविंशतिप्रकृतयः संक्रामन्ति । एकोनविंशतिप्रतिग्रहे सप्तविंशतिषड्विंशतित्रयोविंशतिसंक्रमाः संक्रामन्ति । तत्र सम्यक्त्वं प्रतिग्रहत्वे कृतमपनीय शेषाः सप्तविंशतिप्रकृतयोऽप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनकषायभयजुगुप्साहास्यरतियुगलारतिशोकयुगलान्यतरयुगलपुंवेदसम्यक्त्वमिश्ररूपेष्वेकोनविंशतिप्रतिग्रहप्रकृतिषु संक्रामन्ति । औपशमिकसम्यग्दृष्टेरावलिकाया अभ्यन्तरे सम्यक्त्वमिश्रवर्जाः शेषाः षड्विंशतिप्रकृतयस्तस्मिन्नेव प्रतिग्रहे संक्रामन्ति । विसंयोजितानन्तानुबन्धिनः त्रयोविंशतिप्रकृतयः तस्मिन्नेवैकोनविंशतिप्रतिग्रहे संक्रामन्ति । अष्टादशप्रकृत्यात्मके प्रतिग्रहे वेदकसम्यग्दृष्टेः मिथ्यात्वे क्षपिते द्वाविंशतिप्रकृतयः संक्रामन्ति । सप्तदशप्रकृत्यात्मके प्रतिग्रहे पञ्चविंशत्येकविंशतिरूपे द्वे संक्रमस्थाने भवतः । पञ्चविंशतिः मिश्रदृष्टेः संक्रामति । एकविंशतिप्रकृतयो विसंयोजितानन्तानुबन्धिनः मिश्रं प्राप्तस्य संक्रामन्ति । क्षायिकसम्यग्दृष्टेर्वा सप्तदशप्रतिग्रहे एकविंशतिप्रकृतयःसंक्रामन्ति । यद्वा मिश्रमोहनीये क्षपिते तस्मिन्नेव प्रतिग्रहे एकविंशतिप्रकृतयः संक्रामन्ति । पञ्चदशके प्रतिग्रहे सप्तविंशतिषड्विंशतित्रयोविंशतिसंक्रमाः संक्रामन्ति । तत्र देशविरतस्य वेदकसम्यग्दृष्टेः उपशमसम्यग्दृष्टेरावलिकायाः उपरि वर्तमानस्य वा सम्यक्त्ववर्जसप्तविंशतिप्रकृतयः

प्रत्याख्यानसंज्वलनकषायभयजुगुप्साहास्यरतियुगलारतिशोकयुगलान्यतरयुगलपुंवेदसम्यक्त्वमिश्ररूपासु पञ्चदशसु संक्रामन्ति । तस्यैवौपशमिकसम्यग्दृष्टेरावलिकाया अभ्यन्तरे वर्तमानस्य तस्मिन्नेव प्रतिग्रहे षड्विंशतिप्रकृतयः संक्रामन्ति । विसंयोजितानन्तानुबन्धिनो देशविरतस्य त्रयोविंशतिप्रकृतयः संक्रामन्ति । मिथ्यात्वे क्षपिते चतुर्दशप्रकृत्यात्मके प्रतिग्रहे द्वाविंशतिः संक्रामति । मिश्रे च क्षपिते क्षायिकसम्यग्दृष्टेर्वा देशविरतस्यैकविंशतिप्रकृतयः त्रयोदशप्रतिग्रहे संक्रामन्ति । एकादशप्रतिग्रहेऽपि प्रागिव सप्तविंशतिषड्विंशतित्रयोविंशतिरूपास्त्रयः संक्रमाः संक्रामन्ति । दशप्रकृत्यात्मके प्रतिग्रहे मिथ्यात्वे क्षपिते द्वाविंशतिः, मिश्रे च क्षपिते क्षायिकसम्यग्दृष्टेर्वा नवप्रकृत्यात्मके एकविंशतिप्रकृतयः संक्रामन्ति । संज्वलनचतुष्टयपुंवेदमिश्रसम्यक्त्वरूपे सप्तप्रकृत्यात्मकप्रतिग्रहे त्रयोविंशतिद्वाविंशत्येकविंशतिविंशतिरूपाश्चत्वारः संक्रमाः संक्रामन्ति। तत्र विसंयोजितानन्तानुबन्धिन उपशान्तानन्तानुबन्धिनो वा सम्यक्त्वं प्रतिग्रहत्वे कृतमपनीय शेषास्त्रयोविंशतिस्तस्मिन् सप्तके संक्रामति । अन्तरकरणे च कृते संज्वलनलोभस्य संक्रमाभावेन शेषा द्वाविंशतिः संक्रामति । नपुंसकवेदे उपशान्ते सप्तकप्रतिग्रहे एकविंशतिप्रकृतयः संक्रामन्ति । स्त्रीवेदे चोपशान्ते तस्मिन्नेव प्रतिग्रहे विंशतिप्रकृतयः संक्रामन्ति । विंशतिचतुर्दशत्रयोदशरूपास्त्रयः संक्रमाः संज्वलनचतुष्टयमिश्रसम्यक्त्वरूपे षट्कप्रतिग्रहे संक्रामन्ति । सप्तकप्रतिग्रहे या विंशतिः संक्रान्ता सा एव पुंवेदस्य प्रतिग्रहताव्यवच्छिन्ने सति षट्कप्रतिग्रहे संक्रामति । हास्यादिषट्के उपशान्ते तस्मिन्नेव षट्कप्रतिग्रहे चतुर्दश, पुंवेदे उपशान्ते तस्मिन्नेव त्रयोदश प्रकृतयः संक्रामन्ति । एकविंशतित्रिंशत्येकोनविंशत्यष्टादशत्रयोदशद्वादशैकादशदशरूपा अष्टौ संक्रमाः पञ्चकप्रतिग्रहे संक्रामन्ति । तत्रैकविंशतिप्रकृतयः क्षायिकसम्यग्दृष्टेरुभयश्रेण्यां संक्रामन्ति । विंशत्येकोनविंशत्यष्टादशरूपास्त्रयः संक्रमाः क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां, त्रयोदशौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां क्षायिकसम्यग्दृष्टेः क्षपकश्रेण्यां च संक्रामन्ति । द्वादश क्षपकश्रेण्यामेव संक्रामन्ति । दशैकादशरूपौ क्षपकश्रेण्यामौपशमिकसम्यग्दृष्टेश्चोपशमश्रेण्यां संक्रामतः । चतुष्कप्रतिग्रहे चतुष्कसप्ताष्टदशैकादशद्वादशाष्टादशरूपाः सप्त संक्रमाः संक्रामन्ति । तत्र चतुष्कं क्षायिकसम्यग्दृष्टेः क्षपकश्रेण्यामेव, सप्ताष्टकौ औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां, दशकं क्षायिकसम्यग्दृष्टेः क्षपकश्रेण्यामौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां च, क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यामेकादशद्वादशाष्टादशरूपाः त्रयः संक्रमाः संक्रामन्ति । त्रिकप्रतिग्रहे त्रिचतुष्पञ्चसप्ताष्टनवैकादशरूपाः सप्त संक्रमाः संक्रामन्ति । तत्र त्रिकं क्षपकश्रेण्यां संक्रामति, औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां चतुष्कपञ्चकसप्तकरूपास्त्रयः संक्रमाः संक्रामन्ति, क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यामष्टकनवकैकादशरूपास्त्रयः संक्रमाः संक्रामन्ति । द्विकरूपे प्रतिग्रहे अष्टषट्कपञ्चकद्विकरूपाः चत्वारः संक्रमाः संक्रामन्ति । आद्यत्रिकं क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां, द्विकमौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां क्षायिकसम्यग्दृष्टेः क्षपकश्रेण्यां च संक्रामति । एकस्मिन् प्रतिग्रहे द्विकत्रिकपञ्चकरूपं त्रिकं क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यामेका क्षपकश्रेण्यां च संक्रामति ॥

## ॥ मोहनीयस्य कस्मिन्प्रतिग्रहे कः संक्रामतीति संवेधयन्त्रम् ॥

| प्रतिग्रह-स्थानानि | प्रतिग्रहस्थानगतप्रकृतयः | संक्रमस्था-नानि | संक्रमस्थानगतप्रकृतयः |
|---|---|---|---|
| २२ | मिथ्यात्व कषाय वेद युगल भं. जुं | २७ | मिथ्यात्वव्यतिरिक्ताः |
| २२ | ,, ,, | २६ | मिथ्यात्वसम्यक्त्वव्यतिरिक्ताः |
| २२ | ,, ,, | २३ | अनन्तानुबन्धिमिथ्यात्वरहिताः |
| २१ | ० ,, | २५ | दर्शनत्रिकव्यतिरिक्ताः |
| १९ | सम्यं० मिश्र. कषाय वेद युगल भं. जुं. | २७ | सम्यक्त्वरहिताः |
| १९ | ,, ,, | २६ | मिश्रसम्यक्त्वरहिताः |
| १९ | ,, ,, | २३ | अनन्तानुबन्धिसम्यक्त्वरहिताः |
| १८ | ० ,, | २२ | अनन्तानुबन्धिमिथ्यात्वसम्यक्त्वरहिताः |
| १७ | ० ,, | २५ | दर्शनत्रिकरहिताः |
| १७ | ० ,, | २१ | अनन्तानुबन्धिदर्शनत्रिकरहिताः |
| १५ | सम्यं. मिश्र. प्रत्या. संज्व. वेद. युग. भं. जुं. | २७ | सम्यक्त्वव्यतिरिक्ताः |
| १५ | ,, ,, | २६ | मिश्रसम्यक्त्वव्यतिरिक्ताः |
| १५ | ,, ,, | २३ | अनन्तानुबन्धिसम्यक्त्वव्यतिरिक्ताः |
| १४ | ० ,, | २२ | अनन्तानुबन्धिमिथ्यात्वसम्यक्त्वव्यतिरिक्ताः |
| १३ | ० ,, | २१ | अनन्तानुबन्धिदर्शनत्रिकरहिताः |
| ११ | सम्य० मिश्र० सं० ४ वे० यु० भ० जु० | २७ | सम्यक्त्वव्यतिरिक्ताः |
| ११ | ,, ,, | २६ | मिश्रसम्यक्त्वव्यतिरिक्ताः |
| ११ | ,, ,, | २३ | अनन्तानुबन्धिसम्यक्त्वव्यतिरिक्ताः |
| १० | ० ,, | २२ | अनन्तानुबन्धिसम्यक्त्वमिथ्यात्वव्यतिरिक्ताः |
| ९ | ० ,, | २१ | अनन्तानुबन्धिदर्शनत्रिकव्यतिरिक्ताः |
| ७ | सम्य० मिश्र० सं० ४ वे० | २३ | अनन्तानुबन्धिसम्यक्त्वव्यतिरिक्ताः |
| ७ | ,, ,, | २२ | अनन्तानुबन्धिसम्यक्त्वसंज्वलनलोभरहिताः |
| ७ | ,, ,, | २१ | अन० सम्य० संज्व० लो० नपुंसकव्यतिरिक्ताः |
| ७ | ,, ,, | २० | अन० सम्य० संज्व० लो० नपुंसकस्त्रीव्यतिरिक्ताः |
| ६ | सम्य० मिश्र० सं० ४ | २० | ,, ,, |
| ६ | ,, ,, | १४ | अ० सम्य० सं० लो० न० स्त्री० हास्यादिषट्करहिताः |
| ६ | ,, ,, | १३ | अ० सम्य० सं० लो० वेदत्रिक. हास्यादिषट्करहिताः |
| ५ | संज्वलनचतुष्कपुरुषवेदरूपासु | २१ | अनन्तानुबन्धिदर्शनत्रिकव्यतिरिक्ताः |
| ५ | ,, ,, | २० | अन० दर्शनत्रिकसंज्व० लो० व्यतिरिक्ताः |

| | | | |
|---|---|---|---|
| ५ | ,, ,, | १९ | अन० दर्शनत्रिके [illegible] नपुंसकव्यतिरिक्ताः |
| ५ | ,, ,, | १८ | अन० दर्शनत्रिक सं० लो० नपुंसकस्त्रीव्यतिरिक्ताः |
| ५ | ,, ,, | १३ | अन० दर्शनत्रिक कषाय ८ व्यतिरिक्ताः |
| ५ | ,, ,, | १२ | अन० दर्शं० कषाय ८ सं० लो० व्यतिरिक्ताः |
| ५ | ,, ,, | ११ | अन० दर्शं० कषाय. ८ सं० लो० नपुंसकरहिताः |
| ५ | ,, ,, | १० | ,, ,, स्त्रीरहिताः |
| ५ | संज्वलनमानादि ३ सम्यक्त्वमिश्ररूपासु | १३ | अनं० सम्य० मिश्र० नवनोकषायरहिताः |
| ५ | ,, ,, | ११ | ,, ,, मध्यमक्रोधद्विकविकलाः |
| ५ | ,, ,, | १० | ,, ,, क्रोधत्रिकरहिताः |
| ४ | संज्वलनचतुष्के | १८ | अन ४ दर्श ३ नपुंसक स्त्री. सं० लोभवर्जाः |
| ४ | ,, | १२ | पूर्वोक्तदशकहास्यादिषट्कव्यतिरिक्ताः |
| ४ | ,, | ११ | पुंवेदः पूर्वोक्ताश्च त्याज्याः |
| ४ | ,, | १० | अन० दर्शं० कषायाष्टक सं० लो० नपुंसक-स्त्रीवेदरहिताः |
| ४ | संज्वलनमायालोभसम्यक्त्वमिश्रेषु | १० | मिथ्या० मिश्र० मध्यममानमायालो-भद्विकसंज्वलनमानमायारूपाः |
| ४ | ,, ,, | ८ | मिथ्या० मिश्र० मध्यममायालोभद्विकसं-ज्वलनमानमायारूपाः |
| ४ | ,, ,, | ७ | मिथ्या० मिश्र० मध्यममायालोभद्विकसं० मायारूपाः |
| ४ | संज्वलनचतुष्के | ४ | पुंवेदलोभवर्जसंज्वलनत्रिकरूपाः |
| ३ | सं० मानादित्रिके | ११ | अनाद्यक्रोधमानमायात्रिकमध्यमलो-भद्विकरूपाः |
| ३ | ,, | ९ | मध्यमक्रोधद्विकवियुक्ताः पूर्वोक्ताः |
| ३ | ,, | ८ | अनाद्यमानमायात्रिकमध्यमलोभद्विकरूपाः |
| ३ | संज्वलनलोभमिश्रसम्यक्त्वरूपासु | ७ | अनाद्यमायात्रिकमध्यमलोभद्विक मिथ्या० मिश्ररूपाः |
| ३ | ,, ,, | ५ | संज्व० माया मध्यमलोभद्विक मिथ्या० मिश्र० |
| ३ | ,, ,, | ४ | मध्यमलोभमिथ्यात्वमिश्ररूपाः |
| ३ | संज्वलनमानादित्रिके | ३ | संज्वलनक्रोधमानमायारूपाः |
| २ | संज्वलनमायालोभयोः | ८ | प्रथमवर्जमानमायात्रिकमध्यमलोभरूपाः |

| | | | |
|---|---|---|---|
| २ | ,, | ६ | मध्यममानवर्जपूर्वोक्ताः |
| २ | ,, | ५ | प्रथमवर्जमायात्रिकमध्यमलोभरूपाः |
| २ | ,, | २ | मानमायारूपे |
| २ | मिश्रसम्यक्त्वयोः | २ | मिथ्यात्वमिश्रे |
| १ | सं० लोभे | ५ | प्रथमवर्जमायात्रिकमध्यमलोभरूपाः |
| १ | ,, | ३ | संज्वलनमायामध्यमलोभरूपाः |
| १ | ,, | २ | मध्यमलोभौ |
| १ | ,, | १ | मायारूपा |

॥ अथवा प्रकारान्तरेण प्रतिग्रहेषु संक्रमस्थानानां यन्त्रकम् ॥

| संक्रम-स्थानानि | प्रतिग्रह-स्थानेषु | संक्रम-स्थानानि | प्रतिग्रह-स्थानेषु | संक्रम-स्थानानि | प्रतिग्रह-स्थानेषु | संक्रम-स्थानानि | प्रतिग्रह-स्थानेषु |
|---|---|---|---|---|---|---|---|
| २७ | २२ | २२ | १८ | १८ | ४ | ८ | २ |
| २७ | १९ | २२ | १४ | १४ | ६ | ७ | ४ |
| २७ | १५ | २२ | १० | १३ | ६ | ७ | ३ |
| २७ | ११ | २२ | ७ | १३ | ५ | ६ | ३ |
| २६ | २२ | २१ | १७ | १२ | ५ | ५ | २ |
| २६ | १९ | २१ | १३ | १२ | ४ | ५ | १ |
| २६ | १५ | २१ | ९ | ११ | ५ | ५ | ४ |
| २६ | ११ | २१ | ७ | ११ | ४ | ४ | ३ |
| २५ | २१ | २१ | ५ | ११ | ३ | ४ | ३ |
| २५ | १७ | २० | ७ | १० | ५ | ३ | १ |
| २३ | २२ | २० | ६ | १० | ४ | ३ | २ |
| २३ | १९ | २० | ५ | ९ | ३ | २ | २ |
| २३ | १५ | १९ | ५ | ८ | ४ | २ | १ |
| २३ | ११ | १८ | ५ | ८ | ३ | १ | १ |
| २३ | ७ | | | | | | |

साम्प्रतं नाम्नः सत्तास्थानादीनि भाव्यन्ते; तत्र नाम्नो द्वादश सत्तास्थानानि, तद्यथा—त्र्युत्तरशतं, द्व्युत्तरशतं षण्णवतिः पञ्चनवतिस्त्रिनवतिर्नवतिरेकोननवतिश्चतुरशीतिस्त्र्यशीतिर्द्व्यशीतिर्नवाष्टौ च । तत्र सकलप्रकृतिसमुदायात्मकं त्र्युत्तरशतप्रकृत्यात्मकं सत्स्थानं भवति । तदेव तीर्थंकरवर्जं द्व्युत्तरशतं सत्स्थानं भवति । आहारकसप्तकवर्जं षण्णवतिप्रकृत्यात्मकं सत्स्थानं भवति, तीर्थंकराहारकसप्तकवर्जं च पञ्चनवतिप्रकृत्यात्मकं भवति । क्षपकश्रेण्यां प्रथमसत्स्थानचतुष्कात् नरकगतिनरकानुपूर्वीतिर्यग्गतितिर्यगानुपूर्व्याद्यजातिचतुष्टयस्थावरसूक्ष्मसाधारणातपोद्योतलक्षणासु त्रयोदशसु क्षीणेषु यथाक्रमं नवतिरेकोननवतिस्त्र्यशीतिर्द्व्यशीतिरिरितिसत्स्थानचतुष्कं भवति । पञ्चनवतिमध्यात् देवद्विके उद्व-

लिते त्रिनवतिसत्स्थानं भवति । ततो नरकद्विकसहिते वैक्रियसप्तके उद्वलिते चतुरशीतिः । तदुक्तं कर्मप्रकृतौ शिवशर्मसूरिपादैः–"एगिंदियस्स सुरदुगमओ सवेउव्विनिरयदुगं" सप्ततिकावृत्तौ तु देवद्विके नरकद्विके वा उद्वलिते त्रिनवतिर्भवति, नरकद्विकसहिते देवद्विकसहिते वा वैक्रियसप्तके उद्वलिते चतुरशीतिः । तथाच तद्ग्रन्थः–"ततो नरकगतिनरकानुपूर्व्योरथवा देवगतिदेवानुपूर्व्योरुद्वलितयोः षडशीतिः । अथवाऽशीतिसत्कर्म्मणो नरकगतिप्रायोग्यं बध्नतो नरकगतिनरकानुपूर्वीवैक्रियशरीरवैक्रियाङ्गोपाङ्गवैक्रियसंघातवैक्रियबन्धनानां बन्धे सति षडशीतिः । अथवाऽशीतिसत्कर्मणो देवगतिप्रायोग्यं बध्नतो देवगतिदेवानुपूर्वीवैक्रियचतुष्टयबन्धे षडशीतिः । ततो नरकगतिनरकानुपूर्वीवैक्रियचतुष्टयोद्वलने, अथवा देवगतिदेवानुपूर्वीवैक्रियचतुष्टयोद्वलने कृते अशीतिः" तस्मात् मनुष्यद्विके उद्वलिते द्व्यशीतिरिति । एतत् सत्स्थानत्रिकमध्रुवसंज्ञकं भवति । त्रसबादरपर्याप्तसुभगादेययशःकीर्तिपञ्चेन्द्रियजातिमनुष्यगतिरूपमष्टप्रकृत्यात्मकं सत्स्थानं भवति । तदेव जिननामयुतं नवप्रकृत्यात्मकं भवति । एतत्सत्स्थानद्वयमयोगिचरमसमये भवति ।

**नाम्नः सत्तास्थानानि १२**

| | |
|---|---|
| १०३ | सर्वप्रकृतिसमुदायः । |
| १०२ | तीर्थकरवर्जाः । |
| ९६ | आहारकसप्तकवर्जाः । |
| ९५ | आहारकसप्तकजिनवर्जाः । |
| ९३ | आहारकसप्तकजिनदेवद्विकवर्जाः । |
| ९० | नरकद्विकतिर्यग्द्विकजातिचतुष्टयस्थावरसूक्ष्मसाधारणातपोद्योतवर्जाः । |
| ८९ | जिनवर्जा नवतिः । |
| ८४ | नरकद्विकवैक्रियसप्तकवर्जास्त्रिनवतिः । |
| ८३ | नरकादित्रयोदशवर्जाः षण्णवतिः । |
| ८२ | नरकादित्रयोदशवर्जा पञ्चनवतिः, यद्वा नरकद्विके उद्वलिते चतुरशीतिरेव द्व्यशीतिर्भवति । |
| ९ | त्रसत्रिकसुभगादेययशःकीर्तिपञ्चेन्द्रियजातिमनुजगतिजिनाख्याः । |
| ८ | जिनवर्जा अष्टौ । |

संक्रमस्थानान्यपि द्वादश भवन्ति, तद्यथा त्र्युत्तरशतं द्व्युत्तरशतं, एकोत्तरशतं षण्णवतिः पञ्चनवतिश्चतुर्नवतिस्त्रिनवतिरेकोननवतिरष्टाशीतिचतुरशीतिर्द्व्यशीतिरेकाशीतिरिति । एतान्येव भाव्यन्ते–तत्र नाम्नः त्रिंशद्बन्धव्यवच्छेदे सति यशःकीर्तेः प्रतिग्रहत्वेन त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपात् सत्तास्थानचतुष्कात् तदपनीते क्रमेण द्व्युत्तरशतैकोत्तरशतपञ्चनवतिचतुर्नवतिरूपाणि चत्वारि संक्रमस्थानानि उभयश्रेण्यां संक्रामन्ति । उक्तप्रथमसत्स्थानचतुष्कात् प्रागुक्तासु त्रयोदशसु क्षीणासु क्रमेण नवत्येकोननवतित्र्यशीतिद्व्यशीतिसत्स्थानानि भवन्ति । तेभ्योऽपि यशःकीर्तेः प्रतिग्रहत्वेन तदपनीते एकोननवत्यष्टाशीतिद्व्यशीत्येकाशीतिरूपाणि चत्वारि संक्रमस्थानानि क्षपकश्रेण्यामेव भवन्ति । इदमुक्तं भवति–त्र्युत्तरशतसत्ताकस्य यशःकीर्तेः प्रतिग्रहत्वेन तद्वर्जं द्व्युत्तरशतं संक्रामति ।

द्व्युत्तरशतसत्ताकस्य यशःकीर्तिवर्जमेकोत्तरशतं संक्रामति। षण्णवतिसत्ताकस्य तद्वर्जं पञ्चनवतिः, पञ्चनवतिसत्ताकस्य यशःकीर्त्तिवर्जं चतुर्नवतिः। उक्तसत्स्थानचतुष्कात् त्रयोदशप्रकृतिक्षये च नवतिसत्ताकस्य यशःकीर्तिवर्जमेकोननवतिः संक्रामति, एकोननवतिसत्ताकस्य यशःकीर्त्तिवर्जमष्टाशीतिः संक्रामति, त्र्यशीतिसत्ताकस्य यशःकीर्तिवर्जं द्व्यशीतिः संक्रामति, द्व्यशीतिसत्ताकस्य यशःकीर्त्तिवर्जं एकाशीतिप्रकृतीनां संक्रमो भवति। एकोत्तरशतचतुर्नवत्येकोननवत्यष्टाशीत्येकाशीतिरूपाणि पञ्चसंक्रमस्थानानि श्रेणीं विहाय न कुत्रापि परिभावनीयानि। एकान्तेन यानि श्रेणियोग्यानि संक्रमस्थानानि तानि वर्जयित्वा शेषाणि त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि सप्त संक्रमस्थानानि भाव्यन्ते—

तत्राहारकजिननामयुतं देवप्रायोग्यमेकत्रिंशद्बन्धं बध्नतः त्र्युत्तरशतसत्ताकस्य जिननामाहारकयोर्बन्धावलिकायामपगतायां त्र्युत्तरशतं संक्रामति। जिननाम्नो बन्धावलिकायामनपगतायां त्र्युत्तरशतसत्ताकस्यैव द्व्युत्तरशतं संक्रामति। तस्यैवाहारकसप्तकस्य बन्धावलिकायामनपगतायां षण्णवतिः संक्रामति। तस्यैवोभयोर्बन्धावलिकायामनपगतायां पञ्चनवतिः संक्रामति। आहारकयुतं देवप्रायोग्यं त्रिंशतं बन्धं बध्नतो द्व्युत्तरशतसत्ताकस्य बन्धावलिकायामपगतायां द्व्युत्तरशतं संक्रामति। अस्यैवाहारकसप्तकस्य बन्धावलिकायामनपगतायां पञ्चनवतिः संक्रामति। नन्वाहारकयुतं त्रिंशतं बन्धं बध्नतः त्र्युत्तरशतं षण्णवतिश्च सत्स्थानं कथं न संक्रामतीति चेत्? न, तयोः सद्भावाभावात्। ननु जिननाम्नः सत्ताभावः कुतोऽवसितः? अत्र जिननामबन्धाभावात्। ननु बन्धाभावोऽपि कुतोऽवबुद्धः? आहारकबन्धकस्य जिननामबन्धे एकत्रिंशद्बन्धस्थानप्राप्तेः। ननु मनुजादिगतीनां बन्धाभावेऽपि सद्भावो विद्यते, तद्वज्जिननाम्नः सद्भावे का क्षतिरिति चेत्? न, सम्यग्दृष्टीनां जिननाम्नः सद्भावे सति ध्रुवबन्धित्वात्, गत्यादीनां न तथेति। तदुक्तं कर्मप्रकृतिवृत्तौ श्रीमद्भिर्मलयाचार्यपादैः—"यस्य हि तीर्थकरमाहारकं वा सत् स नियमाद्बध्नातीति"। ननु सम्यग्दृष्ट्यादीनां तीर्थकरनामकर्मणः सद्भावे सत्यवश्यमेवापूर्वकरणषष्ठभागपर्यन्तो बन्धः, सति च बन्धेऽवश्यं सद्भावः, ततोऽविरतादीनां ध्रुवसत्ताकत्वं प्राप्तम्, उक्तं चाध्रुवसत्कर्मणीति कथं न विरोध इति चेद्? उच्यते, तथाविधविशुद्धिविशेषसमन्विते सम्यक्त्वे सति भवतीत्यध्रुवसत्ताकत्वं प्रोक्तं। ननु तर्हि ध्रुवबन्धिमध्ये ज्ञानावारकत्वादीनामिव कथं नोक्तं, कथं चोक्तमध्रुवबन्धिमध्य इति चेत्? सत्यम्, ज्ञानावरणादीनामिवानादिकालिनबन्धाभावात् न ध्रुवबन्धिमध्य उक्तं, सम्यक्त्वे सत्यपि तथाविधविशुद्धावेव बन्धारम्भकत्वादध्रुवबन्धित्वमिति। तदुक्तं—"तीर्थकरस्याहरकद्विकस्य च यथाक्रमं सम्यक्त्वे संयमे च सामान्यतो निजबन्धहेतौ विद्यमानेऽपि कदाचिदेव बन्धः" इति। ननु तर्हि षण्णवतिसत्ताको मिथ्यादृष्टिर्नारकोऽपर्याप्तावस्थायां षण्णवतिः संक्रामतीति पञ्चसंग्रहादावुक्तं कथं निर्वाह्यमिति चेत्? उच्यते, बन्धहेतुसम्पर्के सत्येव बन्धो भवति,

नान्यथा, मिथ्यादृष्टौ तदभावात् न जिननामबन्धः, अत एव जिननामसत्कर्मणः सम्यग्दृष्टेः ध्रुवबन्धित्वं प्रागुक्तम्, तथा च सति वेदकसम्यग्दृष्टिर्बद्धनरकायुष्को नरकाभिमुख एव जिननामसत्ताको मिथ्यात्वे गच्छति, नान्यः तस्य च बन्धाभावेऽपि षण्णवतिः संक्रमे प्राप्यते। अत एव मिथ्यादृष्टौ नरकाभिमुखं नरं, अपर्याप्तावस्थायामन्तर्मुहूर्तं यावत् तमेव प्राप्तनरकं नारकं च विहाय सर्वत्र जिननामयुतमेकोननवतिसत्स्थानं जिननामसत्ताकस्य तिर्यग्गतिप्रायोग्यो बन्धश्च सप्ततिकावृत्तौ निषिद्धः तदुक्तं-"यतो मिथ्यादृष्टेः सतः एकोननवतिः नारकेषूत्पद्यमानस्य नैरयिकस्य प्राप्यते न शेषस्य" "तीर्थङ्करनामसत्कर्मणः तिर्यग्गतिप्रायोग्यबन्धासम्भवात् एकोननवतिः न लभ्यत" इति।

अथाप्रस्तुतमपि सोपयोगित्वेन साक्षेपपरिहारपूर्वकं जिननामविषये किञ्चिद्विचार्यते-ननु षण्णवतिः मिथ्यादृष्टौ नारकः संक्रामति तद्वत् त्र्युत्तरशतप्रकृत्यात्मकं सत्स्थानं कथं न संक्रामतीति चेत्? न, उभयसत्ताकस्य नारकेषु गमनाभावेनैव तत्संक्रमाभावात्, तदुक्तं "तीर्थंकराहारकसत्कर्मणो नारकेषूत्पादाभावात्" इति। ननु तथापि वेदकसम्यग्दृष्टेः बद्धतीर्थकरनाम्नः चरमेऽन्तर्मुहूर्ते प्राप्तनरकलेश्यस्य परिणामपरावर्तनेन मिथ्यात्वं गतस्य नरकाभिमुखस्य नरकगतिप्रायोग्याष्टाविंशतिबन्धकस्य मनुजस्य कथं त्र्युत्तरशतप्रकृत्यात्मकं सत्स्थानं न संक्रामति? मनुजद्विकरहितं सत्स्थानं वर्जयित्वा शेषाणि सर्वाणि मनुष्यगतौ प्राप्यमाणत्वात्, तदुक्तं-"मनुष्याणामेकादश सत्तास्थानानि, तद्यथा-त्रिनवतिर्द्विनवतिरेकोननवतिरष्टाशीतिः षडशीतिरशीतिरेकोनाशीतिः षट्सप्ततिः पञ्चसप्ततिः नव अष्टौ। अष्टसप्ततिस्तु न संभवति, मनुष्याणामवश्यं मनुष्यद्विकसंभवात्" इति, न च जिननामसत्ताकस्य नरकप्रायोग्यबन्ध एव न संभवतीति वाच्यम्, सप्ततिकावृत्तौ संवेधाधिकारे तत्प्रतिपादनात्, तदुक्तं-"तत्राप्येकोननवतिर्यो नाम वेदकसम्यग्दृष्टिर्बद्धतीर्थकरनामा परिणामपरावर्तनेन मिथ्यात्वं गतो नरकाभिमुखो नरकगतिप्रायोग्यामष्टाविंशतिं बध्नाति" इति चेत्? न, मिथ्यादृष्टौ आहारकजिननाम्नोः पृथक् प्रथक् सत्तासंभवेऽपि युगपदुभयोः सत्ताया अभावात्, अत एवोभयसत्तायां मिथ्यादृष्टिः भवति न वेत्याशङ्कामपनोदाय श्रीमद्भिः देवेन्द्रसूरिपादैः शतके उक्तं "नोभय सन्ते मिच्छो" इति। ननु द्वितीयतृतीयगुणस्थाने जिननाम कथं न संक्रमयतीति चेत्? जिननामकर्मसत्ताकस्य तत्र गमनाभावात् ननु जिननामसत्कर्मा द्वितीयतृतीयगुणस्थाने कथं न गच्छतीति चेत् स्वभावादिति ब्रूमः। तदुक्तं च-"तीर्थकरनामसत्ताको हि मिश्रसास्वादनभावं न प्रतिपद्यते, स्वभावादेव" इति। ननु मिथ्यादृष्टेः जिननामकर्म सत्तायां कियन्तं कालं प्राप्यत इति चेत्? ब्रूमः अन्तर्मुहूर्तमिति, परतोऽवश्यं सम्यक्त्वप्राप्तेः। तदुक्तं पूज्यपादैः श्रीमद्देवेन्द्रसूरिभिः-"तर्हि केवलतीर्थकरनामकर्मसत्तायां कियन्तं कालं मिथ्यादृष्टिर्भवतीत्याह-'अन्तमुहुत्तं भवे तित्थे' त्ति अन्तर्मुहूर्तमन्तर्मुहूर्तमात्रं कालं भवेज्जायेत 'मिच्छो' त्ति इत्यस्यात्रापि सम्बन्धान्मिथ्यादृष्टिर्भवतीति। क सतीत्याह 'तित्थे' त्ति तीर्थकरनामकर्मणि सत्तायां वर्तमान इति गम्यते। इदमुक्तं भवति-यो नरके बद्धायुष्को वेदकसम्यग्दृष्टिर्बद्धतीर्थकरनामकर्मा संस्तत्रोत्पित्सुरवश्यं सम्यक्त्वं परित्यज्य तत्रोत्पद्यते,

उत्पत्तिसमयानन्तरमन्तर्मुहूर्तादूर्ध्वमवश्यं सम्यक्त्वं प्रतिपद्यते, तस्यायमुक्तप्रमाणः कालो लभ्यत" इति । यत्तु ' "नोभय सन्ते मिच्छो" इत्येतत्पादस्य, संस्तबके पतितपरिणामश्चेत् नारकोऽन्तर्मुहूर्तादूर्ध्वमवश्यं तदुद्वलयतीत्युक्तं इति, तथा—"विजिणु बीयतइय" वचनात्, एतद्भावप्राप्तिः जिननामसत्तारहितानां अथवा उद्वलितजिनसत्तावतां भवती"ति विचारसारप्रकरणे च श्रीमद् देवचन्द्रेणोक्तं ' तन्न सम्यक्, पूज्यपादैः श्रीमद्भिः शिवशर्मसूर्यादिभिरुद्वलनयोग्यासु प्रकृतिषु जिननाम्नोऽगृहीतत्वादिति । ननु—"तिरश्चस्तीर्थंकरसत्कर्मबन्धाभावात्" "तित्थगरदेवनिरयाउगं तिसु तिसु गइसु बोधव्वं" "तीर्थंकरनामदेवायुर्नरकायुषश्च प्रत्येकं तिसृषु तिसृषु गतिषु बोद्धव्यम् । तथाहि—"तीर्थंकरनामनरकदेवमनुष्यगतिरूपासु तिसृषु गतिषु सत्प्राप्यते, न तिर्यग्गतावपि तीर्थंकरसत्कर्मणः तिर्यक्षूत्पादाभावात्, तत्र गतस्य च तीर्थकरनामबन्धाभावात्" इत्याद्यनेकोल्लेखावलोकनेन तिर्यक्षु सत्ताऽभावो निश्चीयते, जिननाम्न उत्कृष्टः स्थितिबन्धोऽन्तःसागरोपमकोटीकोटीप्रमाणः, एतावत्कालं तिर्यग्भवभ्रमणमन्तरेण पूरयितुमशक्यत्वात् तत्र मनेचोक्तविरोध इति चेत् ? सुनिकाचितजिननामसत्ताकस्यैव तिर्यक्षु गमननिषेधात्, एतदेव साक्षेपपरिहारपुरस्सरमुक्तं पञ्चसंग्रहे—

"अन्तो कोडाकोडी ठिइए वि कहं न होइ तित्थयरे । संते कित्तियकालं तिरिओ अह होइ उ विरोहो ॥ १ ॥ जमिह निकाइयतित्थं तिरियभवे तं निसेहियं संतं । इयरंमि नत्थि दोसो उवट्टणवट्टणासज्जे ॥ २ ॥" अनयोः पूज्यपादमलयगिरिकृता वृत्तिरियं—"अन्तःकोटीकोटीस्थितिकेऽपि 'तीर्थंकरे' तीर्थंकरनामकर्मणि 'सति' विद्यमाने कथं 'कियत्कालं' कियन्तं कालं यावत् तिर्यग् न भवति ? तिर्यग्भवभ्रमणमन्तरेण तावत्याः स्थितेः पूरयितुमशक्यत्वात् । अथ मन्यसे भवति कियत्कालं तीर्थंकरनामसत्कर्माऽपि तिर्यग्, तर्ह्यागमविरोधः, आगमे तीर्थंकरनामसत्कर्मणस्तिर्यग्गतिगमनप्रतिषेधात् । अत्रोत्तरमाह—इहास्मिन् प्रवचने यत्तीर्थंकरनाम निकाचितमवश्यवेद्यतया व्यवस्थापितं, तदेव स्वरूपेण सद्विद्यमानं तिर्यग्भवे निषिद्धमित्यस्मिन् पुनरनिकाचितेऽपवर्तनोद्वर्तनासाध्ये तिर्यग्भवे विद्यमानेऽपि न कश्चिद्दोषः, न चैतत्सूत्रकृत्स्वमनीषिकाशिल्पिकल्पितम्, विशेषणवत्यामपि तथाभिधानात्, तथाच तद्ग्रन्थः—"तिरिएसु नत्थि तित्थयरनाम सन्तंति देसियं समए । कह य तिरिओ न होही अयरोवमकोडीकोडीए ॥ १ ॥ तं पि सुनिकाइयस्सेव तइयभवभाविणो विणिद्दिट्ठं । अणिकाइयम्मि वच्चइ सव्वगईओ वि न विरोहो ॥ २ ॥" गाथाद्वयस्यापीयमक्षरगमनिका—तीर्थकरनाम सद्विद्यमानं तिर्यक्षु नास्ति न भवतीति देशितं कथितं समये—जिनप्रवचने अथवा तीर्थकरनाम्न उत्कृष्टा स्थितिरन्तःसागरोपमकोटीकोटीप्रमाणा, ततः किञ्चिदूनसागरोपमकोटीकोटीप्रमाणायां स्थितौ कथं तीर्थकरनामसत्कर्मा तिर्यङ् न भवति ? भवत्येवेति भावः, तिर्यग्गतिगमनमन्तरेण तावत्याः स्थितेः पूरयितुमशक्यत्वात्, एष पूर्वपक्षः । अत्रोत्तरमाह—'तंपि' इत्यादि तदपि तीर्थकरनाम सत्तिर्यक्षु नास्तीति समये देशितम्, तृतीयभवभाविनः सुनिकाचितस्यैवात्यन्तनिकाचितस्यैव विनिर्दिष्टमवसेयं न सामान्यतः, तेनानिकाचिते तीर्थंकरनामसत्कर्मणि विद्यमाने सर्वा अपि गतीर्व्रजति गच्छतीति न कश्चिद्विरोधः" इति ।

या चान्तःकोटीकोटीप्रमाणा स्थितिरुक्ता साऽनिकाचिदपेक्षया ज्ञातव्यैवमाहारकस्य

स्थितिरपि ज्ञेया। ननु सुनिकाचितं कस्माद्भागादारभ्य? कः? कदा? कियत् प्रमाणं करोति? सुनिकाचिते चोच्यमानेऽन्यदपि किमल्पनिकाचितमनिकाचितं वा विद्यते? अत्रोच्यते–जिननाम्नः अन्तःसागरोपमकोटीकोटीप्रमाणायाः स्थितेः संख्येयभागादारभ्य संख्येयवर्षायुष्केण नरेण निकाचयितुमारभ्यते, तस्यैव सकलसामग्रीसद्भावात्। तीर्थकरभवादर्वाक् तृतीये भवे च निकाचितं करोति। तत्रापि अन्तःसागरोपमकोटीकोट्याः संख्येयतमो भागोऽल्पनिकाचितं भवति, किञ्चिन्न्यूनपूर्वकोटिद्वयाभ्यधिकानि त्रयस्त्रिंशत्सागरोपमाणि सुनिकाचितं भवति, शेषं सर्वमनिकाचितं भवति। एवमेवाहारकस्थितेरपि बोध्यमिति। नैतत्स्वमनीषिकया विजृम्भितं, पञ्चसंग्रहेऽपीदमेवावेदितं, तथाहि–

"अन्तोकोडीकोडी तित्थयराहार तीए संखाओ। तेत्तीसपलियसंखं निकाइयाणं तु उक्कोसा॥ १॥"
व्याख्या–तीर्थकरस्याहारकस्य चोत्कृष्टा स्थितिरन्तःसागरोपमकोटीकोटी, अन्तर्मुहूर्तमात्रमबाधा, अबाधाकालहीनश्च कर्मदलिकनिषेकः। एषा चोत्कृष्टा स्थितिरनिकाचितयोस्तीर्थकराहारकद्विकयोरुक्ता, निकाचितयोः पुनरिदमाह–'तीए' इत्यादि निकाचितयोस्तु तीर्थकराहारकद्विकयोरुत्कृष्टा स्थितिस्तस्या अन्तःसागरोपमकोटीकोट्याः संख्येयभागादारभ्य तीर्थकरस्य त्रयस्त्रिंशत्सागरोपमाणि किञ्चिन्न्यूनपूर्वकोटिद्वयाभ्यधिकानीति शेषः। आहारकद्विकस्य पल्योपमासंख्येयभागमात्रम्। एतदुक्तं भवति–तीर्थकराहारकयोरन्तःसागरोपमकोटीकोट्याः संख्येयभागादारभ्य निकाचितुमारब्धयोर्यदा सर्वात्मनातीवानयोः निकाचना कृता भवति, तदा तीर्थकरनाम्न उत्कृष्टा स्थितिः किञ्चिन्न्यूनपूर्वकोटिद्वयाभ्यधिकानि त्रयस्त्रिंशत्सागरोपमाणि, तथाहि–तीर्थकरभवादर्वाक्तृतीये भवे पूर्वकोट्यायुषा प्रथमत एव निकाचितं, ततोऽनुत्तरसुरेषु त्रयस्त्रिंशत्सागरोपमस्थितिको देवो जातः, ततोऽपि च्युत्वा चतुरशीतिलक्षायुस्तीर्थकरो जायत इति। आहारकद्विकस्य तु पल्योपमासंख्येयभागः। संख्येयभागादारभ्येति वदत इदमावेद्यते–अल्पनिकाचितयोस्तीर्थकराहारकद्विकयोरन्तःसागरोपमकोटीकोट्याः संख्येयतमो भाग उत्कृष्टा स्थितिः, सुनिकाचितयोस्तु त्रयस्त्रिंशत्सागरोपमादिकेति **श्रीमन्मलयगिरिकृता वृत्तिः। एतेन, ननु जिननामकर्मतीर्थङ्करभवनादर्वाक्तृतीये भवे एव बध्यते** "बज्झइ तं तु भगवओ तइयभवे सक्कइताणं" **इति वचनात् तत्कथं जघन्यतोऽपि अन्तःसागरोपमकोटाकोटीप्रमाणा तस्य स्थितिरुपपद्यत इत्यपि न युक्तं,** "बज्झइ" **इत्यादिनिकाचनापेक्षयोक्तत्वात्, शुद्धप्ररूपकत्वेन भूरितरभवस्यापि कमलप्रभाचार्यस्याष्टापदपर्वतस्योपरि जिनभक्तिलीनस्य रावणस्य च चतुर्दशभवसंभवेऽपि जिननामबन्धस्योक्तत्वाच्च। नन्वाहारकद्विकजिननामकर्म्मणोरुत्कृष्टा स्थितिः बन्धे सत्कर्मणि चान्तःसागरोपमकोटीकोटिप्रमाणा प्रोक्ता तत आहारकद्विकजिननाम्नी किं बन्धोत्कृष्टे संक्रमोत्कृष्टे वेति चेत्? संक्रमोत्कृष्टे इति ब्रूमः, नवरं बन्धोत्कृष्टायाः स्थितेः सकाशात् संक्रमोत्कृष्टा स्थितिः संख्येयगुणा, तदुक्तं कर्मप्रकृतिचूर्णौ–**"बन्धट्ठिईओ संतकम्मट्ठिई संखेज्जगुणा" **इति। ननु नामकर्म्मणः बन्धोत्कृष्टानां प्रकृतीनां बन्धे उत्कृष्टा स्थितिः विंशतिसागरोपमकोटीकोटिप्रमाणा भवति यतो बन्धोत्कृष्टानां प्रकृतीनां बन्धे उत्कृष्टा स्थितिः यावती स्वमूलप्रकृतेरुत्कृष्टा स्थितिर्बध्यते तावती भवति। ततः आहारकद्विके जिननाम्नि**

च बन्धावलिकोदयावलिकाविरहिता विंशतिः सागरोपमकोटीकोटिप्रमाणैव प्राप्यते, ततः कथमुच्यते आहारकद्विकजिननाम्नोः संक्रमतोऽप्यन्तःकोटीकोटिप्रमाणा स्थितिरिति चेत्? न, उत्कृष्टतोऽपि सर्वेषां कर्म्मणां सम्यग्दृष्टेरन्तःसागरोपमकोटीकोटिप्रमाण एव बन्धो भवति, नाधिकः, या तु बन्धोत्कृष्टानां स्वमूलप्रकृतेः यावती उत्कृष्टा स्थितिः तावती बन्धे प्राप्यत इत्युक्तं तन्मिथ्यादृष्टिमाश्रित्यावसेयम्। जिननामाहारकद्विकयोस्तु मिथ्यादृष्टौ बन्ध एव न भवति, सम्यक्त्वसंयमप्रत्ययत्वात् तद्बन्धस्येति। तदुक्तमाराध्यपादैः श्रीमच्छिवशर्मसूरिभिः—"सम्मत्तगुणनिमित्तं तित्थयरं संजमेण आहारं" अस्य चूर्णिः—'सम्मत्तगुणनिमित्तं' ति सम्मत्तगुणनिमित्तं तित्थकरं संजमेण आहारं बन्धइ त्ति। वीसाणं एगदुगाइगेहिं अन्नतरेहिं कारणेहिं तित्थकरणामंपि बद्धं सम्मद्दिट्ठिणा जाव तस्स सम्मत्तभावो धरइ ताव बन्धइ, सम्मत्तभावे फिट्टे न बन्धइ तेण तित्थकरनामं सम्मत्तपच्चयं। आहारगदुगं अप्पमत्तभावे वट्टमाणो संजओ बन्धइ न पमत्तो तम्हा संजमपच्चइगं" इति। ननु जिननामकर्मणो बन्धहेतुर्यदि सम्यक्त्वं प्रोच्यते, तर्हि किमौपशमिकसम्यक्त्वं, क्षायोपशमिकसम्यक्त्वं, क्षायिकसम्यक्त्वं वा? यदि प्रथमपक्षः तर्हि उपशान्तमोहेऽपि तद्बन्धः प्राप्नोति, तत्र केषाञ्चिदौपशमिकसम्यक्त्वस्यापि सद्भावात्। द्वितीयः पक्षश्चेत्? अप्रमत्तचरमसमये एव जिननामबन्धस्य व्यवच्छेदं प्राप्नोति, नापूर्वकरणषष्ठभागे तत्र क्षायोपशमिकसम्यक्त्वस्याभावात्। यदि तृतीयस्तर्हि सिद्धानामपि जिननामकर्मणो बन्धः प्राप्नोति, क्षायिकसम्यक्त्वस्य तेषामपि सद्भावात्। किञ्च "जोगा पयडिपएसं ठिइअणुभागं कसायओ कुणइ" इति विरोधश्चेति चेत्? न, अभिप्रायाऽपरिज्ञानात्, नहि "सम्मत्तगुणनिमित्तं तित्थयरं संजमेण आहारं" इत्यनेन केवलमेव सम्यक्त्वं जिननामबन्धहेतुत्वेनोच्यते, किन्तु सहकारिकारणभावेन जिननामकर्मणो विशेषहेतुत्वं, मौलं कारणं तु कषायविशेषा एव, "सेसा उ कसाएहिं" इति वचनात्। ते च कषायविशेषाः जिननामबन्धं प्रति हेतुत्वेन दधानाः औपशमिकाद्यन्यतमसम्यक्त्वविहीनाः न संभवन्ति, नच तादृशाः कषायाः सर्वजीवानां संभवन्ति। येऽपि जिननामबन्धहेतुविशेषाः कषायाः तेऽपि प्रतिनियता एव-कतिपया अविरतादारभ्यापूर्वकरणषष्ठभागं यावत् संभविनः न परतः, ततो न कश्चिद्दोषः। ननु सम्यक्त्वानुगताः काषायिकाध्यवसायविशेषाः किंस्वरूपा यैर्जिननाम निबध्यते? श्रूयतामत्रार्थे श्रीमन्मलयगिरिपादोक्तमेव—

"सकलजगदुद्धर्तुकामितादिपरमगुणसमूहसमन्विताः। तथाहि—यो भावी भगवांस्तीर्थकृत् स औपशमिकाद्यन्यतमसम्यक्त्वावाप्तौ सत्यां सकलस्यापि संसारस्यादिमध्यावसानेष्वत्यन्तं नैर्गुण्यमवधार्य महाशयः तथाभव्यत्वविशेषयोगत एवं चिन्तयति 'अहो चित्रमेतत्। यत्सत्यपि पारमेश्वरे प्रवचने स्फुरत्तेजसि दुःखपरीतचेतसो जन्तवः संसारगहने महामोहान्धकारविलुप्तसत्पथे मूढमनस्का सर्वैः परिभ्रमन्ति, तदहमेतानतः संसारादनेन प्रवचनेन यथायोगमुत्तारयामीति' एवं च चिन्तयित्वा स महात्मा सदैव परार्थव्यसनी करुणादिगुणोपेतः प्रतिक्षणं परार्थकरणप्रवर्धमानाशयो यथा यथा परेषामुपकारो भवति तथा तथा चेष्टते। तत इत्थं सत्त्वानां तत्कल्याणसम्पादनेनोपकारं कुर्वंस्तीर्थकर-

नाम समुपार्ज्य परं सत्त्वार्थसाधनं तीर्थकरत्वमवाप्नोति । उक्तं च–"अनेन भवनैर्गुण्यं सम्यग्वीक्ष्य महाशयः । तथाभव्यत्वयोगेन विचित्रं चिन्तयत्यसौ ॥ १ ॥ मोहान्धकारगहने, संसारे दुःखिता बत । सत्त्वाः परिभ्रमन्त्युच्चैः सत्यस्मिन् धर्मतेजसि ॥ २ ॥ अहमेतानतः कृच्छ्रान् यथायोगं कथञ्चन । अनेनोत्तारयामीति वरबोधिसमन्वितः ॥ ३ ॥ करुणादिगुणोपेतः परार्थव्यसनी सदा । तथैव चेष्टते धीमान्, वर्धमानमहोदयः ॥ ४ ॥ तत्तत्कल्याणयोगेन, कुर्वन् सत्यार्थमेव सः । तीर्थकृत्त्वमवाप्नोति परं सत्त्वार्थसाधनम् ॥ ५ ॥ तत्रानेनेति सम्यक्त्वेन यस्तु सम्यक्त्वावाप्तौ स्वजनादिषु यथोक्तचिन्तां करोति, स श्रीमान् गणधरलब्धिमासादयति, यः पुनः सम्यक्त्वावाप्तौ भवनैर्गुण्यदर्शनतस्तन्निर्वेदादात्मनिःसरणमेव केवलमभिवाञ्छति तथैव चेष्टते स मुण्डकेवली भवति । उक्तं च–चिन्तयन्त्येवमेवैतत् स्वजनादिगतं तु यः । तथाऽनुष्ठानतः सोऽपि धीमान् गणधरो भवेत् ॥ १ ॥ संविग्नो भवनिर्वेदादात्मनिःसरणं तु यः । आत्मार्थं सम्प्रवृत्तोऽसौ सदा स्यात् मुण्डकेवली ॥२॥" इति ।

अत्राविशेषितं सम्यक्त्वं सामान्येन जिननामबन्धस्य कारणमुक्तं; एतेन, कैश्चिद्दिक्पटैः यत् प्रथमौपशमिकसम्यक्त्वेऽल्पकालत्वहेतुना जिननाम्नो बन्धाभावः प्रोच्यते, नेमिचन्द्रेण तु यत् सम्यक्त्वसामान्यं "सम्मेव तित्थबन्धो" इत्यादिना, जिननामबन्धहेतुमभिधाय विशेषनियमे केवलिद्विकोपान्ते नरा जिननामबन्धप्रारम्भका उक्ताः, तदुक्तम्–

"पढमसुवसमिये सम्मे सेसतिगे अविरदादि चत्तारि । तित्थयरबन्धपारंभया णरा केवलिदुगंते" ॥१॥ अस्या व्याख्या–"प्रथमोपशमसम्यक्त्वे शेषद्वितीयोपशमक्षायोपशमक्षायिकसम्यक्त्वेषु च असंयताद्यप्रमत्तान्तमनुष्या एव तीर्थंकरबन्धं प्रारम्भन्ते । तेऽप्रत्यक्षकेवलिश्रुतकेवलिश्रीपादोपान्त एव । अत्र प्रथमोपशमसम्यक्त्वे इति भिन्नविभक्तिकरणं तत्सम्यक्त्वे स्तोकान्तर्मुहूर्तकालत्वात् षोडशभावनासमृद्ध्याऽभावात् तद्बन्धप्रारम्भो न इति केषाञ्चित्पक्षं ज्ञापयति । नरा इति विशेषणं शेषगतिज्ञानमपाकरोति, विशिष्टप्रणिधानक्षयोपशमादिसामग्रीविशेषाभावात्, न च तिर्यग्वर्जितगतित्रये तीर्थबन्धाभावोऽस्ति, तद्बन्धकालस्योत्कृष्टनान्तर्मुहूर्ताधिकाष्टवर्षोनपूर्वकोटिद्वयाधिकत्रयस्त्रिंशत्सागरोपममात्रत्वात् । केवलिद्वयान्ते एवेति नियमः । तदन्यत्र तादृग्विशुद्धिविशेषासंभवात्"

एतत्सर्वं स्वकल्पनाकल्पितं प्रतिभासते, तत्कल्पनायां मानाभावात् । श्रुतकेवलिभद्रबाहुस्वामिभिरपि सम्यग्दृष्टिना सता विंशतिस्थानकैः तद्बध्यत इत्येवोक्तं न तु केवलिद्वयपादान्ते षोडशभावनासमृद्धिभिः । तथा चाहुरावश्यकनिर्युक्तौ–

"पढमो तित्थयरत्तं वीसहि ठाणेहि कासीय ॥ अरिहन्तसिद्ध पवयणगुरुथेरबहुस्सुए तवस्सीसुं । वच्छलया एएसिं अभिक्खनाणोवआगे य ॥ १७९ ॥ दंसणविणए आवस्सए य सीलव्वए निरइआरो । खणलवतवच्चियाए वेयावच्चे समाही य ॥ १८० ॥ अप्पुव्वनाणगहणं सुयभत्ती पवयणे पभावणा । एएहिं कारणेहिं, तित्थयरत्तं लहइ जीवो ॥ १८१ ॥" हारिभद्रीया वृत्तिः–तत्र अशोकाद्यष्टविधमहाप्रातिहार्यादिरूपां पूजामर्हन्तीति अर्हन्तः शास्तार इति भावार्थः ॥ १ ॥ सिद्धास्तु अशेषनिष्ठितकर्मांशाः परमसुखिनः कृतकृत्या इति भावार्थः ॥ २ ॥ प्रवचनं–श्रुतज्ञानं तदुपयोगानन्यत्वाद्वा सङ्घ इति ॥ ३ ॥ गृणन्ति शास्त्रार्थमिति गुरवः–धर्मोपदेशादिदातार इत्यर्थः ॥ ४ ॥ स्थविराः जाति-

श्रुतपर्यायभेदभिन्नाः । तत्र जातिस्थविरः षष्टिवर्षः, श्रुतस्थविरः समवायधरः, पर्यायस्थविरो विंशतिवर्षपर्यायः ॥ ६ ॥ बहुश्रुतं येषां ते बहुश्रुताः, आपेक्षिकं बहुश्रुतत्वं, एवमर्थेऽपि संयोज्यं, किन्तु सूत्रधरेभ्योऽर्थधराः प्रधानाः तेभ्योऽप्युभयधरा इति ॥ ६ ॥ विचित्रमनशनादिलक्षणं तपो विद्यते येषां ते तपस्विनः सामान्यसाधवो वा ॥ ७ ॥ अरहन्तश्च ( अर्हन्तश्च ) सिद्धाश्च प्रवचनं च गुरवश्च स्थविराश्च बहुश्रुताश्च तपस्विनश्च अर्हन्तसिद्धप्रवचनगुरुस्थविरबहुश्रुततपस्विनः । वत्सलभावो वत्सलता सा चानुरागयथावस्थितगुणोत्कीर्तना यथानुरूपोपचारलक्षणा तया, एतेषामर्हदादीनामिति, प्राक् षष्ठयर्थे सप्तमी "बहुस्सुए तवस्सीणं" वा पाठान्तरं, तीर्थकरनामगोत्रं कर्म बध्यत इति । अभीक्ष्णं—अनवरतं ज्ञानोपयोगे च सति बध्यते ॥ ८ ॥ दर्शनं—सम्यक्त्वं, विनयो—ज्ञानादिविनयः स च दशवैकालिकादवसेयः, दर्शनं च विनयश्च दर्शनविनयौ तयोर्निरतिचारः तीर्थकरनामगोत्रं कर्म बध्नाति ॥ ९—१० ॥ आवश्यकम्—अवश्यकर्तव्यं संयमव्यापारनिष्पन्नं तस्मिंश्च निरतिचारः सन्निति ॥ ११ ॥ शीलानि च व्रतानि च शीलव्रतानि, शीलानि—उत्तरगुणाः व्रतानि—मूलगुणाः तेषु च अनतिचार ॥ १२ ॥ क्षणलवग्रहणं कालोपलक्षणं क्षणलवादिषु संवेगभावनाध्यानासेवनतश्च बध्यते ॥ १३ ॥ तथा तपस्त्यागयोर्बध्यते, यो हि यथाशक्त्या ( यथाशक्ति ) तपः आसेवते त्यागं च प्रतिजने विधिना करोति ॥ १४—१५ ॥ व्यावृतभावो वैयावृत्त्यं, तच्च दशधा—तस्मिन् सति बध्यते ॥ १६ ॥ समाधिः गुर्वादीनां कार्यकरणेन स्वस्थताऽऽपादनं समाधौ च सति बध्यते ॥ १७ ॥ तथा अपूर्वज्ञानग्रहणं अपूर्वज्ञानग्रहणे सति ( बध्यते ) ॥ १८ ॥ श्रुतभक्तिः श्रुतबहुमानः स च विवक्षितकर्मबन्धनकारणमिति ॥ १९ ॥ यथा प्रवचनप्रभावनता च सा च यथाशक्त्या मार्गदेशनेति ॥ २० ॥ एवमेभिः कारणैः अनन्तरोक्तैः तीर्थकरत्वं लभते जीव इति गाथात्रयार्थः ॥ १७९ ॥ १८० ॥ १८१ ॥ "पुरिमेण पच्छिमेण य एए सव्वेएवि फासिया ठाणा । मज्झिमएहिं जिणेहिं एक्कं दो तिण्णि सव्वे वा ॥ १८२ ॥ गमनिका—पुरिमेण पश्चिमेण च एतानि—अनन्तरोक्तानि सर्वाणि स्पृष्टानि स्थानानि, मध्यमैः एकं द्वे त्रीणि सर्वाणि चेति गाथार्थः ॥ १८२ ॥" तं च कहं वेइज्जइ ? अगिलाए धम्मदेसणाईहिं । बज्झइ तं तु तइयभवे सक्कइत्ताणं ॥ १८३ ॥ गमनिका—तच्च तीर्थकरनामगोत्रं कर्म कथं वेद्यत इति, अग्लानया धर्मदेशनादिभिः, बध्यते तत्तु भगवतो यो भवस्तस्मात्तृतीयं भवमपसर्प्य, अथवा बध्यते तत्तु भगवतं तृतीयं भवं प्राप्य, ओसक्कइत्ताणं ति तत्स्थितिं संसारं वाऽवसर्प्येति तस्य ह्युत्कृष्टा सागरोपमकोटीकोटिर्बन्धस्थितिः, तच्च प्रारम्भबन्धसमयादारभ्य सततमुपचिनोति, यावदपूर्वकरणसंख्येयभागैरिति, केवलिकाले तु तस्योदय इति गाथार्थः ॥ १८३ ॥" अत्र श्रीहरिभद्रसूरिभिः कोटीकोटिप्रमाणो बन्धः प्रोक्तः स किञ्चिन्न्यूनत्वाविवक्षणात् अवसीयते, सर्वत्र सम्यग्दृष्टेः अन्तःसागरोपमकोटीकोटिप्रमाणस्य बन्धस्योक्तत्वात् ।

नेचाऽनाकुट्टिकया प्रमत्तस्योत्कृष्टतः अष्टौ वर्षाणि स्थितिबन्धः, जघन्यतोऽन्तर्मुहूर्तप्रमाणा स्थितिः, एवमप्रमत्ते उत्कृष्टतो मुहूर्ताष्टकं जघन्यतोऽन्तर्मुहूर्तप्रमाणं स्थितिबन्धं बध्नातीति पञ्चाशके तदुक्तं—

१ इतः प्रारभ्य प्रमत्ताप्रमत्तयोरिव मतान्तरमपि वाच्यमित्यनेन सम्बन्धः ।

"अपमत्तसंजयाणं बन्धट्ठिति होति अट्ठ उ मुहुत्ता । उक्कोसेण जहण्णा भिण्णमुहुत्तं तु विण्णेया ॥ १ ॥
जे उ पमत्ताणाउट्टियाएँ बन्धन्ति तेसि बन्धठिती । संवच्छराणि अट्ठ उ उक्कोसियरा मुहुत्तं तो ॥ २ ॥"
**अभयदेवसूरिकृतावृत्तिः**—"अप्रमत्तसंयतानां—सप्तमगुणस्थानकवतां बन्धतः स्थितिर्बद्धस्य कर्मणोऽवस्थानं भवति स्यादष्ट तु—अष्टावेव मुहूर्त्तान्गाडिकाद्वयमानान् उत्कर्षेण—उत्कृष्टतः, जघन्या तु सर्वाल्पा पुनर्भिन्नमुहूर्त्तमन्तर्मुहूर्त्तं यावत् । तुशब्दः पुनरर्थे योजित एव, विज्ञेयाऽवसेया, कषायाणां स्थितिबन्धहेतूनां विद्यमानत्वादिति । ये तु—ये पुनः प्रमत्ताः—प्रमत्तसंयताः षष्ठगुणस्थानवर्तिनः अनाकुट्टिकया—अनुपेत्यकरणेन प्राणातिपातादौ वर्तमाना बध्नन्ति आवर्जयन्ति कर्म तेषां बन्धस्थितिः कर्मबन्धावस्थानं संवत्सरान् वर्षाणि अष्ट तु अष्टावेव उत्कर्षा उत्कृष्टा भवति, इतरा जघन्या पुनर्मुहूर्त्तान्तमन्तर्मुहूर्त्तं यावत्" इति गाथाद्वयार्थः ।

**अन्यत्र शतकादौ तु सास्वादनादारभ्यापूर्वकरणान्तं यावत् अन्तःसागरोपमकोटीकोटीप्रमाणं बन्धमुपरचयति, नाधिकः नापि न्यूनः, तदुक्तं—**

"साणाइअपुव्वन्तो अयरन्तो कोडीकोडिओ नहिगो । बन्धो नहु हीणो नय मिच्छे भवियर सन्निम्मि ॥ १ ॥" व्याख्या—प्राकृतत्वान्निर्देशस्य 'साणाइ' त्ति सास्वादनमादौ यस्य तत् सास्वादनादि, अपूर्वकरणमन्ते यस्य गुणस्थानकदम्बकस्य तदपूर्वान्तं, सास्वादनादि च तदपूर्वान्तं च सास्वादनाद्यपूर्वान्तं, तस्मिन् सास्वादनाद्यपूर्वान्ते गुणस्थानककदम्बकेऽतराणां सागरोपमाणामन्तर्मध्ये कोटीकोट्यन्तरान्तः कोटीकोटी तस्या अन्तरान्तः कोटीकोटीतः "( ७–२–८४ आद्यादिभ्य इति आद्यादेराकृतिगणत्वात्तस् प्रत्ययः )" न नैवाधिको बन्धो भवति, किन्तु मिथ्यादृष्टेरेव भवतीति सामर्थ्याद्गम्यते । इदमुक्तं भवति,—सास्वादनादीनामपूर्वकरणान्तानां भिन्नग्रन्थिकत्वात् सागरोपमान्तःकोटीकोटीरूपैव स्थितिर्युज्यते, न तु परतोऽपि । ननु भिन्नग्रन्थिकानप्याश्रित्य सप्ततिसागरोपमकोटाकोटीप्रमाणो मिथ्यात्वस्योत्कृष्टः स्थितिबन्धः कर्मप्रकृत्यादिषु निरूपितस्तत्कथमुच्यते भिन्नग्रन्थिकत्वादन्तःकोटाकोटीरूपैव स्थितिर्युज्यते न परतोऽपि ? सत्यम् , अस्ति भिन्नग्रन्थिकानामुत्कृष्टोऽपि स्थितिबन्धः केवलं परित्यज्य सम्यक्त्वं मिथ्यादृष्टिगुणस्थानकप्राप्तानामेवासौ संभवति, अत्र तु भिन्नग्रन्थिकानां सास्वादनादीनामेवान्तःसागरोपमकोटीकोटीपरतः स्थितिबन्धो निषिध्यत इत्यदोषः । यत्पुनः "बन्धेण न वोलेइ कयाई" इति वचनादावश्यकादिषु भिन्नग्रन्थिकस्य मिथ्यादृष्टेरप्युत्कृष्टः स्थितिबन्धः प्रतिषिध्यते तत्सैद्धान्तिकमतमेव, कार्मग्रन्थिकाभिप्रायतस्तु भिन्नग्रन्थिभिर्मिथ्यात्वस्योत्कृष्टापि स्थितिर्बध्यते, केवलं तथाविधतीव्रानुभागयुक्ताऽसौ न भवति । ननु सागरोपमान्तःकोटीकोटीतः समर्गलतरः सास्वादनादीनां बन्धो माभूदधस्तात्ततो भवति वा न वेत्याह—'न हु' नैव हीनो—न्यूनः सागरोपमान्तःकोटीकोटीतः सकाशात् स्थितिबन्धो भवति । एतदुक्तं भवति सास्वादनादिष्वपूर्वकरणपर्यवसानेषु गुणस्थानकेषु सागरोपमान्तःकोटीकोटीप्रमाणैव स्थितिर्भवति, नाधिका नाप्यूनेत्यर्थः । ननु यदैकेन्द्रियादिः सास्वादनगुणस्थानी भवति तदा सागरोपमत्र्यादिसप्तभागरूपमेव स्थितिबन्धं विधत्तेऽतः सास्वादनाद्यपूर्वान्तेषु न हु हीनो बन्ध इति कथं घटाकोटीमाटीकते ? सत्यमेतत् केवलं कादाचित्कोऽसौ न सार्वदिक इति न तस्य विवक्षा कृतेति संभावयामः, अपूर्वकरणात् परतोऽनिवृत्तिकरणादौ सागरोपमान्तःकोटीकोटीतोऽपि हीनः स्थितिबन्धो भवतीति सामर्थ्याद्गम्यते । अथ किं

सास्वादनादिष्वेवान्तःसागरोपमकोटीकोटीतो हीनः स्थितिबन्धो न लभ्यते, आहोस्विन्मिथ्यादृष्टेरपि प्रतिविशिष्टस्य कस्यचिज्जन्तोरित्याह—'न य मिच्छे भवियरसन्निम्मि' त्ति न च नैव 'मिच्छ'त्ति मिथ्यादृष्टौ संज्ञिशब्दस्य प्रत्येकं सम्बन्धात्, भव्यश्चासौ संज्ञी च भव्यसंज्ञी तस्मिन् भव्यसंज्ञिनि, इतरश्चाभव्यः स चाऽसौ संज्ञी चेतरसंज्ञी तस्मिन्नितरसंज्ञिनि अभव्यसंज्ञिनीत्यर्थः । आयुर्वर्जानां सप्तानां कर्मप्रकृतीनां सागरोपमान्तकोटीकोटीतो हीनो न भवति, भव्यसंज्ञी मिथ्यादृष्टिरिति ग्रहणात् भव्यसंज्ञिनः कस्मिंश्चित् गुणस्थानकेऽनिवृत्तिबादरादौ हीनोऽपि बन्धो भवतीत्याचष्टे, संज्ञिग्रहणाच्चाभव्येऽप्यसंज्ञिनि हीन एव प्रतिनियतसप्तभागरूपाया एव प्रागसंज्ञिनः प्रतीत्य स्थितेर्भणनात्, अभव्यसंज्ञिनि तु सागरोपमान्तःकोटीकोटीतो हीनो बन्धो न भवत्येव, यतो भिन्नग्रन्थिकस्यैव हीनो बन्धः स्यात्, अभव्यसंज्ञी चोत्कृष्टतोऽपि ग्रन्थिप्रदेशमेवाभ्येति, तदनन्तरं ग्रन्थिं प्राप्य भूयोऽपि निवर्तते, निवर्त्य च प्रभूतं स्थितिबन्धं करोतीति" इति प्रमत्ताप्रमत्तगुणस्थानयोरिव मतान्तरमपि वाच्यम्, श्रुतकेवलिना भद्रबाहुस्वामिनान्तःकोटीकोट्यभ्यन्तरवर्तिनः जन्तोः सम्यक्त्वादिसामायिकलाभानामावश्यकनिर्युक्तौ प्रतिपादनात्, तदुक्तं—"सत्तण्हं पयडीणं अब्भितरओ उ कोडिकोडीणं। काऊण सागराणं जइ लहइ चउण्हमण्णयरं ॥ १ ॥" श्रीमद्धरिभद्रसूरिभिरप्येऽवमेव वृत्तौ प्रतिपादितमिति । बध्यते तत्तु भगवतः 'तृतीयं भवं प्राप्य' इति तु निकाचनापेक्षं ज्ञेयम् "तस्य ह्युत्कृष्टा सागरोपमकोटीकोटिर्बन्धस्थितिः" इत्यनिकाचनापेक्षया । "तच्च प्रारम्भबन्धसमयादारभ्य सततमुपचिनोति" इत्यनेन ध्रुवबन्धित्वं प्रतिपादितमिति । तृतीयभवं प्राप्येत्यादितः यावत् अपूर्वकरणसंख्येयभागैरित्यन्तेनोत्कृष्टतः किञ्चिन्न्यूनपूर्वकोटिद्वयाधिकत्रयस्त्रिंशत्सागरोपमं यावत् बध्यते तीर्थकरनामकर्मेति सूचितम्, तथाहि-तीर्थकरभवादर्वाक् तृतीयभवे पूर्वकोट्यायुषा निकाच्यते, ततोऽनुत्तरेषु देवो जातः ततश्च्युत्वा चतुरशीतिलक्षपूर्वप्रमाणायुः तीर्थकरो जातः, तत्रापि पूर्वमनुष्यभवसत्कः निकाचनादर्वाक्तनकालः जिनभवसत्कसहस्रवर्षन्यूनसप्तदशलक्षपूर्वकालश्चेत्येवंरूपं किञ्चिदूनत्वं बोध्यमिति। एतेन "तद्बन्धकालस्योत्कृष्टेनान्तर्मुहूर्ताधिकाष्टवर्षोनपूर्वकोटिद्वयाधिकत्रयस्त्रिंशत्सागरोपममात्रत्वात्" इति स्वकल्पनाकल्पितमिति प्रागुक्तं सुस्पष्टं जातम्। न च पूर्वकोट्यायुष्कनरापेक्षयेदं कालमानं संभवतीति वाच्यम्, उत्कृष्टतः चतुरशीतिलक्षपूर्वायुष एव जिना भवन्तीत्यनेकेषु ग्रन्थेषूपलम्भात्, किञ्च तथाभ्युपगमेऽपि केवलिनि तीर्थकरनाम्नः बन्धस्य त्वयाऽप्यनभ्युपगमेन त्वदुक्तकालमानस्य कथं सङ्गतिः स्यात् ? न च केचन तीर्थकराः केवलज्ञानं प्राप्यान्तर्मुहूर्तेनैव शिवंगामिनः भविष्यन्तीति ग्रथिलत्वमपि प्रकाश्यम्, जघन्यतोऽपि त्रिंशद्वर्षप्रमाणकेवलिपर्यायस्याभिधानात् । किञ्चान्तर्मुहूर्ताभ्यधिकाष्टवर्षोनत्वमपि न सङ्गतिमञ्चति, तथाहि किं तीर्थकरनामकर्म सम्यग्दृष्टिः देशविरतिः सर्वविरतिर्वा बध्नाति ? आद्यपक्षेऽष्टवर्षादर्वाक् कथं न बध्यते ? तत्रापि सम्यक्त्वस्य सद्भावात्, देशविरतिश्चेत् ? देशविरतित्वमपि जघन्यतो गर्भस्थकालाभ्यधिकाष्टवर्षको लभ्यते, न ततोऽधोवर्ती, तदुक्तं श्रीमन्मलयगिरिपादैः—"इह किल कोऽपि पूर्वकोट्यायुष्को गर्भस्थो नव मासान् सातिरेकान् गमयति, जातोऽप्यष्टौ वर्षाणि यावद्देशविरतिं सर्वविरतिं वा न प्रतिपद्यते,

वर्षाष्टकादधो वर्तमानस्य सर्वस्यापि तथास्वाभाव्यात् देशतः सर्वतो वा विरतिप्रतिपत्तेरभावात्" इति, यदि चान्तर्मुहूर्त्तं गर्भावस्थायामुषित्वा ततो जन्म ततो वर्षाष्टकं यावदविरतः ततो देशविरतिं सर्वविरतिं वा प्रतिपद्यत इति वक्तव्ये तु निरुत्तरा वयमित्येव ब्रूमः! ननु भवन्मते षड्वार्षिकोऽतिमुक्तकुमारः षण्मासिको वज्रस्वामी भावतः प्रतिपन्नसर्वसावद्यविरतिरिति श्रूयते, तदुक्तं-"छम्मासियं छसु जयं माऊए समन्नियं वंदे" इति चेत्? सत्यम्, परं साऽऽश्चर्यभूता कादाचित्कीति न दोषः, तदुक्तं श्रीमद्धरिभद्रसूरिभिः पञ्चवस्तुके-"तयहो परिभवखेत्तं न चरणभावो वि पायमेएसिं। आहच्च भावकहगं सुत्तं पुण होइ नायव्वं ॥१॥" इति। "तीर्थंकरबन्धप्रारंभका नराः" इति तु सत्यमुक्तं, तत्संवादिनी चेयं श्रीमद् भद्रबाहुस्वामिकृता गाथा "नियमा मणुयगईए इत्थी पुरिसेयरो य सुहलेसो। आसेविय बहुलेहिं वीसाए अन्नयरएहिं॥ १ ॥" इति। 'वीसाए' इत्यनेन प्रागुक्तं विंशतिस्थानाराधनमेव तीर्थकरनामकर्मणः विशेषबन्धहेतुत्वमुक्तं, न केवलायाः षोडशभावनायाः कुत्रापि हेतुत्वमुक्तं, तेन "प्रथमौपशमिकसम्यक्त्वे स्तोकान्तर्मुहूर्त्तकालत्वात् षोडशभावनासमृद्ध्यभावो जिनबन्धानारम्भे कारण"मिति प्रत्युक्तं, यदि वक्ष्यमाणतत्त्वार्थसूत्रगतकारणानामेव षोडशभावनात्वं व्यपदिश्यते तदा न वयं निराकुर्मः, परं सिद्धपूजादीनां तदकारणत्वापत्तिरिति । 'केवलिद्विकान्ते' इत्यपि न केनचिदाचार्येणोक्तम्, अस्मदीयैः पूर्वाचार्यैः नोक्तमित्येव न, किन्तूभयसम्मतश्रीमदुमास्वातिवाचकमुख्यैरपि नोक्तं। तथा च तद्ग्रन्थः-"दर्शनविशुद्धिर्विनयसम्पन्नता शीलव्रतेष्वनतिचारोऽभीक्ष्णं ज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी संघसाधुसमाधिर्वैयावृत्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्रभावनाप्रवचनवत्सलत्वं तीर्थकृत्त्वस्य ॥२२॥" इति।

(तत्त्वार्थसूत्रम्) उमास्वातिकृद्भाष्यम्-"परमप्रकृष्टा दर्शनविशुद्धिः विनयसम्पन्नता च शीलव्रतेष्वात्यन्तिको भृशमप्रमादोऽनतिचारः, अभीक्ष्णं ज्ञानोपयोगः, संवेगश्च, यथाशक्तितस्त्यागस्तपश्च, संघस्य साधूनां च समाधिवैयावृत्यकरणमर्हत्स्वाचार्येषु च बहुश्रुतेषु प्रवचने च परमभावविशुद्धियुक्ता भक्तिः, सामायिकादीनां भावतोऽनुष्ठानस्यापरिहाणिः, सम्यग्दर्शनादेर्मोक्षमार्गस्य निहत्य मानं करणोपदेशाभ्यां प्रभावना, अर्हच्छासनानुष्ठायिनां श्रुतधराणां बालवृद्धतपस्विशैक्षकग्लानादीनां च संग्रहोपग्रहानुग्रहकारित्वं प्रवचनवत्सलत्वमित्येते गुणाः समस्ता व्यस्ता वा तीर्थकरनाम्न आश्रवा भवन्तीति ॥२३॥"

अस्य श्रीमती सिद्धसेनीया वृत्तिः-"परममित्यतिशयेन सुष्ठु प्रकृष्टा प्रकर्षपर्यन्तवर्तिनी परित्यक्तशङ्कादिदोषाः शङ्कादयश्च वक्ष्यमाणाः सम्यग्दर्शनमलाः, का पुनरसौ परमप्रकृष्टेत्याह दर्शनविशुद्धिरिति तत्त्वार्थश्रद्धानं सम्यग्दर्शनमुक्तलक्षणविधानं दृष्टिः दर्शनं-तत्त्वविषया रुचिः प्रीतिः जीवादिषु प्रत्ययावधारणं तस्य दर्शनस्य (वि-) शुद्धिः-निर्मलता यथा नाना चित्रं विचित्रमिति क्षायोपशमिकौपशमिकक्षायिकाणां सम्यग्दर्शनानां यथास्वं नानाशुद्धिः विशुद्धिः तीर्थंकरनामकर्मण आश्रवाः ॥ "विनयसम्पन्नता चे"ति विनीयतेऽनेनाष्टप्रकारं कर्मेति विनयः, स च ज्ञानदर्शनचारित्रोपचारभेदेन चतुर्धा, तत्र ज्ञानविनयः कालविनयबहुमानोपधानादिः, दर्शनविनयो निश्शङ्कनिष्कांक्षादिभेदः, चरणविनयः समितिगुप्तिप्रधानः, उपचारविनयोऽभ्युत्थानासनप्रदानाञ्जलिप्रग्रहादिभेदः, एवंविधेन विनय-

परिणामेन परिणतः कर्त्ता विनयसम्पन्न उच्यते, तद्भावो विनयसम्पन्नता, सा च तीर्थकरनामकर्मण आश्रवः, चशब्दः समुच्चयार्थः ।। "तथा शीलव्रतेष्वात्यन्तिको भृशमप्रमादोऽनतिचारः," शीलमुत्तरगुणाः पिण्डविशुद्धिसमितिभावनादयः प्रतिमाऽभिग्रहलक्षणा मुमुक्षोः समाधिहेतुत्वात् शीलशब्दाभिधेयाः, व्रतग्रहणात् पञ्च महाव्रतानि रजनीभक्तविरतिपर्यवसानलक्षणान्याक्षिप्तानि, शीलानि च व्रतानि च शीलव्रतानि, तेष्विति तद्विषयः आत्यन्तिकोऽत्यन्तभावः संयमप्रतिपत्तिकालादारभ्य यावदायुषः क्षयस्तावदविश्रान्त्या भवत्यात्यन्तिकोऽप्रमादः सम्बध्यः, 'भृश'मिति प्रकर्षवचनः प्रकृष्टोऽप्रमादो भृशमप्रमादो विकटेन्द्रियविकथाकषायनिद्रालक्षणः पञ्चधा प्रमादः, अनेन ह्याविष्टो जीवः कार्याकार्यविमुखत्वादाधाकर्मादि प्राणातिपातादि वा परिहर्तुमक्षमो भवति, न प्रमादोऽप्रमादः प्रमादपरिवर्जनमप्रमत्तता अनतिचार उच्यते, अतिचरणमतिचारः स्वकीयागमातिक्रमः, नातिचारोऽनतिचारः उत्सर्गापवादात्मकसर्वज्ञप्रणीतसिद्धान्तानुसारितया शीलव्रतविषयमनुष्ठानमित्यर्थः, एतच्च तीर्थकरनामकर्मण आश्रवः ।। "अभीक्ष्णं ज्ञानोपयोगः" इति अभीक्ष्णं–मुहुर्मुहुः प्रतिक्षणं, ज्ञानं–द्वादशाङ्गप्रवचनं प्रदीपाङ्कुशप्रसादप्लवस्थानीयं तत्रोपयोगः प्रणिधानं सूत्रार्थोभयविषय आत्मनो व्यापारः तत्परिणामतेति यावत् वाचनापृच्छनानुप्रेक्षाम्नायधर्मोपदेशैरभ्यसनं तीर्थकरनामकर्मण आश्रवः ।। "संवेगश्चेति" अभीक्ष्णमिति सम्बध्यते, चशब्दः समुच्चितौ. संवेजनं संवेगो भीतिः विचलनं वा संसारदुःखात् जातिजरामरणस्वभावात् प्रियविप्रयोगादेश्च, भयपरिणामः प्रतिक्षणं जगत्कायानित्याशुचित्वादिचिन्तनाच्च सांसारिकसुखेष्वनभिलाषः तत्प्रवणपरिणामात् विचलनं संवेगः स चाभीक्ष्णं तादृशः परिणामः समुपजायमानः तीर्थकरनाम्न आश्रवः ।। "यथाशक्तितस्त्यागः" इति यथाऽऽत्मानुरूपा शक्तिः सामर्थ्यं सत्त्वोत्कर्षः यथाशक्तिः तत्पूर्वकः त्यागः स्वानुरूपशक्त्यपेक्षः स्वस्य न्यायार्जितस्यतानुकम्पानिर्जितात्मानुग्रहालम्बनं भूतेभ्यः, विशेषतस्तु विधिना यतिजनाय दानं त्यागः तीर्थकरनामकर्मण आश्रवः ।। 'तपश्चे'ति यथाशक्तिरित्यभिसम्बध्यते, कर्मणः तापनात् शोषणात् तपः तद् द्विधाऽन्तर्बहिर्भेदात्, पुनरेकैकं षोढा प्रायश्चित्तादिभेदात् अनशनादिभेदाच्च, तत्स्वसामर्थ्यापेक्षम–नुष्ठीयमानं लोकपङ्क्तिपूजाभिलाषतृष्णानिरपेक्षेण चेतसा तीर्थकरनामकर्मण आश्रवः ।। सङ्घः समूहः सम्यक्त्वज्ञानचरणानां तदाधारश्च साध्वादिः चतुर्विधस्तस्य समाधानं–स्वस्थता निरुपद्रवत्वं समाधिः तस्य करणं जननं–उत्पादनं तत्करोति, येन ज्ञानदर्शनचरणानां वृद्धिः भवति दिवसमनाबाधश्च, साधुसंयतीदेशयतिपुरुषयोषितः, ज्ञानदर्शनचारित्रलक्षणाभिः पौरुषेयीभिः शक्तिभिः मोक्षं साधयन्तीति साधवः, तेषां च वैयावृत्यकरणं व्यावृत्तः तत्कार्यानुष्ठानप्रवणः–तस्य व्यावृत्तस्य भावो वैयावृत्त्यं साधूनां मुमुक्षूणां प्रासुकाहारोपधिशय्यास्तथा भेषजविश्रामणादिषु पूर्वत्र च व्यावृत्तस्य मनोवाक्कायैः शुद्धपरिणामो वैयावृत्त्यमुच्यते, चशब्दः समुच्चये, अथवा संघभट्टारकस्य समाध्युत्पादनम्, भावः चित्तपरिणामः परमार्थो भावः तस्य विशुद्धिः–निर्मलता, अथवा परमा चासौ भावशुद्धिश्च तद्युक्ता भक्तिः स्वगुणसन्दोहोत्कृष्टसमस्तसुरासुरपुरुषेश्वरेष्वचिन्त्यसामर्थ्येषु सन्मार्गोपदेशात् परमोपकारिषु प्रकृष्टमनःपरिणामशुद्धिपूर्विका भक्तिः सद्भूतातिशयोत्कीर्तनवन्दनसेवापुष्पधूपगन्धाभ्यर्चनायतनप्रतिमाप्रतिष्ठापनस्नपनविधिरूपा तीर्थकरनामकर्मण आश्रवः ।। पञ्चविधाचारानुष्ठानात् यतिजनाचरणीयोपदेशाद्वाऽऽचार्या धर्मोपदेशनी-

क्षाव्रतोपदेशादिगुवाचका वा भवन्त्याचार्याः, अत्रैव श्रुतवाचनाचार्यत्वादुपाध्यायग्रहणम्, अङ्गानङ्गप्रकीर्णकाद्यनेकश्रुततदर्थोभययोगात् बहुश्रुताः, प्रोच्यन्ते अनेन जीवादयः पदार्था इति प्रवचनमागमः श्रुतज्ञानं, चशब्दः समुच्चये, एतेषु परमभावविशुद्धा भक्तिः यथासंभवमभिगमनवन्दनपर्युपासनयथाविहितक्रमपूर्वकाध्ययनश्रवणश्रद्धानलक्षणा तीर्थकरनामकर्मण आश्रवः ॥ "सामायिकादीनामि" त्यादिः अरक्तद्विष्टः समः तस्यायो लाभः चरणज्ञानदर्शनप्राप्तिः स प्रयोजनमस्येति सामायिकं सकलसावद्यविरतिलक्षणं, प्रतिक्रमणकादि—तदादिर्येषामावश्यकानां तानि सामायिकादीनि तेषां सामायिकादीनामावश्यकानामवश्यमहोरात्राभ्यन्तरे कर्तव्यान्यावश्यकान्यवश्यतयाऽनुष्ठेयानि, तानि च सप्तदशविधानि संयमविषयव्यापाररूपत्वादनेकप्रकाराणि इच्छामिथ्यातथाकारादीनि तेषां भावतोऽनुष्ठानस्यापरिहाणिः 'भावत' इति तदुपयोगानन्यत्वकथनम्, अनुपयुक्तस्य हि सर्वक्रियाऽनुष्ठानं द्रव्यमात्रत्वात् शुभबन्धनिर्जराफलशून्यमेव प्रवचने च घुष्यते, न सद्भावाविहितचेतसो यदनुष्ठानकरणं तस्यापरिहाणिः, यथाविहितकालासेवनमन्यूनानतिरिक्ततयेत्येवमेषा आवश्यकापरिहाणिः तीर्थकरनामकर्मण आश्रवो भवति ॥ 'सम्यग्दर्शने' त्यादि, तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनं सकलगुणाधारः तदादिर्यस्यासौ तदादिः तस्य सम्यग्दर्शनादेः—मोक्षमार्गस्य, सकलकर्मक्षयः अनन्तकालमात्मनः स्वात्मन्यवस्थानं मोक्ष(स्त)स्य मार्गः पन्थाः प्राप्त्युपायो ज्ञानक्रियालक्षणः तस्य प्रभावना प्रख्यापनं प्रकाशनं, केन प्रकारेणेत्याह—"निहत्य मानं करणोपदेशाभ्यां" इति मानोऽहङ्कारः स च जात्यादिस्थानोद्भूतः श्रेयोविघातकारी, यथाह—"श्रुतशीलविनयसंदूषणस्य धर्मार्थकामविघ्नस्य । मानस्य कोऽवकाशं मुहूर्त्तमपि पण्डितो दद्यात् ॥ १ ॥" तमेवंविधं मानं न्यक्कृत्य करणं स्वयमनुष्ठानं श्रद्धतः कालविनयबहुमानाद्यासेवनं मूलोत्तरगुणप्रपञ्चानुष्ठानं चेति उपदेशोऽन्यस्मै प्रतिपादनं बहुविधविद्वज्जनसमितिषु स्याद्वादादिन्यायाबष्टम्भेन प्रसभमपहृत्य प्रतिभामेकान्तवादिनामर्हत्प्रणीतस्यानवद्यस्य सर्वतो भद्रस्य मार्गस्यैकान्तिकात्यन्तिकनिरतिशयाबाधककल्याणफलस्य प्रकाशनं प्रभावना सा खल्वेषा तीर्थकरनामकर्मण आश्रवः ॥ "अर्हदित्यादि" वन्दननमस्कारपूजासत्कारार्हाः अर्हन्तस्तेषां शासनमुपदेश आगमाख्यः तदनुष्ठायिनामागमविहितक्रियानुष्ठायिनां श्रुतधराणामित्यनेन स्वयमधिगतज्ञानानामिति प्रतिपादयति, परप्रत्ययानुष्ठायित्वं निषेधयति, अधीतप्रवचनार्थो हि विदितोत्सर्गापवादप्रपञ्चः स्वातन्त्र्यात् क्रियाप्रवृत्तौ न व्याहन्यते, बालः क्षुल्लकः कारणप्रव्राजितो जघन्यादिभेदः, जातिश्रुतपर्यायस्थविराः त्रयः षष्टिवर्षः, समवायधरो, व्रतारोपणोत्तरकालं विंशतिवर्षश्च यथाक्रमं वृद्धः, तपो बाह्यमनशनादि, आन्तरं च प्रायश्चित्तादि तदस्यास्तीति तपस्वी, विचित्रं वा तपः कनकरत्नमाल्यादिभेदं वक्ष्यमाणं तद्योगात् तपस्वी, शिक्षत इति शिष्यः, शिक्ष एव शैक्षं स्वार्थे अण् प्रज्ञादित्वात्, शिक्षणशीलो वाच्छात्रादिपाठात् सः (अण्) प्रत्ययः शैक्षः सूत्रार्थाधिगमेऽभियुक्तो यथाविहितकालमध्येतव्ये श्रोतव्ये वाभ्युद्यत इत्यर्थः, ग्लानो मन्दपाटवः सत्त्वाधिकत्वात् भक्तपानाद्यन्वेषणे न प्रत्यलः, आदिग्रहणात् कुलगणसमनोज्ञपरिग्रहः, चशब्दः समुच्चये, श्रुतधराणां बालादीनां च संग्रहादिकारित्वं, तत्र संग्रहः परिग्रहणं उपसम्पदालोचनापूर्वकं संयमानुष्ठानश्रुताध्ययनचोदनाप्रतिचोदनार्थं, उपग्रहो वस्त्रपात्रोत्पादनबहुगुणक्षेत्राक्रान्तिलक्षणः, अनुग्रहः भक्तपानयथायोग्यविकृतिप्रदानादिलक्षणः एतत्करोति तच्छीलश्च तद्भावः संग्रहोपग्रहानुग्रहकारित्वं तत्परिणामि-

तेति यावत्, प्रवक्तीति प्रवचनमेत एव श्रुतधरादयो भगवद्भाषितार्थप्रतिपादनपरिणताः प्रवचनशब्द-वाच्याः तेषु वात्सल्यमुक्तं संग्रहोपग्रहानुग्रहलक्षणम्, इतिशब्द आद्यर्थः, विंशतेः कारणानां सूत्रकारेण किञ्चित्सूत्रे, किञ्चिद्भाष्ये, किञ्चिदादिग्रहणात् सिद्धपूजाक्षणलवध्यानभावनाख्यमुपात्तमुपयुज्य च प्रवक्त्रा व्याख्येयमिदानीमुपसंहरति–"एते गुणाः" इत्यादिना, एते यथोद्दिष्टा गुणा दर्शनविशुद्ध्यादय आत्मनः परिणामाः समुदिताः प्रत्येकं च तीर्थकरनामकर्मण आश्रवा भवन्ति न पुनः नियमोऽस्ति समस्ता एव व्यस्ता एव वा, विकल्पार्थो वाशब्दः, इतिशब्दः तीर्थकरनामकर्माश्रवेयत्ताप्रतिपादनार्थमिति ॥ २३ ॥" इति ।

ननु तिरश्चां सम्यक्त्वसद्भावेऽपि भवप्रत्ययादेव तथाविधाध्यवसायाभावात् तीर्थकरनामकर्मबन्धो माऽस्तु, परं नरकभवे श्रेणिकादीनामिव बध्यमानत्वेन पङ्कप्रभादिषु भवप्रत्ययात् न बध्यत इति वक्तुं न शक्यते, सम्यक्त्वस्य सद्भावेन च 'तदभावात् न बध्यत' इत्यपि न युज्यते वक्तुमतस्तत्र कोऽप्यन्यो हेतुः बन्धाभावे वक्तव्य इति चेत्? श्रूयतां, क्षेत्रमाहात्म्येन तत्र जिननामबन्धयोग्याध्यवसायाभावात् न बध्यते। नचैतत् स्वमनीषिकया विजृम्भितम्, किन्तु बन्धस्वामित्ववृत्त्यनुसारेणोक्तं, तथाहि–"तीर्थकरनामोनं पङ्काइसु" इति पङ्कप्रभाधूमप्रभातमःप्रभासु मन्तव्यमिति शेषः, अत्र पृथिवीत्रये तीर्थंकरनामनिमित्तसम्यक्त्वसद्भावेऽपि क्षेत्रमाहात्म्येन तथाविधाध्यवसायाभावात् तीर्थंकरनामकर्मबन्धो नास्ति" इति । भुवनपतिव्यन्तरज्योतिष्केषु तु सम्यक्त्वादिसद्भावेऽपि तीर्थंकरनामा तत्र न गच्छतीति न बध्यते, तदुक्तं–"जिनकर्मसत्ताकस्य तेपूत्पादाभावेन तत्र तद्बन्धाऽसंभवात्" इति । ननु कस्मान्न गच्छतीति चेत्? ततो निर्गत्य तीर्थंकरा न भवन्तीति हेतोः, तदुक्तं–"वेमाणिय हुन्ति हरिअरिहा" इति । ननु वैमानिकनैरयिकाभ्यां एव तीर्थंकराः भवन्ति न भुवनपत्यादिभ्य इति कथमुच्यत इति चेत्? युक्तिवशाज्जिनवचनाच्च, तथाहि–अविराधितगुणाः सम्यग्दृष्टयो मनुष्या वैमानिकदेवसत्कमेवायुष्कं बध्नन्ति न शेषायुष्कं, तदुक्तं–"सम्मद्दिट्ठी जीवो गच्छइ नियमा विमाणवासीसु । जइ न चइय सम्मत्तो अहव न बद्धाउओ पुव्विं ॥ १ ॥" इत्यतो भुवनपत्यादिषु न गच्छन्ति । ननु तुर्यगुणस्थानवर्तिनः नरकायुष्कबन्धाभावेन नरकेष्वपि गमनाभावात् ततो निर्गत्य कथं जिना भवन्तीति चेत्? सत्यम्, 'येन प्राग्मिथ्यादृष्टौ बद्धं प्रथमत्रयपृथ्वीनरकायुष्कं पश्चात् सम्यक्त्वप्राप्तावपि गत्यन्तराभावेन 'वेदकसम्यग्दृष्टिश्चेत् मिथ्यात्वे गत्वा पश्चात् नरकं व्रजति, क्षायिकसम्यग्दृष्टिश्चेत् ससम्यक्त्वो गच्छती'ति कृत्वा तन्निर्गता जिना भवन्तीति । नन्वविराधितगुणाः सम्यग्दृष्टयः भुवनपत्याद्यायुष्कं न बध्नन्ति तर्हि उदायिनृपतिः बद्धजिननामा कुत्र गतः? न च नरकगतौ संभाव्यते, पौषधव्रते पञ्चत्वप्राप्तेः, नापि तिर्यङ्मनुष्यगत्योः, ततो निर्गत्य तीर्थंकरत्वानुपपत्तेः, नापि वैमानिकेषु गतः संभवति, यतो वैमानिकेषु जघन्यतोऽपि पल्योपमप्रमाणमायुष्कं, तृतीयजिनभवने तु साधिकाष्टषष्टिसहस्राधिकलक्षवर्षप्रमाणमन्तरमस्तीति तत्र गमने तृतीयजिनः कथं भवति? भुवनपत्यादिषु गमने 'त्वविराधितगुणाः भुव-

नपत्याद्यायुष्कं न बध्नन्तीति, वैमानिकेभ्य एव जिना भवन्तीति, भुवनपत्यादिषु जिननाम न बध्नन्तीति', विरोधत्रयं संभवतीति चेत्? सत्यम्, सम्यक्त्वप्राप्तेरर्वाग् भवनपत्यायुष्कं बद्धं संभाव्यते, तत्र गमने च जिननामकर्मबन्धेऽपि न क्षतिः, नापि वैमानिकेभ्य एव जिना भवन्तीत्यपि विरोधः, भुवनपत्यादिभ्योऽपि केचन जिना भवन्ति, तथापि कादाचित्कत्वेन न विवक्षा कृतेति संभाव्यते, तदुक्तं प्रज्ञापनाविंशतितमपदवृत्तौ— "वसुदेवचरित्रे पुनः नागकुमारेभ्योऽप्युद्धृतोऽनन्तरमैरवतक्षेत्रेऽस्यामेवावसर्पिण्यां चतुर्विंशतितमस्तीर्थङ्कर उपदर्शितः तदत्र तत्त्वं केवलिनो विदन्ति" इति । एवं चरमतीर्थपतेः पितृव्यः भावी द्वितीयजिनः सुपार्श्वोऽपि वक्तव्य इति । ननु जिननामसत्ताको द्वितीयतृतीयगुणस्थानयोः कथं न गच्छतीति चेत्? स्वभावादिति प्रागुक्तमेवेति । आशाम्बरमते नेमिश्चन्द्रो द्वितीयगुणस्थाने जिनाहारकद्विकोभयाभावमिच्छति, तदुक्तं गोम्मटसारे गुणस्थानसत्ताधिकारे—"तित्थाहारा जुगवं सव्वं तित्थं न मिच्छगादितिए । तस्सत्तकम्मियाणं तग्गुणट्ठाणं ण संभवदि ॥ १ ॥" वृत्तिः—"मिथ्यादृष्टौ तीर्थकृत्त्वसत्त्वे आहारद्वयसत्त्वं न, आहारकद्वयसत्त्वे च तीर्थकृत्सत्त्वं न, उभयसत्त्वे तु मिथ्यात्वाश्रयणं न, तेन तद्द्वयं तत्र युगपदेकजीवापेक्षया न, नानाजीवापेक्षयाऽस्ति, ततोऽष्टचत्वारिंशदुत्तरशतं सत्त्वम् । सास्वादने तदुभयमपि एकजीवापेक्षयाऽनेकजीवापेक्षया च क्रमेण युगपद्वा सत्त्वं नेति पञ्चचत्वारिंशदुत्तरशतं । मिश्रे तीर्थकरसत्त्वं नेति सप्तचत्वारिंशदुत्तरशतम्, कुतः? तत्सर्वकर्मणां जीवानां तद्गुणस्थानं न संभवतीति कारणात्" इत्युक्तं तदपि नागमाऽविरोधि, यतो द्वितीयतृतीयगुणस्थानयोः तीर्थकरवर्जं सप्तचत्वारिंशदुत्तरशतप्रकृत्यात्मकस्यैव सत्त्वस्य सर्वत्राभिधानात्, तदुक्तं—"तित्थयरेण विहीणं सीयालसयं तु सन्तए होइ । सासायणंमि गुणे सम्मामीसे य पयडीणं ॥ १ ॥" इति बृहत्कर्मस्तवभाष्ये, "बितिगुणे विणा तित्थं" इति नव्यशतकेऽपि । किञ्चाहारकद्विकासत्त्वे आहारकबन्धनाहारकसङ्घातनयोरपि सत्त्वं न स्यात् प्रयोजनाभावात् यत आहारकद्विकबन्धे तयोरवश्यं बन्धः, उदये उदीरणायां च सत्यां तयोः उदयोदीरणेऽपि स्तः, तदुद्वलने तयोरप्युद्वलनं, तत्सत्त्वे तयोरवश्यं सत्त्वं, तदभावे तयोरप्यभावः, एवं वैक्रियद्विकेऽपि भावनीयम् । एतेन "तिदुइगिणउदीणउदीअडचउदोअहियसीदिसीदीय । ऊणासीदट्ठत्तरी सत्तत्तरि दस य नव सत्ता ॥ १ ॥" व्याख्या—त्रिनवतिर्द्वानवतिरेकनवतिर्नवतिरष्टाशीतिश्चतुरशीतिर्द्व्यशीतिरशीतिरेकोनाशीतिरष्टसप्ततिः सप्तसप्ततिर्दश नव च प्रकृतयः नामकर्मसत्त्वस्थानानि त्रयोदश भवन्ति ॥१॥ तेषामुत्पत्तिमाह—"सव्वं तित्थाहारुभयऊणं सुरणिरयमणुयदुचारिदुगे । उव्वेल्लिदे हदेचदु तेरे जोगिस्स दसणवयं ॥ २ ॥" व्याख्या—सर्वनामप्रकृतयः प्रथमं, तदेव तीर्थाहारद्वयतदुभयैः क्रमेणोनितं द्वानवतिकैकनवतिकनवतिकत्वं प्राप्नोति । तन्नवतिकं पुनः सुरद्विकं पुनः नारकचतुष्कं (नरकद्विकवैक्रियद्विकरूपे) पुनः मनुष्यद्विके चोद्वलितेऽष्टाशीतिकचतुरशीतिकद्व्यशीतिकत्वं । पुनः तानि त्रिनवतिकादीनि चत्वारि "णिरयतिरिक्खदुवियल"मित्यादि त्रयोदशसु क्षपितेषु अशीतिकैकोनाशीतिकाष्टसप्ततिकसप्तसप्ततिकत्वं । दशकं नवकं चायोगिकेवलिनि ॥ २ ॥" इति नेमिच-

न्ध्रोक्तानि नामकर्मणः सत्त्वस्थानान्यपि स्वमतिपरिकल्पितानि प्रतिभान्ति, यतः सर्वनामप्रकृतिसमुदायः त्रिनवतिप्रकृत्यात्मकं प्रथमं सत्त्वस्थानं भवति, तदेव तीर्थकरनामोनितं द्वितीयं द्विनवतिप्रकृत्यात्मकं भवति, प्रथममेवाहारकचतुष्कविहीनमेकोननवतिप्रकृत्यात्मकं सत्त्वस्थानं भवति, आहारकद्विकाभावे आहारकसंघातनाहारकबन्धनयोरप्यभावात् एकनवतिकं न प्राप्यते । आहारकचतुष्कजिनोभयविहीनमष्टाशीतिप्रकृत्यात्मकं सत्त्वस्थानं भवति, न नवतिप्रकृत्यात्मकं सत्त्वस्थानं भवति, त्रिनवतेः पञ्चप्रकृतीनामपनीतत्वात् । देवद्विके उद्वलिते अष्टाशीतिमध्यात् षडशीतिप्रकृत्यात्मकं सत्त्वस्थानं भवति । ततो नरकद्विकवैक्रियचतुष्के च युगपदुद्वलिते अशीतिप्रकृत्यात्मकं सत्त्वस्थानं भवति, अतो नारकचतुष्के उद्वलिते चतुरशीतिप्रकृत्यात्मकं सत्त्वस्थानं न भवति। मनुष्यद्विके उद्वलिते अशीतिप्रकृत्यात्मकं अष्टसप्ततिप्रकृत्यात्मकं सत्स्थानं भवति। त्रिनवतिसत्ताकस्य त्रयोदशप्रकृतिक्षपित अशीतिप्रकृत्यात्मकं सत्त्वस्थानं भवति । द्विनवतिसत्ताकस्य त्रयोदशक्षये एकोनाशीतिप्रकृत्यात्मकं सत्त्वस्थानं भवति । एकोननवतिसत्ताकस्य त्रयोदशक्षये षट्सप्ततिप्रकृत्यात्मकं सत्त्वस्थानं भवति। अष्टाशीतिसत्ताकस्य त्रयोदशक्षये पञ्चसप्ततिप्रकृत्यात्मकं सत्त्वस्थानं भवति। अयोगिनि नवप्रकृत्यात्मकं अष्टप्रकृत्यात्मकं च सत्त्वस्थानं भवति । तदेवं भाव्यमानानि द्वादशैव भवन्ति, न त्रयोदशेति । यत्तु "तीर्थाहारोभयसत्त्वे मिथ्यात्वस्य, तीर्थाहारयोरन्यतरसत्त्वेऽनन्तानुबन्धिनां, तीर्थसत्त्वे सम्यग्मिथ्यात्वस्य चानुदयत्वं" हेतुत्वेनोपन्यस्तं, तदपि न सम्यक्, यतः सास्वादने मिथ्यात्वानुदयेऽप्युभयसत्त्वाभावो, मिथ्यादृष्टौ च तीर्थकराहारकयोरन्यतरसत्त्वेऽप्यनन्तानुबन्धिनामुदयो, मिश्रस्यानुदयेऽपि सास्वादने तीर्थासत्त्वमिति। यत्तु "योनिमन्मनुष्ये तु क्षपकश्रेण्यां न तीर्थं, तीर्थसत्त्ववतोऽप्रमत्तादुपरि स्त्रीवेदित्वाऽसंभवात्" इति गोम्मटसारवृत्तिकर्त्रोक्तं तदपि न सम्यक्त्वमञ्चति, स्त्रीत्वे एकोनविंशतितमतीर्थपतिभवनात् । ननु त्वयापि प्रोच्यते पुरुषोत्तमा एव जिना भवन्ति, एकोनविंशतितमो जिनः स्त्रीत्वेनोत्पन्नस्त्वाश्चर्यमिति चेत्? सत्यम्, आश्चर्यमपि तदेव भवति यदनन्तानन्तकालेनापि भवितुं योग्यं, नान्यत्, अन्यथाऽभव्यस्यापि मुक्तिगमनप्रसक्तेः, आश्चर्यं तु अनन्ताभिरुत्सर्पिण्यवसर्पिणीभिः कालेन भवनादिति ॥

प्रकृतं प्रस्तुमः–यद्वा जिनयुतं मनुष्यगतिप्रायोग्यं त्रिंशद्बन्धं बध्नतां त्र्युत्तरशतसत्कर्मणां देवानां त्र्युत्तरशतप्रकृत्यात्मकं सत्स्थानं संक्रमयति, नारकाणामपि एतद्बन्धस्थानं भवति, तथापि सत्स्थानं षण्णवतिप्रकृत्यात्मकमेव भवति, तीर्थकराहारकसत्कर्मणो नारकेषूत्पादाभावात् । ततो नारकाणां देवानां च षण्णवतिसत्कर्मणां त्रिंशद्बन्धं बध्नतां षण्णवतिप्रकृत्यात्मकं सत्स्थानं संक्रमयति । देवगतिप्रायोग्यमेकोनत्रिंशद्बन्धं बध्नतां त्र्युत्तरशतसत्कर्मणां मनुष्याणां जिननामकर्मणः बन्धावलिकायामपगतायां त्र्युत्तरशतं संक्रामति, बन्धावलिकायामनपगतायां च द्व्युत्तरशतं संक्रामति । षण्णवतिसत्ताको मनुष्यो देवप्रायोग्यैकोनत्रिंशद्बन्धको जिननामकर्मणो बन्धावलिकायामपगतायां षण्णवतिं

संक्रामति । बन्धावलिकायामनपगतायां स एव पञ्चनवतिं संक्रामति । मनुष्यगतिप्रायोग्यैकोनत्रिंशद्बन्धका देवनैरयिकाः द्व्युत्तरशतसत्ताकाः द्व्युत्तरशतं, पञ्चनवतिसत्ताकाः पञ्चनवतिं संक्रामन्ति । द्व्युत्तरशतसत्ताकानां तिर्यक्पञ्चेन्द्रियमनुष्याणां देवप्रायोग्याष्टाविंशतिबन्धकानां द्व्युत्तरशतं संक्रामति । पञ्चनवतिसत्ताकानां तिर्यक्पञ्चेन्द्रियमनुष्याणां देवप्रायोग्याष्टाविंशतिबन्धकानां पञ्चनवतिसत्स्थानं संक्रामति । उक्तानि सम्यग्दृष्टिसत्कानि संक्रमस्थानानि ॥

एकेन्द्रियवर्जपर्याप्ततिर्यग्गतिप्रायोग्यत्रिंशद्बन्धं बध्नतां चतुर्गतिकानां मिथ्यादृष्टीनां पञ्च सत्त्वस्थानानि संक्रामन्ति, तद्यथा—द्व्युत्तरशतं पञ्चनवतिस्त्रिनवतिश्चतुरशीतिर्द्व्यशीतिश्च तत्र पर्याप्ततिर्यक्पञ्चेन्द्रियप्रायोग्यत्रिंशद्बन्धं बध्नतां देवनारकाणामाद्यद्वयं सत्त्वस्थानं संक्रामति । पर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियप्रायोग्यत्रिंशद्बन्धका एकेन्द्रियादयः तिर्यक्पञ्चेन्द्रियपर्यवसानाः पञ्चापि संक्रमस्थानानि संक्रामन्ति । मनुष्यास्तत्प्रायोग्यबन्धका आद्यानि चत्वारि स्थानानि संक्रामन्ति । सास्वादनाः चतुर्गतिका अपि तिर्यक्पञ्चेन्द्रियप्रायोग्यत्रिंशद्बन्धका भवन्ति । तत्र मनुष्याणामुपशमश्रेणितः प्रतिपातसम्भवेन द्व्युत्तरशतं पञ्चनवतिरिति सत्स्थानद्वयं संक्रामति । शेषाणां श्रेण्यभावतः पञ्चनवतिप्रकृत्यात्मकमेकमेव संक्रामति । एकोनत्रिंशद्बन्धकानां मिथ्यादृष्टीनां षट् संक्रमस्थानानि संक्रामन्ति, तद्यथा–द्व्युत्तरशतं षण्णवतिः पञ्चनवतिः त्रिनवतिः चतुरशीतिर्द्व्यशीतिः । तत्र पर्याप्ततिर्यक्पञ्चेन्द्रियप्रायोग्यं मनुष्यप्रायोग्यं वैकोनत्रिंशद्बन्धं बन्धकानां देवानां द्व्युत्तरशतं पञ्चनवतिरिति द्वयं संक्रामति । नारकाणां तिर्यक्पञ्चेन्द्रियप्रायोग्यमेकोनत्रिंशद्बन्धं बध्नतामेवमेव । मनुष्यप्रायोग्यं एकोनत्रिंशद्बन्धं बध्नतां नारकाणां द्व्युत्तरशतं षण्णवतिः पञ्चनवतिरिति त्रीणि सत्स्थानानि संक्रामन्ति । तत्र षण्णवतिं बद्धजिननामा अपर्याप्तावस्थायां संक्रामति । शेषा सर्वापि भावना त्रिंशद्बन्धकवदेकोनत्रिंशद्बन्धकेऽपि वक्तव्या, नवरमेतद्बन्धस्थानं मनुष्यप्रायोग्यमपि भवति । तत्र चतुरशीतिसत्कर्मणां तिरश्चां बन्धावलिकाया अभ्यन्तरे द्व्यशीतिसत्स्थानं संक्रामति, तत ऊर्ध्वं चतुरशीतिसत्त्वस्थानं संक्रामति । मनुष्यप्रायोग्यैकोनत्रिंशद्बन्धकानां मिश्रदृष्टीनां देवनारकाणां पञ्चनवतिः द्व्युत्तरशतमिति सत्स्थानद्वयं संक्रामति ॥ देवप्रायोग्याष्टाविंशतिबन्धकानां तिर्यक्पञ्चेन्द्रियमनुष्याणां मिश्रदृष्टीनां सास्वादनसम्यग्दृष्टीनां च द्व्युत्तरशतं पञ्चनवतिरिति द्वयं संक्रामति । तत्र तिर्यक्पञ्चेन्द्रियाणां सास्वादनानां पञ्चनवतिप्रकृत्यात्मकमेकमेव संक्रामति । उभयगुणवर्तिनां मनुष्याणां सत्स्थानद्वयमपि संक्रामति । अष्टाविंशतिबन्धकानां तिर्यक्पञ्चेन्द्रियमनुष्याणां मिथ्यादृष्टीनां पञ्च संक्रमस्थानानि संक्रामन्ति, तद्यथा–द्व्युत्तरशतं षण्णवतिः पञ्चनवतिः त्रिनवतिश्चतुरशीतिश्चेति । तत्र नरकगतिप्रायोग्यां देवगतिप्रायोग्यां वाष्टाविंशतिबन्धकानां द्व्युत्तरशतसत्कर्मणां पञ्चनवतिसत्कर्मणां वा द्व्युत्तरशतं पञ्चनवतिश्च क्रमशः संक्रामति । नरकद्विकवर्जानां त्रिनवतिसत्ताकानां देवगतिप्रायोग्यमष्टाविंशतिप्रकृतिबन्धं कुर्वतां तिर्यक्पञ्चेन्द्रियाणां देवद्विकवै-

क्रियसप्तकयोर्बन्धावलिकायाः परतो वर्तमानानां त्रिनवतिः संक्रामति। बन्धावलिकाया अभ्यन्तरे तु चतुरशीतिः संक्रामति। तेषामेव पञ्चनवतिसत्ताकानां देवद्विकस्य बन्धावलिकाया अभ्यन्तरे वर्तमानानां त्रिनवतिः संक्रामति। यद्वा देवद्विकवर्जत्रिनवतिसत्ताकानां मिथ्यादृष्टितिर्यक्पञ्चेन्द्रियाणां नरकप्रायोग्याष्टाविंशतिबन्धकानां नरकद्विकवैक्रियसप्तकयोः बन्धावलिकाया ऊर्ध्वं वर्तमानानां त्रिनवतिः संक्रामति। तेषामेव बन्धावलिकाया अभ्यन्तरे वर्तमानानां चतुरशीतिः संक्रामति। तेषामेव पञ्चनवतिसत्ताकानां नरकद्विकस्य बन्धावलिकाया अभ्यन्तरे वर्तमानानां त्रिनवतिः संक्रामति। एवमेव मनुष्याणामप्यष्टाविंशतिबन्धकानां वाच्यम्। केवलं नरकप्रायोग्याष्टाविंशतिबन्धकानां बद्धतीर्थकरनामकर्मणां नरकाभिमुखानां षण्णवतिरपि संक्रामति॥ पर्याप्तैकेन्द्रियप्रायोग्यषड्विंशतिबन्धकानामेकद्वित्रिचतुष्पञ्चेन्द्रियतिरश्चां द्व्युत्तरशतं पञ्चनवतिस्त्रिनवतिश्चतुरशीतिर्द्व्यशीतिरिति पञ्चापि तत्तत्सत्कर्मणां संक्रामन्ति। पर्याप्तैकेन्द्रियप्रायोग्यषड्विंशतिबन्धकानां मनुष्याणां द्व्यशीतिवर्जानि चत्वारि संक्रमस्थानानि संक्रामन्ति। तत्प्रायोग्यबन्धकानां देवानां द्व्युत्तरशतं पञ्चनवतिरिति स्थानद्वयं संक्रामति। पर्याप्तैकेन्द्रियप्रायोग्यपञ्चविंशतिबन्धकानामेकेन्द्रियादितिरश्चां द्व्युत्तरशतं पञ्चनवतिस्त्रिनवतिः चतुरशीतिः द्व्यशीतिरिति पञ्चसंक्रमस्थानानि संक्रामन्ति। तत्स्थानबन्धकानां मनुष्याणां पुनर्द्व्यशीतिवर्जानि तान्येव चत्वारि संक्रामन्ति। देवानां पर्याप्तैकेन्द्रियप्रायोग्यपञ्चविंशतिबन्धकानां द्व्युत्तरशतं पञ्चनवतिरित्येवंरूपं सत्स्थानद्वयं संक्रामति। अपर्याप्तद्वित्रिचतुष्पञ्चेन्द्रियतिर्यक्प्रायोग्यपञ्चविंशतिबन्धकानामेकेन्द्रियादितिरश्चां प्रागुक्तानि पञ्चापि संक्रमस्थानानि संक्रामन्ति। तत्प्रायोग्यपञ्चविंशतिबन्धकानां मनुष्याणां द्व्यशीतिवर्जानि चत्वारि संक्रमस्थानानि संक्रामन्ति॥ अपर्याप्तैकेन्द्रियप्रायोग्यत्रयोविंशतिबन्धकाः पञ्चेन्द्रियपर्यवसानाः तिर्यञ्चो द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि पञ्च संक्रमस्थानानि संक्रामन्ति। मनुष्या द्व्यशीतिवर्जानि चत्वारि संक्रामन्ति। तदेवमुक्तानि नामकर्मणः संक्रमस्थानानि॥

॥ नाम्नः संक्रमस्थानानि ॥

| | | | |
|---|---|---|---|
| १०३ | सर्वप्रकृतिसमुदायः | ८८ | त्रयोदशसु क्षीणास्वेकोननवतिसत्ताकस्य यशःकीर्तिवर्जम् |
| १०२ | जिनवर्जं यशःकीर्तिवर्जं वा | | |
| १०१ | जिनयशःकीर्तिवर्जं | ८४ | आहारवैक्रियसप्तकजिनदेवद्विकनरकद्विकवर्जितम् |
| ९६ | आहारकसप्तवर्जं | | |
| ९५ | आहारकसप्तकयशःकीर्तिवर्जम् | ८२ | त्रयोदशसु क्षीणासु त्र्यशीतिसत्ताकस्य यशःकीर्तिवर्जम् |
| ९४ | आहारकसप्तकयशःकीर्तिजिनवर्जम् | | |
| ९३ | आहारकसप्तकजिनदेवद्विकवर्जम् | ८१ | त्रयोदशसु क्षीणासु द्व्यशीतिसत्ताकस्य यशःकीर्तिवर्जम् |
| ८९ | त्रयोदशसु क्षीणासु नवतिसत्ताकस्य यशःकीर्ति- [ वर्जम् | | |

अथ नामकर्मणः बन्धस्थानानि प्रोच्यन्ते—त्रयोविंशतिः पञ्चविंशतिः षड्विंशतिरष्टाविंशतिरेकोनत्रिंशत् त्रिंशदेकत्रिंशदेकेत्यष्टौ। एतानि च स्थानानि यथैकेन्द्रियादिप्रायोग्यत-

थानेकप्रकाराणि भवन्ति तथैवोपदिश्यन्ते–तिर्यग्गतिप्रायोग्याण्यष्टाविंशत्येकत्रिंशदेकप्रकृत्यात्मकानि वर्जयित्वा शेषाणि पञ्च बन्धस्थानानि भवन्ति । तत्राप्येकेन्द्रियप्रायोग्याण्याद्यानि त्रीणि बन्धस्थानानि सन्ति । तत्र त्रयोविंशतिप्रकृत्यात्मकं स्थानमिदम्–तिर्यग्गतिस्तदानुपूर्व्येकेन्द्रियजातिरौदारिकशरीरनाम हुण्डसंस्थानं स्थावरनाम सूक्ष्मबादरयोरेकतरमपर्याप्तनाम प्रत्येकसाधारणयोरेकतरमस्थिरनामाशुभनाम दुर्भगनामाऽनादेयनामाऽयशः-कीर्तिनाम नामध्रुवबन्धिनवकमिति । प्रत्येकबादराभ्यां प्रत्येकसूक्ष्माभ्यां साधारणबादराभ्यां साधारणसूक्ष्माभ्यां विभज्यमानमिदमपर्याप्तप्रायोग्यं स्थानं चतुष्प्रकारं भवति। तत्रैव पराघातोच्छ्वासयोः प्रक्षिप्तयोरपर्याप्तस्थाने पर्याप्तप्रक्षिप्ते च पञ्चविंशतिप्रकृत्यात्मकं पर्याप्तैकेन्द्रियप्रायोग्यं विंशतिप्रकारं भवति । पञ्चविंशतिप्रकृतय एवमभिलपनीयाः–तिर्यग्द्विकमेकेन्द्रियजातिरौदारिकशरीरनाम हुण्डसंस्थाननाम स्थावरनाम बादरसूक्ष्मयोरेकतरं पर्याप्तनाम प्रत्येकसाधारणयोरेकतरं स्थिरास्थिरयोरेकतरं शुभाशुभयोरेकतरं यशःकीर्त्ययशःकीर्त्योरेकतरं दुर्भगमनादेयं पराघातनामोच्छ्वासनाम नामध्रुवबन्धिनवकमिति । अत्र सूक्ष्मापर्याप्तसाधारणनामकर्मभिः सह यशःकीर्तिनाम बन्धं नायाति, तदुक्तं–"नो सुहुमतिगेण जसं" इति । तेन बादरपर्याप्तप्रत्येकस्थिरशुभयशःकीर्तिभिः सहैकं पञ्चविंशतिप्रकृत्यात्मकं स्थानं भवति १, एवं बादरपर्याप्तप्रत्येकस्थिरशुभायशःकीर्तिभिः सह द्वितीयं २, बादरपर्याप्तप्रत्येकस्थिराशुभयशःकीर्तिभिः सह तृतीयं ३, बादरपर्याप्तप्रत्येकस्थिराशुभायशःकीर्तिभिः चतुर्थं ४, बादरपर्याप्तप्रत्येकास्थिरशुभयशःकीर्तिभिः पञ्चमं ५, बादरपर्याप्तप्रत्येकास्थिरशुभायशःकीर्तिभिः षष्ठं ६, बादरपर्याप्तप्रत्येकास्थिराशुभयशःकीर्तिभिः सप्तमं ७, बादरपर्याप्तप्रत्येकास्थिराशुभायशःकीर्तिभिरष्टमं ८, बादरपर्याप्तसाधारणस्थिरशुभायशः-कीर्तिभिः नवमं ९, बादरपर्याप्तसाधारणस्थिराशुभायशःकीर्तिभिः दशमं १०, बादरपर्याप्तसाधारणास्थिरशुभायशःकीर्तिभिरेकादशमं ११, बादरपर्याप्तसाधारणास्थिराशुभायशःकीर्तिभिः द्वादशमं १२ । एवं सूक्ष्मपर्याप्तनाम्नोर्बध्यमानयोः प्रत्येकसाधारणस्थिरास्थिरशुभाशुभायशःकीर्तिभिरष्टौ स्थानानि भवन्ति । तत्रैव पर्याप्तैकेन्द्रियप्रायोग्यपञ्चविंशतिस्थाने उद्योतनामकर्मणि आतपनाम्नि वा प्रक्षिप्ते पर्याप्तैकेन्द्रियप्रायोग्यं षड्विंशतिप्रकृत्यात्मकं षोडशप्रकारं बन्धस्थानं भवति । केवलं सूक्ष्मसाधारणस्थाने बादरप्रत्येकयोः निवेशः कार्यः, यत आतपोद्योताभ्यां सूक्ष्मसाधारणयोः बन्धो न भवतीति षोडशप्रकाराणि आतपोद्योतस्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिभिः सह भवन्ति । एवमेकेन्द्रियाणां विभज्यमानानि त्रीण्यपि बन्धस्थानानि चत्वारिंशत्स्थानानि भवन्ति । द्वीन्द्रियप्रायोग्याणि बन्धस्थानानि त्रीणि भवन्ति, तद्यथा–पञ्चविंशतिरेकोनत्रिंशत्त्रिंशदिति । तत्र पञ्चविंशतिरेवं–तिर्यग्द्विकं द्वीन्द्रियजातिरौदारिकद्विकं हुण्डसंस्थानं सेवार्तसंहननं त्रसनाम बादरनाम पर्याप्तनाम प्रत्येकनामास्थिरनामाशुभनाम दुर्भगनामानादेयनामायशःकीर्तिनाम नामध्रुवबन्धिनवकमिति । एतद्बन्धस्थानस्यापर्याप्तद्वीन्द्रियप्रायोग्यत्वेन परावर्तमानप्रकृतयोऽशुभा

एव बन्धमायान्तीति न विभजनम् । पर्याप्तद्वीन्द्रियप्रायोग्यं बन्धस्थानं एकोनत्रिंशत्प्रकृत्यात्मकं त्रिंशत्प्रकृत्यात्मकं च भवति। एकोनत्रिंशत्प्रकृतय एवम्—तिर्यग्गतिः तदानुपूर्वी द्वीन्द्रियजातिरौदारिकद्विकं हुण्डसंस्थानं सेवार्तसंहननमप्रशस्तविहायोगतिनाम त्रसनाम बादरनाम पर्याप्तनाम प्रत्येकनाम स्थिरास्थिरयोरेकतरं शुभाशुभयोरेकतरं दुःस्वरं दुर्भगनामानादेयनाम यशःकीर्त्ययशःकीर्त्योरेकतरं पराघातनामोच्छ्वासनाम नामध्रुवबन्धिनवकमिति । एतद्बन्धस्थानं स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिपदैरष्टधा भिद्यते । उद्योतयुतमेकोनत्रिंशदेव त्रिंशत्प्रकृत्यात्मकं बन्धस्थानं भवति । तदपि तद्वदेवाष्टधा भिद्यते । एवं त्रीण्यपि समुदितानि द्वीन्द्रियप्रायोग्याणि बन्धस्थानानि सप्तदशधा भवन्ति । एवमेव त्रीन्द्रियप्रायोग्याणि चतुरिन्द्रियप्रायोग्याणि च त्रीण्यपि सप्तदशधा भवन्ति । केवलं निजनिजजातिः परावर्तनीया । तिर्यक्पञ्चेन्द्रियप्रायोग्याणि त्रीणि बन्धस्थानानि, तद्यथा-पञ्चविंशतिरेकोनत्रिंशत् त्रिंशत् । पञ्चविंशतिबन्धस्थानं द्वीन्द्रियप्रायोग्यपञ्चविंशतिबन्धस्थानवत् बोध्यं, केवलं द्वीन्द्रियजातिस्थाने पञ्चेन्द्रियजातिर्वक्तव्येति । एकोनत्रिंशद्बन्धस्थानमिदं–तिर्यग्द्विकं पञ्चेन्द्रियजातिरौदारिकद्विकं षण्णां संस्थानानामन्यतमं संस्थानं षण्णां संहनननानामन्यतमं संहननं प्रशस्ताप्रशस्तखगत्योरन्यतरा खगतिः त्रसनाम बादरनाम पर्याप्तनाम प्रत्येकनाम स्थिरास्थिरयोरन्यतरत् शुभाशुभयोरन्यतरत् सुभगदुर्भगयोरन्यतरत् सुस्वरदुःस्वरयोरन्यतरदादेयानादेययोरन्यतरत् यशःकीर्त्ययशःकीर्त्योरन्यतरत् पराघातनामोच्छ्वासनाम वर्णादिचतुष्टयतैजसकार्मणागुरुलघूपघातनिर्माणमिति । एतद्बन्धस्थानं मिथ्यादृष्टिमाश्रित्य ज्ञेयं। सास्वादने तु "हुण्डं असंपत्तं वा सासाणओ न बन्धइ" इति वचनात्, आद्यानां पञ्चानां संहनननानामन्यतमं संहननं आद्यानां पञ्चानां संस्थानानामन्यतमं संस्थानमिति विशेषः । एतदपि बन्धस्थानं मिथ्यादृष्टौ भिद्यमानमष्टाधिकषट्चत्वारिंशच्छतभेदं भवति, सास्वादने तु द्वात्रिंशच्छतभेदं भवति। षड्भिः संस्थानैः षड्भिः संहननैश्च भिद्यमानं षट्त्रिंशद्भेदं भवति, प्रशस्ताप्रशस्तविहायोगतिभ्यां द्विसप्ततिः स्थिरास्थिराभ्यां चतुश्चत्वारिंशच्छतभेदं, शुभाशुभाभ्यामष्टाशीत्यधिकद्विशतभेदं, सुभगदुर्भगाभ्यां षट्सप्तत्यधिकपञ्चशतभेदं, सुस्वरदुःस्वराभ्यां द्विपञ्चाशदधिकैकादशशतभेदं, आदेयानादेयाभ्यां चतुरधिकत्रयोविंशतिशतभेदं, यशःकीर्त्ययशःकीर्तिभ्यामष्टाधिकषट्चत्वारिंशच्छतभेदं भवतीति । सास्वादने तूक्तनीत्या गुण्यमानं द्वात्रिंशच्छतभेदमेव भवति । उद्योतयुते त्रिंशद्बन्धस्थानेऽप्येवमेवेति । सर्वसंख्यया तिर्यग्गतिप्रायोग्याणि अष्टाधिकत्रिनवतिशतानि ९३०८, तद्यथा-एकेन्द्रियप्रायोग्याणि चत्वारिंशत् ४०, विकलेन्द्रियप्रायोग्याणि एकपञ्चाशत् ५१, तिर्यक्पञ्चेन्द्रियप्रायोग्याणि सप्तदशाधिकद्विनवतिशतानि ९२१७, इति तिर्यग्गतेः सर्वाग्रम् ९३०८। मनुष्यगतिप्रायोग्याणि त्रीणि बन्धस्थानानि,–पञ्चविंशतिः एकोनत्रिंशत् त्रिंशत्। तत्रापर्याप्तमनुष्यप्रायोग्या पञ्चविंशतिः तिर्यक्पञ्चेन्द्रियवद्बोध्या, केवलं तिर्यग्द्विकस्थाने मनुजद्विकं नेय-

मिति । एकोनत्रिंशद्बन्धस्थानं त्रिधा गुणभेदेन भिद्यते–मिथ्यादृष्टिमाश्रित्यैकं, सास्वादनमाश्रित्य द्वितीयं, सम्यग्मिथ्यादृष्टिं सम्यग्दृष्टिं चाश्रित्य तृतीयं । तत्र प्रथमद्वितीये निर्विशेषं पञ्चेन्द्रियतिर्यग्वत्परिभावनीये, केवलं तिर्यग्द्विकस्थाने मनुष्यद्विकं वाच्यमिति । तृतीयं त्वप्रशस्तसंहननसंस्थानविहायोगतिदुर्भगदुःस्वरानादेयप्रकृतीनां बन्धव्यवच्छेदेन स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिपदैरष्टौ भवन्ति । तृतीयं जिनयुतं त्रिंशत्प्रकृत्यात्मकं बन्धस्थानं भवति । अत्राप्यष्टौ भङ्गा भवन्ति । सर्वसंख्या मनुष्यप्रायोग्यबन्धस्थानानि विभज्यमानानि षट्चत्वारिंशच्छतानि सप्तदशाधिकानि भवन्ति, तद्यथा–पञ्चविंशतेरेकम् १+एकोनत्रिंशतेरष्टाधिकषट्चत्वारिंशच्छतानि ४६०८+ त्रिंशतेरष्टौ ८। ४६१७, यतः द्वितीयतृतीयगुणस्थानयोरेकोनत्रिंशद्बन्धस्थानसत्कानि प्रथमे एवान्तर्भवन्तीति । देवगतिप्रायोग्याणि चत्वारि बन्धस्थानानि, तद्यथा–अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशदिति । तत्राष्टाविंशतिरियं–देवगतिः देवानुपूर्वी, पञ्चेन्द्रियजातिः, वैक्रियद्विकं, पराघातनामोच्छ्वासनाम, प्रशस्तविहायोगतिः, प्रथमसंस्थानं, त्रसनाम, बादरनाम, पर्याप्तनाम, प्रत्येकनाम, स्थिरास्थिरयोरेकतरं शुभाशुभयोरेकतरं, सुभगं, सुस्वरं, आदेयनाम यशःकीर्त्ययशःकीर्त्योरेकतरं, नामध्रुवबन्धिनवकमिति । एतद्बन्धस्थानबन्धकाः मिथ्यादृष्टेरारभ्यापूर्वकरणषष्ठभागपर्यवसानाः सर्वेऽपि ज्ञातव्याः । एतद्बन्धस्थानं स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिपदैर्विभज्यमानमष्टप्रकारं भवति । तीर्थंकरनामयुतमेतदेवैकोनत्रिंशद्देवप्रायोग्यं भवति, बन्धकास्त्वविरतसम्यग्दृष्टिप्रभृतयः मनुष्या एव, एतदपि विभज्यमानमष्टप्रकारं भवति । अष्टाविंशतिबन्धनस्थानमेवाहारकद्वययुतं त्रिंशत्प्रकृत्यात्मकं बन्धस्थानं भवति । एतद्बन्धका अप्रमत्ता अपूर्वकरणा च वाच्याः, अतस्तद्विभागीकर्तुं न युज्यते, अस्थिराशुभायशःकीर्तीनां प्रमत्ते बन्धव्यवच्छेदात् । तदेव जिनाहारोभययुतमेकत्रिंशत्प्रकृत्यात्मकं बन्धस्थानं भवति । एतदपि त्रिंशद्बन्धस्थानवद्भावनीयमिति । सर्वसंख्ययाऽष्टादशधा भवति, तद्यथा–अष्टाविंशतिरेकोनत्रिंशत् च अष्टधाष्टधा, त्रिंशदेकत्रिंशच्च एकैकप्रकारं, ८+८+१+१=१८ । नरकगतिप्रायोग्यमेकमेवाष्टाविंशतिप्रकृत्यात्मकं बन्धस्थानं भवति । एतद्बन्धका मिथ्यादृष्टिनो मनुष्यास्तिर्यञ्चश्च ज्ञातव्याः । अष्टाविंशतिरेवम्–नरकद्विकं पञ्चेन्द्रियजातिः वैक्रियद्विकं हुण्डसंस्थानं पराघातोच्छ्वासनाम्नी अप्रशस्तविहायोगतिः त्रसनाम बादरनाम पर्याप्तनाम प्रत्येकनाम अस्थिरनामाशुभनाम दुर्भगनाम दुःस्वरनामानादेयनामायशःकीर्तिनाम नामध्रुवबन्धिनवकमिति । एतच्च विभागीकर्तुं न युज्यते, सर्वासामशुभानामेव बध्यमानत्वादिति । यशःकीर्तिरूपमेकं बन्धस्थानं अपूर्वकरणषष्ठभागान्ते देवगतिप्रायोग्यबन्धव्यवच्छेदे अपूर्वकरणादीनां त्रयाणामवसातव्यमिति । सर्वाणि बन्धस्थानानि विभज्यमानानि सर्वसंख्यया त्रयोदशसहस्राणि नवशतानि पञ्चचत्वारिंशदधिकानि भवन्ति । नामकर्मणः प्रतिग्रहस्थानानि सप्रभेदान्यन्यूनानतिरिक्तानि बन्धस्थानवद्भावनीयानीति नामकर्मणो बन्धस्थानानि प्रतिग्रहस्थानानि चोक्तानि । यन्त्रकम्—

एकेन्द्रियप्रायोग्याणि ३

२३ वर्णचतुष्कतेजसकार्मणागुरुलघूपघातनिर्माणतिर्यग्द्विकैकेन्द्रियजातिहुण्डौदारिकं स्थावरनाम सूक्ष्मबादरयोरन्यतरदपर्याप्तनाम प्रत्येकसाधारणयोरन्यतरदस्थिरनामाशुभनाम दुर्भगनामानादेयनामायशःकीर्तिनामेति ॥ भङ्गाः ४ अपर्याप्तप्रायोग्यमेतत्स्थानम् ॥

२५ तिर्यग्द्विकमेकेन्द्रियजातिरौदारिकशरीरनाम हुण्डसंस्थाननाम स्थावरनाम बादरसूक्ष्मयोरेकतरं पर्याप्तनाम प्रत्येकसाधारणयोरेकतरं स्थिरास्थिरयोरेकतरं शुभाशुभयोरेकतरं यशःकीर्त्ययशःकीर्त्योरेकतरं दुर्भगनामानादेयनाम पराघातनामोच्छ्वासनाम नामध्रुवबन्धिनवकमिति ॥ भङ्गाः २० पर्याप्तप्रायोग्यम् ॥

२६ प्रागुक्तासु प्रकृतिष्वातपमुद्योतं वा केवलं सूक्ष्मसाधारणस्थाने बादरप्रत्येके क्षेपणीये ॥ भङ्गाः १६ पर्याप्तप्रायोग्यम् ॥ ४० एकेन्द्रियप्रायोग्याणि ॥

द्वीन्द्रियप्रायोग्याणि ३

२५ तिर्यग्द्विकं द्वीन्द्रियजातिरौदारिकद्विकं हुण्डसंस्थानं सेवार्तसंहननं त्रसनाम बादरनामापर्याप्तनाम प्रत्येकनामास्थिरनामाशुभनाम दुर्भगनामानादेयनामायशःकीर्तिनाम नामध्रुवबन्धिनवकमिति ॥ भङ्गः १ अपर्याप्तप्रायोग्यम् ॥

२९ तिर्यग्द्विकं द्वीन्द्रियजातिरौदारिकद्विकं हुण्डसंस्थानं सेवार्तसंहननमप्रशस्तविहायोगतिनाम त्रसचतुष्कं स्थिरास्थिरयोरेकतरं शुभाशुभयोरेकतरं दुःस्वरं दुर्भगनामानादेयनाम यशःकीर्त्ययशःकीर्त्योरेकतरं पराघातोच्छ्वासनाम नामध्रुवबन्धिनवकमिति । भङ्गाः ८ पर्याप्तप्रायोग्यम् ॥

३० प्रागुक्तासूद्योतं प्रक्षेपणीयम् ॥ भङ्गाः ८ पर्याप्तप्रायोग्यम् ॥ द्वीन्द्रियस्य भङ्गाः १७, एवं त्रीन्द्रियचतुरिन्द्रिययोरपि वाच्यम् । नवरं स्वकीया जातिः परावर्तनीया ॥

पञ्चेन्द्रियतिर्यक्प्रायोग्याणि ३

२५ द्वीन्द्रियपञ्चविंशतिबन्धस्थानवद्वाच्यम्, नवरं जातिः परावर्तनीया ॥ भङ्गः १ अपर्याप्तप्रायोग्यम् ॥

२९ तिर्यग्द्विकं पञ्चेन्द्रियजातिरौदारिकद्विकं षण्णां संस्थानानामन्यतमं संस्थानं षण्णां संहनननानामन्यतमं संहननं प्रशस्ताप्रशस्तखगत्योरन्यतरा खगतिः त्रसचतुष्कं स्थिरास्थिरयोरन्यतरत् शुभाशुभयोरन्यतरत् सुभगदुर्भगयोरन्यतरत् सुस्वरदुःस्वरयोरन्यतरदादेयानादेययोरन्यतरत् यशःकीर्त्ययशःकीर्त्योरन्यतरत् पराघातोच्छ्वासनामवर्णादिचतुष्कतैजसकार्म्मणागुरुलघूपघातनिर्माणमिति ॥ भङ्गाः ४६०८ मिथ्यादृष्टौ, सास्वादने ३२०० पर्याप्तप्रायोग्यम्, अन्त्यसंहननसंस्थानवर्जं संहननसंस्थानपञ्चकं सास्वादने ॥

३० उद्योतयुक्तं प्राक्तनं बन्धस्थानम् ॥ भङ्गाः ४६०८ पर्याप्तप्रायोग्यम् । पञ्चेन्द्रियतिर्यक्प्रायोग्याः भङ्गाः ९२१७, विकलेन्द्रियप्रायोग्याः ५१, एकेन्द्रियप्रायोग्याः ४०, तिर्यग्गतियोग्याः ९३०८ ॥

मनुष्यगतिप्रायोग्याणि ३

२५ अपर्याप्तपञ्चेन्द्रियतिर्यग्वद्वाच्यम्, नवरं तिर्यग्द्विकस्थाने मनुजद्विकं वक्तव्यम् ॥ भङ्गः १ अपर्याप्तप्रायोग्यम् ॥

२९ अत्रापि तिर्यग्द्विकस्थाने मनुजद्विकं वाच्यम् ॥ मिथ्यादृष्टौ ४६०८, सास्वादने ३२००, मिश्रादौ ८ भङ्गाः । अप्रशस्तसंहननसंस्थानविहायोगतिदुर्भगदुःस्वरानादेयप्रकृतीनां बन्धव्यवच्छेदेन स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिपदैरष्टौ । पर्याप्तप्रायोग्यम् ॥

३० जिनयुक्तं प्राक्तनं स्थानम् ॥ भङ्गाः ८ पर्याप्तप्रायोग्यम् । सर्वाग्रं ४६१७ मनुजगतौ ॥

**देवप्रायोग्याणि ४**

२८ देवद्विकं पञ्चेन्द्रियजातिवैक्रियद्विकं पराघातनामोच्छ्वासनाम प्रशस्तविहायोगतिः प्रथमसंस्थानं त्रसचतुष्कं स्थिरास्थिरयोरेकतरं शुभाशुभयोरेकतरं सुभगं सुस्वरमादेयं यशःकीर्त्ययशःकीर्त्योरेकतरं नामध्रुवबन्धिनवकमिति ॥ भङ्गाः ८ । मिथ्यादृष्टेरारभ्यापूर्वषष्ठभागपर्यन्तम् । पर्याप्तप्रायोग्यम् ॥

---

२९ जिनयुतमष्टाविंशतिबन्धस्थानम् ॥ भङ्गाः ८ । अविरतसम्यग्दृष्टिप्रभृतयो बन्धकाः ॥

---

३० आहारकद्विकयुतमष्टाविंशतिबन्धस्थानम् ॥ भङ्गः १, प्रशस्तप्रकृतीनामेव सद्भावात् । अप्रमत्तेऽपूर्वकरणे चैतद्भवति ॥

---

३१ जिनाहारकद्विकयुतमष्टाविंशतिबन्धस्थानम् ॥ भङ्गः १, प्राग्वदिति ॥ सर्वाग्रं १८ ॥

---

**नरकगतिप्रायोग्यं १**

२८ नरकद्विकं पञ्चेन्द्रियजातिः वैक्रियद्विकं विहायोगतिरप्रशस्तसंस्थानं पराघातोच्छ्वासनाम्नी त्रसचतुष्कमस्थिरषट्कं नामध्रुवबन्धिनवकमिति ॥ भङ्गः १ अप्रशस्तत्वात् । पर्याप्तप्रायोग्यम् ॥

---

१ यशःकीर्तिनामबन्धस्थानमपूर्वसप्तमभागात् सूक्ष्मसम्परायपर्यन्तम् ॥ भङ्गः १ एव ॥ सर्वे भङ्गाः १३९४५ ॥

प्रतिग्रहस्थानान्यपि बन्धस्थानवद्वाच्यानि ॥

| | ज्ञानावरणं- | दर्शनावरणं- | वेदनीयं- | मोहनीयं- | आयुष्कं- | नाम- | गोत्रं- | अन्तरायं |
|---|---|---|---|---|---|---|---|---|
| सत्स्थानानि | १ | ३ | २ | १५ | २ | १२ | २ | १ |
| संक्रमस्थानानि | १ | २ | २ | २३ | ० | १२ | २ | १ |
| बन्धस्थानानि | १ | ३ | २ | १० | १ | ८ | २ | १ |
| प्रतिग्रहस्थानानि | १ | ३ | २ | १८ | ० | ८ | २ | १ |

अथ नामकर्मणः संवेधश्चिन्त्यते—तत्र तिर्यग्द्विकैकेन्द्रियजातितैजसकार्मणौदारिकशरीरहुण्डसंस्थानवर्णगन्धरसस्पर्शागुरुलघूपघातनिर्माणस्थावरसूक्ष्मबादरान्यतरापर्याप्तप्रत्येकसाधारणान्यतरास्थिराशुभदुर्भगानादेयायशःकीर्तिरूपायामपर्याप्तैकेन्द्रियप्रायोग्यायां त्रयोविंशत्यां तत्तत्सत्ताकाः तिर्यञ्चः द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि पञ्च, मनुष्याः तत्तत्सत्ताकाः द्व्यशीतिवर्जानि चत्वारि सत्त्वस्थानानि संक्रामन्ति । तिर्यग्द्विकैकेन्द्रियजात्यौदारिकशरीरहुण्डसंस्थानस्थावरबादरसूक्ष्मान्यतरपर्याप्तप्रत्येकसाधारणान्यतरस्थिरास्थिरान्यतरशुभाशुभान्यतरयशःकीर्त्ययशःकीर्त्यन्यतरदुर्भगानादेयपराघातोच्छ्वासनामध्रुवबन्धिनवकरूपायां पर्याप्तैकेन्द्रियप्रायोग्यायां पञ्चविंशत्यां तिर्यञ्चः प्रागुक्तानि पञ्च, मनुष्याः द्व्यशीतिवर्जानि चत्वारि, देवा द्व्युत्तरशतपञ्चनवतिरूपे द्वे सत्तास्थाने संक्रामन्ति । यद्वा, तिर्यग्द्विकद्वीन्द्रियजात्याद्यन्यतमजात्यौदारिकद्विकहुण्डसंस्थानसेवार्तसंहननत्रसबादरापर्याप्तप्रत्येकास्थिराशुभदुर्भगानादेयायशःकीर्तिनामध्रुवबन्धिनवकरूपायामपर्याप्तद्वित्रिचतुष्पञ्चेन्द्रियतिर्यक्प्रायोग्यायां, तिर्यग्द्विकस्थाने मनुष्यद्विकप्रक्षिप्ते सति अपर्याप्तमनुष्यप्रायोग्यायां च पञ्चविंशत्यां तिर्यञ्चो द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि, मनुष्या द्व्यशीतिवर्जानि चत्वारि सत्त्वस्थानानि संक्रामन्ति । तिर्यग्द्विकैकेन्द्रियजातितैजस-

कार्मणौदारिकशरीरहुण्डसंस्थानवर्णगन्धरसस्पर्शस्थावरबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरयशःकीर्त्ययशःकीर्त्यन्यतरदुर्भगानादेयागुरुलघूपघातोच्छ्वासपराघातनिर्माणरूपायां पञ्चविंशत्यामुद्योते प्रक्षिप्ते आतपे वा प्रक्षिप्ते षड्विंशतिः, तत्र तत्तत्सत्ताकाः तिर्यञ्चो द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि पञ्च, तत्तत्सत्ताकाः मनुष्या द्व्यशीतिवर्जानि चत्वारि, तत्तत्सत्ताका देवाश्च द्व्युत्तरशतपञ्चनवतिरूपं द्वयं सत्त्वस्थानं संक्रामन्ति। देवद्विकपञ्चेन्द्रियजातिवैक्रियद्विकप्रथमसंस्थानप्रशस्तखगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसौभाग्यसुस्वरादेययशःकीर्त्ययशःकीर्त्यन्यतरपराघातोच्छ्वासनामध्रुवबन्धिनवकरूपायां देवप्रायोग्याष्टाविंशतौ पञ्चेन्द्रियतिर्यञ्चो मनुष्यो वा द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिरूपाणि चत्वारि सत्तास्थानानि संक्रामन्ति। नरकप्रायोग्याष्टाविंशतिप्रतिग्रहेऽपि पञ्चेन्द्रियतिर्यङ्मनुष्याणामेवमेव, नवरं षण्णवतिरपि सत्त्वस्थानं बद्धजिननाम्नां नरकाभिमुखानां मनुष्याणां संक्रामति। तिर्यग्द्विकद्वीन्द्रियाद्यन्यतमजात्यौदारिकद्विकहुण्डसंस्थानसेवार्तसंहननाप्रशस्तखगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरदुर्भगदुःस्वरानादेययशःकीर्त्ययशःकीर्त्यन्यतरपराघातोच्छ्वासनामध्रुवबन्धिनवकरूपे विकलेन्द्रियप्रायोग्यैकोनत्रिंशति प्रतिग्रहे, तिर्यग्द्विकपञ्चेन्द्रियजात्यौदारिकद्विकसंस्थानषट्कान्यतमसंस्थानसंहननषट्कान्यतमसंहननान्यतरखगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगदुर्भगान्यतरसुस्वरदुःस्वरान्यतरादेयानादेयान्यतरयशःकीर्त्ययशःकीर्त्यन्यतरपराघातोच्छ्वासवर्णादिचतुष्टयतैजसकार्मणागुरुलघूपघातनिर्माणरूपे तिर्यक्पञ्चेन्द्रियप्रायोग्यैकोनत्रिंशति प्रतिग्रहे च तिर्यक्पञ्चेन्द्रियाः द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि पञ्च सत्त्वस्थानानि संक्रामन्ति, द्व्यशीतिवर्जानि चत्वारि सत्त्वस्थानानि मनुष्याः संक्रामन्ति। देवनारकाः पञ्चेन्द्रियतिर्यक्प्रायोग्यैकोनत्रिंशति प्रतिग्रहे द्व्युत्तरशतपञ्चनवतिरूपं सत्त्वस्थानद्वयं संक्रामन्ति। मनुष्यद्विकपञ्चाक्षजात्यौदारिकद्विकसंस्थानषट्कान्यतमसंस्थानसंहननषट्कान्यतमसंहननान्यतरविहायोगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगदुर्भगान्यतरसुस्वरदुःस्वरान्यतरादेयानादेयान्यतरयशःकीर्त्ययशःकीर्त्यन्यतरपराघातोच्छ्वासनामध्रुवबन्धिनवकरूपैकोनत्रिंशति मनुष्यप्रायोग्यप्रतिग्रहे तिर्यञ्चो नराश्च द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिरूपाणि चत्वारि सत्त्वस्थानानि, तिर्यञ्चश्च मनुष्यद्विकस्य बन्धावलिकाया अभ्यन्तरे वर्तमाना एव द्व्यशीतिरूपमपि सत्तास्थानं संक्रामन्ति। देवा द्व्युत्तरशतपञ्चनवतिसत्त्वस्थानद्वयं संक्रामन्ति। नारकास्तत्र द्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि त्रीणि संक्रामन्ति। तत्र षण्णवतिस्तु बद्धजिननामा अपर्याप्तावस्थायामिति। देवद्विकपञ्चाक्षजातिवैक्रियद्विकप्रथमसंस्थानप्रशस्तखगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगादेयसुस्वरयशःकीर्त्ययशःकीर्त्यन्यतरपराघातोच्छ्वासजिननामध्रुवबन्धिनवकरूपे देवप्रायोग्यैकोनत्रिंशति प्रतिग्रहे मनुष्याः त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि चत्वारि संक्रमस्थानानि संक्रामन्ति।

प्रागुक्ते तिर्यक्प्रायोग्ये एकोनत्रिंशति प्रतिग्रहे उद्योतनाम्नि प्रक्षिप्ते सति त्रिंशत्प्रतिग्रहस्थानं भवति । तत्र संक्रमस्थानान्यपि तद्वदेव वाच्यानि । मनुष्यद्विकपञ्चाक्षजात्यौदारिकद्विकप्रथमसंस्थानप्रथमसंहननप्रशस्तखगतित्रसबादरपर्याप्तप्रत्येकस्थिरास्थिरान्यतरशुभाशुभान्यतरसुभगसुस्वरादेययशःकीर्त्ययशःकीर्त्यन्यतरपराघातोच्छ्वासजिननामध्रुवबन्धिनवकरूपे मनुष्यप्रायोग्यत्रिंशति प्रतिग्रहे देवाः त्र्युत्तरशतषण्णवतिरूपं द्वयं संक्रामन्ति । नारकाः षण्णवतिं संक्रामन्ति । देवद्विकपञ्चाक्षजातिवैक्रियद्विकप्रथमसंस्थानप्रशस्तखगतित्रसबादरपर्याप्तप्रत्येकस्थिरशुभसुभगसुस्वरादेययशःकीर्तिपराघातोच्छ्वासनामध्रुवबन्धिनवकाहारकद्विकरूपे देवगतिप्रायोग्ये त्रिंशति प्रतिग्रहे द्व्युत्तरशतं बन्धावलिकायामपगतायां मनुष्याः संक्रामन्ति, बन्धावलिकाऽनपगतायां तु पञ्चनवतिं संक्रामन्ति । जिननाम्नि तत्र प्रक्षिप्ते सति एकत्रिंशत्प्रकृत्यात्मके प्रतिग्रहे त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि चत्वारि स्थानानि संक्रामन्तिः जिनाहारकसप्तकयोर्बन्धावलिकायामपगतायां त्र्युत्तरशतं, जिननाम्नो बन्धावलिकायामनपगतायां द्व्युत्तरशतं, आहारकसप्तकस्य बन्धावलिकायामनपगतायां षण्णवतिमुभयोर्बन्धावलिकायामनपगतायां पञ्चनवतिं मनुष्याः संक्रामन्ति । यशःकीर्तिरूपे प्रतिग्रहे अष्टौ स्थानानि संक्रामन्ति, तत्र प्रतिग्रहत्वे कृतां यशःकीर्तिरूपामपनीय द्व्युत्तरशतैकोत्तरशतपञ्चनवतिचतुर्नवतिरूपाणि चत्वारि उपशमश्रेण्यां क्षपकश्रेण्यां च त्रयोदशक्षयादर्वाक् संक्रामन्ति, त्रयोदशके च क्षीणे एकोननवत्यष्टाशीतिद्व्यशीत्येकाशीतिरूपाणि चत्वारि स्थानानि तत्तत्सत्ताकाः संक्रामन्तीत्योघतः स्वामित्वं प्रतिपादितम् ॥

॥ नामकर्मणः प्रतिग्रहस्थानेषु संक्रमस्थानानि ॥

| प्रतिग्रह-स्थानानि | बध्यमानप्रतिग्रह-प्रकृत्यभिधानानि | संक्रमस्थानानि | स्वामिनः | | | |
|---|---|---|---|---|---|---|
| | | | सर्वे तिर्यञ्चः | मनुजाः | देवाः | नारकाः |
| २३ | अपर्याप्तैकेन्द्रियप्रायोग्यासु | १०२ | ,, | ,, | ० | ० |
| | ,, | ९५ | ,, | ,, | ० | ० |
| | ,, | ९३ | ,, | ,, | ० | ० |
| | ,, | ८४ | ,, | ,, | ० | ० |
| | ,, | ८२ | ,, | ० | ० | ० |
| २५ | पर्याप्तैकेन्द्रियप्रायोग्यासु | १०२ | ,, | म० | दे० | ० |
| | ,, | ९५ | ,, | ,, | ,, | ० |
| | ,, | ९३ | ,, | ,, | ० | ० |
| | ,, | ८४ | ,, | ,, | ० | ० |
| | ,, | ८२ | ,, | ० | ० | ० |
| २५ | अपर्याप्तविकलेन्द्रियतिर्यक्पञ्चेन्द्रियमनुजप्रायोग्यासु | १०२ | ,, | म० | ० | ० |
| | ,, | ९५ | ,, | ,, | ० | ० |

| | | | | | | |
|---|---|---|---|---|---|---|
| | ,, | ९३ | ,, | ,, | ० | ० |
| | ,, | ८४ | ,, | ,, | ० | ० |
| | ,, | ८२ | ,, | ० | ० | ० |
| २६ | पर्याप्तैकेन्द्रियप्रायोग्यासु | १०२ | ,, | म० | दे० | ० |
| | ,, | ९५ | ,, | ,, | ,, | ० |
| | ,, | ९३ | ,, | ,, | ० | ० |
| | ,, | ८४ | ,, | ,, | ० | ० |
| | ,, | ८२ | ,, | ० | ० | ० |
| २८ | देवप्रायोग्यासु | १०२ | पर्याप्तपञ्चेन्द्रियतिर्यञ्चः | म० | ० | ० |
| | ,, | ९५ | ,, | ,, | ० | ० |
| | ,, | ९३ | ,, | ,, | ० | ० |
| | ,, | ८४ | ,, | ,, | ० | ० |
| २८ | नरकप्रायोग्यासु | १०२ | ,, | ,, | ० | ० |
| | ,, | ९६ | ० | ,, | ० | ० |
| | ,, | ९५ | प० प० ति० | ,, | ० | ० |
| | ,, | ९३ | ,, | ,, | ० | ० |
| | ,, | ८४ | ,, | ,, | ० | ० |
| २९ | पर्याप्तविकलेन्द्रियप्रायोग्यासु | १०२ | सर्वे तिर्यञ्चः | ,, | ० | ० |
| | ,, | ९५ | ,, | ,, | ० | ० |
| | ,, | ९३ | ,, | ,, | ० | ० |
| | ,, | ८४ | ,, | ,, | ० | ० |
| | ,, | ८२ | ,, | ० | ० | ० |
| २९ | पर्याप्तपञ्चेन्द्रियतिर्यक्प्रायोग्यासु | १०२ | ,, | म० | देवाः | नारकाः |
| | ,, | ९५ | ,, | ,, | ,, | ,, |
| | ,, | ९३ | ,, | ,, | ० | ० |
| | ,, | ८४ | ,, | ,, | ० | ० |
| | ,, | ८२ | ,, | ० | ० | ० |
| २९ | पर्याप्तमनुजप्रायोग्यासु | १०२ | ,, | ,, | दे० | ना० |
| | ,, | ९६ | ० | ० | ० | ,, |
| | ,, | ९५ | ति० | म० | दे० | ,, |
| | ,, | ९३ | ,, | ,, | ,, | ,, |
| | ,, | ८४ | ,, | ,, | ० | ० |
| | ,, | ८२ | ,, | ० | ० | ० |
| २९ | देवप्रायोग्यासु | १०३ | ० | म० | ० | ० |
| | ,, | १०२ | ० | ,, | ० | ० |
| | ,, | ९६ | ० | ,, | ० | ० |
| | ,, | ९५ | ० | ,, | ० | ० |
| ३० | पर्याप्तविकलेन्द्रियप्रायोग्यासु | १०२ | सर्वे तिर्यञ्चः | ,, | ० | ० |

| | | | | | | |
|---|---|---|---|---|---|---|
| ,, | ,, | ९५ | ,, | ,, | ० | ० |
| ,, | ,, | ९३ | ,, | ,, | ० | ० |
| ,, | ,, | ८४ | ,, | ,, | ० | ० |
| ,, | ,, | ८२ | ,, | ० | ० | ० |
| ३० | प० पञ्चेन्द्रियतिर्यक्प्रायो० | १०२ | ,, | म० | दे० | ना० |
| | ,, | ९५ | ,, | ,, | ,, | ,, |
| | ,, | ९३ | ,, | ,, | ० | ० |
| | ,, | ८४ | ,, | ,, | ० | ० |
| | ,, | ८२ | ,, | ० | ० | ० |
| ३० | प० मनुजप्रायोग्यासु | १०३ | ० | ० | दे० | ० |
| | ,, | ९६ | ० | ० | ,, | ० |
| ३० | देवप्रायोग्यासु | १०२ | ० | म० | ० | ० |
| | ,, | ५५ | ० | ,, | ० | ० |
| ३१ | देवप्रायोग्यासु | १०३ | ० | ,, | ० | ० |
| | ,, | १०२ | ० | ,, | ० | ० |
| | ,, | ९६ | ० | ,, | ० | ० |
| | ,, | ९५ | ० | ,, | ० | ० |
| १ | यशःकीर्त्याम् | १०२ | ० | ,, उ. श्रे. | ० | ० |
| | ,, | १०१ | ० | ,, | ० | ० |
| | ,, | ९५ | ० | ,, | ० | ० |
| | ,, | ९४ | ० | ,, | ० | ० |
| | ,, | ८९ | ० | ,, क्ष. श्रे. | ० | ० |
| | ,, | ८८ | ० | ,, | ० | ० |
| | ,, | ८२ | ० | ,, | ० | ० |
| | ,, | ८१ | ० | ,, | ० | ० |

अथ गुणस्थानद्वारेण स्वामित्वमुच्यते–गुणस्थानानि च चतुर्दश भवन्ति, तद्यथा–मिथ्यादृष्टिगुणस्थानम्, सास्वादनसम्यग्दृष्टिगुणस्थानम्, मिश्रदृष्टिगुणस्थानम्, अविरतसम्यग्दृष्टिगुणस्थानम्, देशविरतिगुणस्थानम्, प्रमत्तसंयतगुणस्थानम्, अप्रमत्तसंयतगुणस्थानम्, अपूर्वकरणगुणस्थानम्, अनिवृत्तिबादरसम्परायगुणस्थानम्, सूक्ष्मसम्परायगुणस्थानम्, उपशान्तमोहवीतरागच्छद्मस्थगुणस्थानम्, क्षीणमोहवीतरागच्छद्मस्थगुणस्थानम्, सयोगिकेवलिगुणस्थानम्, अयोगिकेवलिगुणस्थानमिति । तत्र गुणाः ज्ञानदर्शनचारित्ररूपा जीवस्वभावविशेषास्तेषां स्थानं शुद्ध्यविशुद्धिप्रकर्षापकर्षकृतः स्वरूपभेदः। तिष्ठन्ति गुणा अस्मिन्निति स्थानम्, गुणानां स्थानं गुणस्थानम्। मिथ्या विपर्यस्ता दृष्टिरर्हत्प्रणीतजीवाजीवादिवस्तुप्रतिपत्तिः यस्य स मिथ्यादृष्टिः भक्षितहृत्पुरपुरुषस्य सिते पीतप्रतिपत्तिवदिति। तस्य गुणस्थानं मिथ्यादृष्टिगुणस्थानम् । ज्ञानादिगुणानामविशुद्धिप्रकर्षविशुद्ध्यपकर्षकृतः स्वरूपविशेष इति । ननु ज्ञानादयो गुणाः विपर्यस्तायां दृष्टौ कथं

भवेयुरिति चेत्? उच्यते–इह यद्यपि प्रबलमिथ्यात्वमोहनीयोदयाज्जिनप्रणीतजीवाजीवादिवस्तुप्रतिपत्तिरूपा दृष्टिरसुमतां विपर्यस्ता भवति, तथापि काचिन्मनुष्यपश्वादिप्रतिपत्तिरविपर्यस्ता, ततो निगोदावस्थायामपि तथाभूताव्यक्तस्पर्शमात्रप्रतिपत्तिरविपर्यस्ता भवति, अन्यथाऽजीवत्वप्रसङ्गात्, तदुक्तं–"सव्वजीवाणं पि य णं अक्खरस्स अणंतभागो निच्चुग्घाटिओ चिट्ठइ जइ पुण सो वि आवरिज्जिज्जा तो णं जीवो अजीवत्तणं पाविज्जत्ति" यथातिनिबिडघनाघनघनपटलेन रजनीकरदिनकरकरनिकरतिरस्कारेऽपि न तत्प्रभाया एकान्तेन नाशः सम्पद्यतेअन्यथा दिनरजनिविभागाभावप्रसङ्गात्, तदुक्तं—"सुट्ठुवि मेहसमुदए होइ पहा चन्दसुराणं" एवमिहापि प्रबलमिथ्यात्वोदयेऽपि काचिदविपर्यस्तापि दृष्टिर्भवतीति तदपेक्षया मिथ्यादृष्टेरपि गुणस्थानसंभवः। ननु तर्हि न्यायप्राप्तं सम्यङ्मिथ्यादृष्टित्वम्, यतो मनुष्यपश्वाद्यपेक्षयान्ततो निगोदावस्थायामपि तथाभूताव्यक्तस्पर्शमात्रापेक्षया च सम्यक्त्वं जिनप्रणीततत्त्वाश्रद्धानापेक्षया तु मिथ्यात्वमिति चेत्? न, जिनप्रणीतं सकलमपि द्वादशाङ्गार्थं रोचमानोऽपि जिनप्रणीतमेकमप्यक्षरमरोचमानो मिथ्यादृष्टिरुच्यते, सर्वज्ञे भगवति प्रत्ययाभावात्, तदुक्तं—"पयमक्खरं पि इक्कं पि जो न रोएइ सुत्तनिदिट्ठं। सेसं रोयंतो वि हु मिच्छदिट्ठी जमालिव ॥ १ ॥" इति, किं पुनः सर्वज्ञप्रणीतसकलद्वादशाङ्गार्थज्ञानविकल इति ॥

तच्च यज्जिनेन्द्रैः प्रज्ञप्तं तदेव सत्यमिति निश्चयात्मकस्य सम्यक्त्वस्य प्रतिपक्षभूतं मिथ्यात्वं द्विविधं भवति, जीवादयो न तत्त्वमिति विपर्यासात्मकं जीवादयस्तत्त्वमिति निश्चयाभावरूपानधिगमात्मकम्, तदुक्तं वाचकमुख्यैः—"अनधिगमविपर्ययौ च मिथ्यात्वम्" इति। यद्वा लौकिकलोकोत्तरभेदात् द्विविधं मिथ्यात्वं भवति। तत्र लौकिकमपि द्विविधम्, देवगतगुरुगतभेदात्, लौकिकदेवगतं हरिहरब्रह्मादिदेवानां नमनपूजनादिना तद्भवनगमनादिना च तत्तद्देशप्रसिद्धमनेकविधं भवति, लौकिकगुरुगतं द्विजन्मतापसपरिव्राजकादीनां नमस्कृतिकरणं तदग्रे पतनं तदग्रे 'नमः शिवाय' 'नमः कृष्णाये'त्यादिभणनं तत्कथाश्रवणं तदुक्तक्रियाकरणं तत्कथाश्रवणबहुमानकरणादिना नानाविधं भवति। लोकोत्तरमपि द्विविधम्, देवगुरुगतभेदात्, देवगतमन्यतीर्थिकसंगृहीतजिनार्चार्चननमनादिना इह लोकार्थं च जैनतीर्थयात्रागमनमाननादिना स्यात्, गुरुगतं च पार्श्वस्थादीनां गुरुत्वबुद्ध्या वन्दनादिकरणमिहलोकार्थं गुरुस्तूपादौ यात्रोपयाचनादिकरणमिति लौकिकलोकोत्तरोभयमीलने भेदचतुष्टयी, तदुक्तं दर्शनशुद्धिप्रकरणे—"दुविहं लोइअमिच्छं देवगयं गुरुगयं मुणेअव्वं। लोउत्तरिअं पि दुविहं देवगयं गुरुगयं चेव ॥ १ ॥" इति।

अथाभिग्राहिकादिभेदेन पञ्चप्रकारं मिथ्यात्वमुच्यते, तद्यथा–आभिग्राहिकमनाभिग्राहिकमभिनिवेशिकं सांशयिकमनाभोगिकमिति, तथा चोक्तम्—"आभिग्गहिअमणभिग्गहियं च तह अभिनिवेसिअं चेव। संसइअमणाभोगं मिच्छत्तं पंचहा एअं ॥१॥" तत्र स्वशासननियन्त्रितविवेकालोकानां परपक्षप्रतिक्षेपदक्षाणां पाखण्डिनामाभिग्राहिकं भवति, धर्माधर्मवादेन परीक्षापूर्वकं तत्त्वमाकलय्य स्वाभ्युपगतार्थं श्रद्दधानानां जैनानां परपक्षप्रतिक्षेपदक्षत्वेऽपि

नाभिग्राहिकम्, तद्विवेकालोकस्य स्वशास्त्रानियन्त्रितत्वात् । यस्तु नाम्ना जैनोऽपि स्वकुलाचारेणैवागमपरीक्षां नाधत्ते तस्याभिग्राहिकमेव भवति, सम्यग्दृष्टीनामपरीक्षिते पक्षपातायोगात् । प्रज्ञापाटवाभावेन विवेकविकलानामपि गीतार्थनिश्रितानां माषतुषादिकल्पानां नाभिग्राहिकमिति । अनाभिग्राहिकं सर्वे देवगुरवो वन्दनीयाः न निन्दनीयाः, तथा सर्वोऽपि धर्मः श्रेष्ठ इत्यादिकमनेकविधं भवति । आभिनिवेशिकं जानानोऽपि स्वकीयं कदाग्रहं न मुञ्चति, दुरभिनिवेशविप्लावितमतित्वाज्जमालिवदिति । सांशयिकं देवगुरुधर्मेष्वयमन्यो वेति संशयानस्य भवति, अनाभोगिकं विचारशून्यस्यैकेन्द्रियादेः विशेषज्ञानविकलस्य वा भवति । इदमपि सर्वांशविषयाव्यक्तबोधरूपं विवक्षितकिञ्चिदंशाव्यक्तबोधरूपं चेत्यनेकविधं भवति । पञ्चानामपि मिथ्यात्वानां बहुश्रुतधुरीणश्रीमद्यायाचार्योक्तानि लक्षणानि धर्मपरीक्षागतानि लिख्यन्ते—

"तत्राभिग्राहिकम्—अनाकलिततत्त्वस्याप्रज्ञापनीयताप्रयोजकस्वस्वाभ्युपगतार्थश्रद्धानम्, यथा बौद्धसांख्यादीनां स्वस्वदर्शनप्रक्रियावादिनाम्, यद्यपि वैतण्डिको न किमपि दर्शनमभ्युपगच्छति, तथापि तस्य स्वाभ्युपगतवितण्डावादार्थ एव निबिडाग्रहवत्त्वादाभिग्रहिकत्वमिति नाव्याप्तिः । 'अनाकलिततत्त्वस्य' इतिविशेषणाद् यो जैन एव धर्म्मवादेन परीक्षापूर्वं तत्त्वमाकलय्य स्वाभ्युपगतार्थं श्रद्धत्ते तत्र नातिव्याप्तिः । यस्तु नाम्ना जैनोऽपि स्वकुलाचारेणैवागमपरीक्षां नाधत्ते तस्याभिग्रहिकत्वमेव, सम्यग्दृशोऽपरीक्षितपक्षपातित्वायोगात्, तदुक्तं हरिभद्रसूरिभिः—"पक्षपातो न मे वीरे न द्वेषः कपिलादिषु । युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रहः ॥ १ ॥" इति । यश्चागीतार्थो गीतार्थनिश्रितो माषतुषादिकल्पः प्रज्ञापाटवाभावादनाकलिततत्त्व एव स्वाभिगतार्थं जैनक्रियाकदम्बकरूपं श्रद्धत्ते तस्य स्वाभ्युपगतार्थश्रद्धानं नाप्रज्ञापनीयताप्रयोजकम्, असद्ग्रहशक्त्यभावात्, किन्तु गुणवदाज्ञाप्रामाण्यमूलत्वेन गुणवत्पारतन्त्र्यप्रयोजकमित्य'प्रज्ञापनीयताप्रयोजकत्व'विशेषणात् न तत्रातिव्याप्तिः ॥ स्वपराभ्युपगतार्थयोरविशेषेण श्रद्धानमनाभिग्राहिकम्, यथा 'सर्वाणि दर्शनानि शोभनानि' इति प्रज्ञावतां मुग्धलोकानाम् । यद्यपि परमोपेक्षावतां निश्चयपरिकर्म्मितमतीनां सम्यग्दृष्टीनां स्वस्थाने सर्वनयश्रद्धानमस्ति, शिष्यमतिविस्फारणरूपकारणं विनैकतरनयार्थनिर्धारणस्याशास्त्रार्थत्वात्, तदाह सम्मतौ सिद्धसेनः—"णिययवयणिज्जसच्चा सव्वणया परवियालणे मोहा । ते पुण न दिट्ठसमओवि भयइ सच्चे व अलिएव" तथापि स्वस्वस्थानावियोगलक्षणेन विशेषेण तेषां सर्वनयश्रद्धानमस्तीति नातिव्याप्तिः ॥ विदुषोऽपि स्वरसवाहि भगवत्प्रणीतशास्त्रबाधितार्थश्रद्धानमाभिनिवेशिकम् । स्वस्वशास्त्रबाधितार्थश्रद्धानं विपर्यस्तशाक्यादेरपीति तत्रातिव्याप्तिवारणाय भगवत्प्रणीतत्वं शास्त्रविशेषणम् । भगवत्प्रणीतशास्त्रे बाधितार्थश्रद्धानमिति सप्तमीगर्भसमासाश्रातिव्याप्तितादवस्थ्यम्, तथाप्यनाभोगात्प्रज्ञापकदोषाद्वा वितथश्रद्धानवति सम्यग्दृष्टावतिव्याप्तिः अनाभोगाद्गुरुनियोगाद्वा सम्यग्दृष्टेरपि वितथश्रद्धानभणनात् तथा चोक्तमुत्तराध्ययननिर्युक्तौ—"सम्मद्दिट्ठी जीवो उवइट्ठं पवयणं तु सद्दहइ । सद्दहइ असब्भावं अणाभोगा गुरुणियोगा वा ॥१॥" इति तद्वारणाय स्वरसवाहीति सम्यग्वक्तृवचनानिवर्त्तनीयत्वं तदर्थः । अनाभोगादिजनितं मुग्धश्रद्धादीनां वितथश्रद्धानं तु सम्यग्वक्तृवचननिवर्त्तनीयमिति न दोषस्तथापि जिनभद्रसिद्धसेनादिप्रावचनिकप्रधा-

नविप्रतिपत्तिविषयपक्षद्वयान्यतरस्य वस्तुनः शास्त्रबाधितत्वात्तदन्यतरश्रद्धानवतोऽभिनिवेशित्वप्रसङ्ग इति तद्वारणार्थं 'विदुषोऽपी'ति–शास्त्रतात्पर्यबाधप्रतिसन्धानवत इत्यर्थः। सिद्धसेनादयश्च स्वस्वाभ्युपगतमर्थं शास्त्रतात्पर्यबाधं प्रतिसन्धायापि पक्षपातेन न प्रतिपन्नवन्तः, किन्त्वविच्छिन्नप्रावचनिकपरम्परया शास्त्रतात्पर्यमेव स्वाभ्युपगतार्थानुकूलत्वेन प्रतिसन्धायेति न तेऽभिनिवेशिनः। गोष्ठामाहिलादयः शास्त्रतात्पर्यबाधं प्रतिसन्धायैवान्यथा श्रद्धत्ते इति न दोषः। भगवद्वचनप्रामाण्यसंशयप्रयुक्तः शास्त्रार्थसंशयः सांशयिकम्, यथा सर्वाणि दर्शनानि प्रमाणं कानिचिद्वा, इदं भगवद्वचनं प्रमाणं न वेत्यादि संशयानानां। मिथ्यात्वप्रदेशोदयनिष्पन्नानां साधूनामपि सूक्ष्मार्थसंशयानां मिथ्यात्वभावो मा प्रासाङ्क्षीदिति 'भगवद्वचनप्रामाण्यसंशयप्रयुक्तत्वं' विशेषणम्। ते च नैवंभूताः किन्तु भगवद्वचनप्रामाण्यज्ञाननिवर्तनीयाः, सूक्ष्मार्थादिसंशये सति "तमेव सच्चं णीसंकं जं जिणेहिं पवेइयं" इत्याद्यागमोदितभगवद्वचनप्रामाण्यपुरस्कारेण तदुद्धारस्यैव साध्वाचारत्वात्। या तु शङ्का साधूनामपि स्वरसवाहितया न निवर्तते सा सांशयिकमिथ्यात्वरूपा सत्यनाचारापादिकैव, अत एव काङ्क्षामोहोदयादाकर्षसिद्धिः॥ साक्षात्परम्परया च तत्त्वाप्रतिपत्तिरनाभोगम्। यथैकेन्द्रियादीनां तत्त्वातत्त्वानध्यवसायवतां मुग्धलोकानां च। यद्यपि माषतुषादिकल्पानां साधूनामपि साक्षात्तत्त्वाप्रतिपत्तिरस्ति, तथापि तेषां गीतार्थनिश्रितत्वात्तद्गततत्त्वप्रतिपत्तिः परम्परया तेष्वपि सत्त्वान्न तत्रातिव्याप्तिः। तत्त्वाप्रतिपत्तिश्चात्र संशयनिश्चयसाधारणं तत्त्वज्ञानसामान्याभाव इति न सांशयिकेऽतिव्याप्तिरितिदिक्" ॥

भव्यानां पञ्चापि मिथ्यात्वानि भवन्ति। अभव्यानामभिग्राहिकानाभोगिकरूपे द्वे एव भवतः, न शेषाणि, यतो व्यवच्छिन्नपक्षपातत्वेन मलाल्पत्वनिबन्धनमनाभिग्राहिकम्, व्यापन्नदर्शननियतत्वेनापार्द्धपुद्गलपरावर्त्तशेषसंसारिणां चाभिनिवेशिकं भवति, सांशयिकमपि तस्य न भवति, प्रवचनबाधितार्थेऽभव्यस्य निष्कम्पत्वेनैव प्रवृत्तेः, सांशयिकमिथ्यात्ववतस्तु सकम्पैव प्रवृत्तिः। अत एव भव्याभव्यत्वशङ्काऽप्यभव्यस्याचाराङ्गवृत्तौ निषिद्धा, तदुक्तम्— "अभव्यस्य भव्याभव्यत्वशङ्काया अभावात्" इति। नन्वन्तस्तत्त्वशून्यानामभव्यानामनाभोगिकं मिथ्यात्वं भवतु परमाभिग्राहिकं कथं भवतीति चेत्? नास्त्येवात्मा १ न नित्यात्मा २ न कर्त्ता ३ कृतं न वेदयति ४ नास्ति निर्वाणं ५ नास्ति निर्वाणोपाय ६ इत्याद्याभिग्राहिकस्य चार्वाकादिदर्शनप्रवर्तकस्य षड् भेदा भवन्ति, ते च सदा नास्तिकमतानामभव्यानां व्यक्ता भवन्तीति कथमाभिग्राहिकत्वे तेषां संशय इति। नन्वभव्यानां व्यक्तमिथ्यात्वे किं प्रमाणमिति चेत्? गुणस्थानक्रमारोहसूत्रवृत्तिः, तथा च तद्ग्रन्थः—"अभव्याश्रितमिथ्यात्वेऽनाद्यनन्तास्थितिर्भवेत्। सा भव्याश्रितमिथ्यात्वेऽनादिसान्ता पुनर्मता॥१॥ अभव्यानाश्रित्य मिथ्यात्वे—सामान्येन व्यक्ताव्यक्तमिथ्यात्वविषयेऽनाद्यनन्ता स्थितिर्भवति। तथा सैव स्थितिर्भव्यजीवान् पुनराश्रित्यानादिसान्ता मता। यदाह—मिच्छत्तमभव्वाणं तमणाइमणंतयं मुणेयव्वं। भव्वाणं तु अणाईसपज्जवसियं तु सम्मत्ते॥१॥" इति स्पष्टं व्यक्तमिथ्यात्वं भवति। अपि च प्रवचनार्हत्प्रत्यनीकानां व्यक्ततरतीव्रमिथ्यात्वमोहनीयोदयानां पालकसङ्गमादीनां नानाप्रकाराः कुविकल्पाः श्रूयन्ते, किञ्च मोक्षकारणे धर्म्मे एकान्तभवकारणत्वेनाधर्म्मश्रद्धानरूपं मिथ्यात्वमपि लब्ध्याद्यर्थं गृहीतप्रव्रज्यानां व्यक्तमेव भव-

ति । ननु व्यवहारतो व्यक्तमिथ्यात्वे सम्यक्त्वे वा सत्यपि निश्चयतः सर्वकालमप्यनाभोग-मिथ्यात्वमिति चेत् ? न, आभिग्राहिकस्थलेऽपि निश्चयतोऽनाभोगकल्पनाप्रसङ्गेन तदुच्छेदप्रसङ्गात्, बहिरन्तर्व्यक्ताव्यक्तोपयोगद्वयाभ्युपगमेऽपसिद्धान्तकलङ्कदूषितत्वाच्च । ननु क्रियावादित्वाभिव्यञ्जकं धर्म्मबुद्ध्या क्रियारुचिनिमित्तं चरमपुद्गलावर्त्तशेषसंसारस्य व्यक्तमिथ्यात्वं भवति, तदुक्तम्—"तेसु वि एगो पुग्गलपरिअट्टो जेसि हुज्ज संसारो । तहभव्वत्ता तेसिं केसिंची होइ किरियरुई ॥१॥ तीए किरियाकरणं लिंगं पुण होइ धम्मबुद्धीए । किरियारुईणिमित्तं जं वुत्तं वत्तमिच्छंति ॥ २ ॥" इति, ततोऽन्यदव्यक्तमिथ्यात्वम्, न चाभव्यस्यैकपुद्गलावर्त्तशेषसंसारः, ततस्तस्याव्यक्तमिथ्यात्वं सिद्धमिति चेत् ? न, अचरमावर्त्तवर्त्तिनां भव्यानां शाक्यादीनामप्यव्यक्तानाभोगमिथ्यात्वसत्त्वे आभिग्राहिकमिथ्यात्वोच्छेदप्रसङ्गात्, तथा शाक्यादीनामुन्मार्गगामित्वमपि न स्यात्, तथाच—"कुप्पवयणपासंडी सव्वे उम्मग्गपट्ठिया" इत्यागमविरोधश्च । नन्वनाभोगमिथ्यात्ववतामपि शाक्यादीनामुन्मार्गगामित्वे को दोष इति चेत् ? न, अनाभोगमिथ्यात्वे उन्मार्गगामित्वस्यैवासंभवात्, तथाहि–अनाभोगमिथ्यात्वस्यानादिमत्त्वेन तद्वतां निजगृहकल्पत्वेन न मार्गगामित्वं न वोन्मार्गगामित्वं स्यात्, यथा-लोकेऽपि स्वगृहस्थितो न मार्गगामी न वोन्मार्गगामीति व्यपदिश्यते, किन्तु गृहान्निर्गतोऽभीष्टपुरं गच्छन् मार्गगामीति भण्यते, अन्यथा तून्मार्गगामीत्युच्यते । एवं तथाभव्यत्व-योगादनादिमिथ्यात्वान्निर्गतो यदि जैनमार्गं प्रतिपद्यते तदा मार्गगामी, जिनोक्तमार्गस्यैव मोक्षमार्गत्वात्, यदि शाक्यादिदर्शनं जमालिप्रमुखस्य वा दर्शनं प्रतिपद्यते तदोन्मार्गगामित्वं व्यपदिश्यते, तद्दर्शनस्य संसारनिबन्धनत्वेन मोक्षमार्गं प्रत्युन्मार्गत्वादिति नानाभोगमिथ्यात्वे उन्मार्गगामित्वम् । उन्मार्गगामित्वं चाभव्यानां, चरमावर्तवर्त्तिनामचरमावर्त्तवर्त्तिनां वा भव्यानां सुस्पष्टमेवातोऽभव्यानामपि दुर्भव्यानामिव स्वयोग्यभूम्यनुसारेण व्यक्ताभिग्राहिकमिथ्यात्वस्वीकारे न कोऽपि दोष इति । ये च केचनाधुनिका लोकवञ्चनपरा वेषविडम्बका दम्भप्रियादयः शास्त्रविहितां भागवतीदीक्षामयोग्यत्वेनोपदिशन्ति, स्वोदरपूरणार्थं च लोकहेरीकया भवोपयोगिविज्ञानशालाद्यर्थं सूत्रविरुद्धं यथा तथा प्ररूपयन्ति, देशकालादिव्याजेन तथोपदेशश्च मुनीनां कर्त्तव्यमिति च मन्यन्ते, देवद्रव्यापोहं च कुर्वन्ति तेऽप्यभिनिवेशमिथ्यात्वान्तर्गता मन्तव्या इति ॥

एवमनाभिग्राहिकादीनामपि मिथ्यात्वानामाशयभेदेन बहवो भेदा भवन्ति, तथाहि–अनाभिग्राहिकं द्विविधं भवति, तद्यथा—सर्वदर्शनविषयकं यथा सर्वाणि दर्शनानि शोभनानीति, देशविषयकं यथा सर्व एव श्वेताम्बरदिगम्बरादिपक्षाः शोभना इत्यादि । आभिनिवेशिकस्यापि जमालिगोष्ठामाहिलादिभिः मतिभेदेन प्रधाविता अनेके भेदास्सन्ति, तदुक्तं व्यवहारभाष्ये—"मइभेएण जमाली पुव्विं वुग्गाहिएण गोविंदो । संसग्गए भिक्खू गोट्ठामाहिल अहिणिवेसत्ति ॥ १ ॥" इति । सांशयिकमपि सर्वदर्शनजैनदर्शनतदेकदेशपदवाक्यादिसंश-

यभेदेन बहुभेदं भवति। अनाभोगिकमपि मिथ्यात्वं सर्वांशविषयाव्यक्तबोधरूपं विवक्षितकिञ्चिदंशाव्यक्तबोधरूपमित्याद्यनेकविधं भवति । तत्राभिग्राहिकाभिनिवेशलक्षणे द्वे मिथ्यात्वे फलमपेक्ष्य गुरू, विपर्यासरूपत्वेन सानुबन्धक्लेशमूलत्वात्, विपर्यासोऽत्र महान् दोषः, असत्प्रवृत्तिहेतुत्वेन दुष्प्रतीकारत्वादतो गुरुके । शेषाणि त्रीणि फलतः प्रज्ञापनीयतारूपं गुरुपारतन्त्र्यरूपं च फलमपेक्ष्य लघूनि भवन्ति, विपरीतावधारणरूपविपर्यासव्यावृत्तत्वेनैतेषां क्रूरानुबन्धफलकत्वाभावादिति, अनध्यवसायसंशयौ तु न गुरुदोषजनकौ, अतत्त्वाभिनिवेशाभावेन तयोः सुप्रतिकारत्वेनात्यन्तानर्थसम्पादकत्वाभावादत एव त्रीणि लघूनि भवन्ति, तदुक्तं श्रीमद्धरिभद्रसूरिपादैरुपदेशपदे—"एसो अ एत्थ गुरुओ णाणज्झावसायसंसया एवं । जम्हा असप्पवित्ती एत्तो सव्वत्थणत्थफला ॥ १ ॥" इति । तच्च मिथ्यात्वं त्रिविधमनाद्यनन्तमभव्यस्यानादिसान्तं भव्यस्य, सादिसान्तं सम्यक्त्वात् प्रतिप्रततो मिथ्यात्वमागतस्येत्युक्तं मिथ्यादृष्टिगुणस्थानम् ॥

सासादनसम्यग्दृष्टिगुणस्थानमुच्यते—तत्रायमौपशमिकसम्यक्त्वलाभलक्षणं सादयत्यपनयतीति सासादनमनन्तानुबन्धिकषायवेदनम्, "पृषोदरादित्वाद्यलोपः" "कृद्बहुलमिति कर्तर्यनट"—। आसादनेन सह वर्तते इति सासादनः, सम्यगविपर्यस्ता दृष्टिः जिनप्रणीतवस्तुप्रतिपत्तिः यस्य स सम्यग्दृष्टिः, सासादनश्चासौ सम्यग्दृष्टिश्च सासादनसम्यग्दृष्टिः। सास्वादनसम्यग्दृष्टिगुणस्थानमिति वा पाठः तत्रौपशमिकसम्यक्त्वलक्षणरसास्वादेन सह वतर्त इति सास्वादनः, तथाहि—भुक्तक्षीरान्नविषयव्यलिकचित्तः पुरुषस्तद्वमनकाले क्षीरान्नरसमास्वादयति, तद्वन्मिथ्यात्वाभिमुखत्वेन सम्यक्त्वस्योपरि व्यलिकचित्तः सम्यक्त्वमुद्वमन् तद्रसमास्वादयति, सास्वादनश्चासौ सम्यग्दृष्टिश्च सास्वादनसम्यग्दृष्टिस्तस्य गुणस्थानं सास्वादनसम्यग्दृष्टिगुणस्थानम् । परमानन्दरूपानन्तसुखफलप्रदो मोक्षबीजभूत औपशमिकसम्यक्त्वलाभो जघन्यतः समयेनोत्कृष्टतः षडावलिकाभिरपगच्छति, स एव सास्वादनगुणस्थानकाल इत्युक्तं सास्वादनसम्यग्दृष्टिगुणस्थानम् ॥

अथ मिश्रगुणस्थानमुच्यते, सम्यक् च मिथ्या च दृष्टिर्यस्यासौ सम्यग्मिथ्यादृष्टिस्तस्य गुणस्थानं सम्यग्मिथ्यादृष्टिगुणस्थानम् । अर्द्धविशुद्धदर्शनमोहनीयपुञ्जोदयादर्द्धविशुद्धं जिनप्रणीततत्त्वश्रद्धानं भवति, ततोऽन्तर्मुहूर्त्तप्रमाणं सम्यग्मिथ्यादृष्टिगुणस्थानमुच्यते । अन्तर्मुहूर्त्तादूर्ध्वं तु नियमेन सम्यक्त्वं मिथ्यात्वं वा गच्छतीति ॥

अथाविरतसम्यग्दृष्टिगुणस्थानमुच्यते—विरतिः विरतं "क्लीबे क्तप्रत्ययः" तत्पुनः सावद्ययोगप्रत्याख्यानं, तन्न जानाति नाभ्युपगच्छति न तत्पालनाय यतत इति त्रयाणां पदानामष्टौ भङ्गाः । तत्र प्रथमेषु चतुर्षु भङ्गेषु नियमात् मिथ्यादृष्टिरज्ञानित्वात्, शेषेषु त्रिषु सम्यग्दृष्टिर्ज्ञानित्वादिति । सप्तसु भङ्गेषु नास्य विरतमस्तीत्यविरतो—"अभ्रादिभ्यः" इत्यप्रत्ययः, चरमे तु भङ्गे विरतिरस्तीति ।

॥ अष्टभङ्गकयन्त्रम् ॥

| | | | |
|---|---|---|---|
| न जानाति | न स्वीकरोति | न पालयति | सर्वलोकः |
| न जानाति | न स्वीकरोति | पालयति | अज्ञानतपस्वी |
| न जानाति | स्वीकरोति | न पालयति | पार्श्वस्थः |
| न जानाति | स्वीकरोति | पालयति | अगीतार्थः |
| जानाति | न स्वीकरोति | न पालयति | श्रेणिकादयः |
| जानाति | न स्वीकरोति | पालयति | अनुत्तरदेवाः |
| जानाति | स्वीकरोति | न पालयति | संविग्नपाक्षिकः |
| जानाति | स्वीकरोति | पालयति | व्रतधारी |

यद्वा विरमति स्म सावद्ययोगेभ्यो निवर्तते स्मेति विरतो न विरतोऽविरतः स चासौ सम्यग्दृष्टिश्चाविरतसम्यग्दृष्टिः, स च क्षायिकसम्यग्दृष्टिरौपशमिकसम्यग्दृष्टिः क्षायोपशमिकसम्यग्दृष्टिर्वा, परममुनिप्रणीतां सावद्ययोगविरतिं सिद्धिसौधाध्यारोहणनिःश्रेणिकल्पां जानन्नप्यप्रत्याख्यानकषायविघ्नितत्वान्नाभ्युपगच्छति, न तत्पालनाय यतत इत्यसावविरतसम्यग्दृष्टिस्तस्य गुणस्थानमविरतसम्यग्दृष्टिगुणस्थानम्, तदुक्तं—"बंधं अविरइउं जाणंतो रागदोसदुक्खं च। विरइसुहं इच्छन्तो विरइं काउं च असमत्थो ॥ १ ॥ एस असंजमसंमो निंदंतो पापकम्मकरणं च। अहिगयजीवाजीवो अचलियदिट्ठी चलियमोहो ॥ २ ॥" इति। एतच्च गुणस्थानं जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतः साधिकत्रयास्त्रिंशत् सागरोपमं यावद्भवति, परतो देशविरतित्वादिभावादिति। मिश्रवर्जान्येतान्येव त्रीणि गुणस्थानानि गत्यन्तरमनुगच्छन्ति, न शेषाणीति। सम्यक्त्वं च सर्वथा मिथ्यात्वत्यागेन भवति, तत्त्यागश्च त्रिविधत्रिविधप्रत्याख्यानेन भवति, तदुक्तम्—"मिच्छत्तपडिक्कमणं तिविहं तिविहेण नायव्वं" इति। अत्र चेयं भावना—अनन्तरोक्तं मिथ्यात्वं मनोवाक्कायैः न करोति न कारयति न चानुमोदयति, तदुक्तम्—"एअं अणंतरुत्तं मिच्छत्तं मणसा न चिंतइ करेमि। सयमेव सो करेउ अन्नेण कए व सुट्ठु कयं ॥ १ ॥ एवं वाया न भणइ करेमि अण्णं च न भणइ करेह। अन्नकयं न पसंसइ न कुणइ सयमेव काएणं ॥ २ ॥" इति। ननु त्रिविधं त्रिविधेन प्रत्याख्यातमिथ्यात्वस्य मिथ्यादृष्टिसंसर्गेणानुमतिरूपं मिथ्यात्वं कथं न स्यादिति चेत्? न, तस्याप्यतिचाररूपत्वेन वर्जनीयत्वस्यैवोक्तत्वात्। ननु यथा पुत्रादिकृतारम्भादौ संवासानुमतिः भवति, तदुक्तम् धर्मसंग्रहवृत्तौ—"अस्य चानुमतिरप्रतिषिद्धा, अपत्यादिपरिग्रहसद्भावात् तैः हिंसाकरणे तस्यानुमतिप्राप्तेः, अन्यथा परिग्रहापरिग्रहयोरविशेषेण प्रव्रजिताप्रव्रजितयोरभेदापत्तेः" एवं स्वकुटुम्बस्य मिथ्यादृष्टेः वर्जनाशक्तत्वेन संवासानुमतिः कथं न स्यादिति चेत्? न, आरम्भिणः संवासे आरम्भक्रियायाः बलात् प्रसवात् हिंसादौ संवासानुमतिसंभवेऽपि मिथ्यात्वस्य भावरूपत्वेन तदसंभवात्, अन्यथाऽङ्गारमर्दकाचार्यशिष्यवत् संयतस्यापि मिथ्यादृष्टिनिश्राया अपि

संभवेन तत्संवासानुमतेर्दुर्वारत्वादिति। नन्वैहिकाद्यर्थं रावणकृष्णादिवत् यक्षाद्याराधने को दोषः? तत्त्ववृत्त्या अदेवादौ देवत्वबुद्ध्याऽऽराधने एव मिथ्यात्वस्य भावादिति चेत्? न, परम्परया मिथ्यात्ववृद्धिस्थिरीकरणादिप्रसङ्गेन प्रेत्य दुर्लभबोधित्वापत्तेः, तदुक्तम्—"अन्ने- सिं सत्ताणं मिच्छत्तं जो जणेइ मूढप्पा। सो तेण निमित्तेणं न लहइ बोहिं जिणाभिहिअं ॥ १ ॥" इति। रावणकृष्णाद्यालम्बनमप्यनुचितमेव, कालभेदात्, यतस्तत्समयेऽर्हद्धर्मस्येतरधर्मेभ्योऽति- शायित्वेन न मिथ्यात्ववृद्धिस्तादृशी, सम्प्रति तु स्वभावतोऽपि मिथ्यात्ववृद्धिर्दुर्निवारैवा- तो यक्षाद्याराधनमुत्सर्गतस्त्याज्यमेवेति। एवं मिथ्यात्वपरिहारपुरस्सरं सम्यक्त्वमानन्दा- दिश्रावकोपदर्शितविधिना गुरुसमक्षमालापकोच्चारणपूर्वकं प्रतिपत्तव्यमिति, तदुक्तमा- गमे—"तत्थ समणोवासओ पुव्वमेव मिच्छत्ताओ पडिक्कमइ, सम्मत्तं उवसंपज्जइ, नो से कप्पइ अज्ज- प्पभिई अन्नउत्थिए वा अन्नउत्थि अदेवयाणि वा अन्नउत्थिअपरिग्गहिअरिहंतचेइयाइं वा वंदित्तए वा णमंसित्तए वा पुव्विं अणालित्तेणं आलवित्तए वा संलवित्तए वा तेसिं असणं वा पाणं वा खाइमं वा सा- इमं वा दाणं वा अणुप्पदाउं वा णण्णत्थ रायाभिओगेण गणाभिओगेणं देवयाभिओगेणं गुरुनिग्गहेणं वि- त्तीकंतारेणं" इति, योगशास्त्रवृत्तावपि—"एवंविधं च सम्यक्त्वं विशिष्टद्रव्यक्षेत्रकालभावसामग्र्यां सत्यां गुरोः समीपे विधिना प्रतिपद्य श्रावको यथावत् पालयति, यदाह—"समणोवासओ तत्थ मिच्छ- त्ताओ पडिक्कमे। दव्वओ भावओ पुव्विं सम्मत्तं पडिवज्जए ॥१॥ न कप्पए से परतित्थिआणं तहेव तेसिं चिअ देवयाणं। परिग्गहे ताण य चेइआणं पहावणावंदणपूअणाई ॥२॥ लोआण तित्थेसु सिणाणदाणं पिंडप्पयाणं हुणणं तवं च। संकंति सोमग्गहणाइएसुं पभूअलोआण पवाहकिच्चं ॥३॥" इति। इत्थं च सम्यक्त्वाणुव्रतादिप्रतिपत्तिः सर्वापि गुरुसाक्षिकैव फलवती भवति, नान्यथा, तदुक्तं पञ्चा- शके—"गुरुमूले सुअधम्मो संविग्गो इत्तरं च इअरं वा। गिण्हइ वयाइ कोई पालेइ तहा निरइआरं ॥१॥" वृत्तिः—गुरुः सम्यग्ज्ञानक्रियायुक्तः सम्यग् धर्मशास्त्रार्थदेशको, यदाह—"धर्म्मज्ञो धर्म्मकर्त्ता च, सदा धर्म्मपरायणः। सत्त्वेभ्यो धर्म्मशास्त्रार्थ—देशको गुरुरुच्यते ॥१॥" अथवा—"जो जेण सुद्धधम्मे निओइओ संजएण गिहिणा वा। सो चेव तस्स भण्णइ धम्मगुरु धम्मदाणाओ ॥ १ ॥" तस्य गुरोराचार्यस्य मूलमन्तिकं गुरुमूलं तत्र, गुरुमूलेऽनेनान्यत्र धर्म्मश्रवणप्रतिषेधो दर्शितो, विपर्यस्तबोध- संभवात्। 'श्रुतधर्मः' आकर्णिताणुव्रतादिप्रतिपादनपराप्रवचनः, अनेन चाश्रुतागमस्य ज्ञानाभावेन व्रत- प्रतिपत्तिर्न सम्यगिति तत्प्रतिषेधो दर्शितो, यदाह—'जस्स नो इमं उवगयं भवइ इमे जीवा इमे थावरा इमे तसा तस्स नो सुपच्चक्खायं भवइ, से दुप्पच्चक्खायं भवइ, से दुप्पच्चक्खाई मोसं भासइ, नो सच्चं भासइ" त्ति, तथा स्वयमुत्प्रेक्षितशास्त्रस्यापि प्रतिषेध उक्तः, स्वयमुत्प्रेक्षणे हि सम्यक् शास्त्रानवगमेन सम्यक्प्रवृत्त्यभावात्, यदाह—"न हि भवति निर्विगोपकमनुपासितगुरुकुलस्य विज्ञानम्। प्रकटितप- श्चाद्भागं पश्य नृत्यं मयूराणाम् ॥ १ ॥" तथा ज्ञातधर्मत्वादेव संविग्नो मोक्षाभिलाषी सन् संसारभीतो वा, अन्यथाविधस्य हि व्रतप्रतिपत्तिर्न मोक्षाय स्यात्, इत्वरमल्पकालं इतरं वा बहुकालं यावज्जीव- मित्यर्थः" इति।

तच्च सम्यक्त्वं पञ्चभिः लक्षणैर्लक्ष्यते। लक्षणानि चोपशमसंवेगनिर्वेदानुकम्पास्तिक्याख्या-

नि पञ्च भवन्ति, तत्रोपशमोऽनन्तानुबन्धिनामनुदयः, स च कर्मपरिणतेः कटुकफलावलोकनात् प्रकृत्या वा, तदुक्तम्–"पगईए कम्माणं नाऊणं वा विवागमसुहं ति । अवरद्धे वि न कुप्पइ उवसमो सव्वकालं पि ॥१॥" । अन्ये तु क्रोधकण्डूविषयतृष्णोपशमः शम इत्याहुः, सम्यग्दृष्टिः श्रमणोपासकः आत्मानं क्रोधकण्ड्वा विषयतृष्णया च न तरलीक्रियेत । ननु विषयतृष्णातरलितचेतसां क्रोधवतां श्रेणिककृष्णादीनां सापराधे निरपराधे च परस्मिन् कथं शमः ? तदभावे च कथं सम्यक्त्वसंभव इति चेत् ? मैवम्, सम्यक्त्वे सति लिङ्गैरवश्यं भाव्यमिति न नियमः, लिङ्गाभावेऽपि लिङ्गिनस्तप्तायोगोलके दर्शनात्, तदुक्तम्–"लिङ्गे लिङ्गी भवत्येव लिङ्गिन्येवेतरत्पुनः । नियमस्य विपर्यासे संबन्धो लिङ्गलिङ्गिनोः ॥१॥" इति, यद्वा संज्वलनकषायोदयात् श्रेणिककृष्णादीनां क्रोधकण्डूविषयतृष्णे, संज्वलनकषायाणामपि तीव्रचतुःस्थानिकरसस्पर्धकोदयत्वेनानन्तानुबन्धिसदृशविपाको भवति । मोक्षसुखाभिलाषः संवेगः, सम्यग्दृष्टिः हि नरेन्द्रदेवेन्द्रविषयसुखानां वस्तुतो दुःखजनकत्वेन सुखाभासतयैव मन्यमानो निर्वाणसुखमेव सुखत्वेन मन्यतेऽभिलषति च, तदुक्तम्–"नरविबुहेसरसुक्खं दुक्खं चिअ भावओ अ मन्नंतो । संवेगओ न मोक्खं मोत्तूणं किंचि पत्थेइ ॥१॥" इति । भववैराग्यं निर्वेदः, सम्यग्दृष्टिर्हि दुःखदौर्गत्यगहने संसारकारागारे कर्म्मपाशकैः कदर्थ्यमानो निर्ममश्च दुःखेन निर्विण्णो भवति, तदुक्तम्–"नारयतिरिनरामरभवेसु निव्वेअओ वसइ दुक्खं । अकयपरलोगमग्गे ममत्तविसवेगरहिओ अ ॥१॥" इति । अन्ये तु संवेगनिर्वेदयोरर्थविपर्यासमाहुः–संवेगो भवविरागो निर्वेदो मोक्षाभिलाष इति । पक्षपाताभावेन दुःखितेषु दुःखप्रहाणेच्छा अनुकम्पा, पक्षपातेन तु व्याघ्रादीनामपि स्वपुत्रादावनुकम्पा विद्यत एव, सा चानुकम्पा द्रव्यभावभेदात् द्विविधा भवति, द्रव्यतो दुःखिनां यथाशक्ति दुःखप्रतीकारेण, भावतश्च धर्म्मविहीनेष्वार्द्रहृदयत्वेन भवति, तदुक्तं–"दट्ठूण पाणिनिवहं भीमे भवसागरंमि दुक्खत्तं । अविसेसओऽणुकंपं दुहा वि सामत्थओ कुणइ ॥ १ ॥" इति । अस्तीति मतिरस्येत्यास्तिकस्तस्य भावो धर्म्मो वा आस्तिक्यम्, तत्त्वान्तरश्रवणेऽपि जिनोक्ततत्त्वविषये या निराकाङ्क्षप्रतिपत्तिस्तद्वान् ह्यास्तिक इत्युच्यते, तदुक्तम्–"मण्णइ तमेव सच्चं नीसंकं जं जिणेहि पण्णत्तं । सुहपरिणामो सम्मं कंखाइविसुत्तिआ रहिओ ॥१॥" इति । यत्र च मोहवशात् क्वचिच्छङ्कोपजायते, तत्र चेयमाराध्यपादश्रीजिनभद्रगणिक्षमाश्रमणप्रतिपादिताप्रतिहतार्गला–"जत्थ य मइदुब्बलेण तह्विह आयरिअविरहओ वा वि । णेयगहणत्तणेण य नाणावरणोदएणं च ॥ १ ॥ हेऊदाहरणासंभवे असइ दट्ठु जं न बुज्झेज्जा । सव्वण्णुमयमवितहं तहा वि तं चिंतए मइमं ॥ २ ॥ अणुवकयपराणुग्गहपरायणा जं जिणा जगप्पवरा । जिअरागदोसमोहा य नन्नहा वाइणो तेणं ॥ ३ ॥" उमास्वातिवाचकमुख्यैरप्युक्तम्–"सूत्रोक्तस्यैकस्याप्यरोचनादक्षरस्य भवति नरः । मिथ्यादृष्टिः सूत्रं हि नः प्रमाणं जिनाभिहितम् ॥ १ ॥" इति । अन्ये तु शमादीनि लिङ्गान्यन्यथा व्याचक्षते–सुपरीक्षितप्रवक्तृप्रवाच्यप्रवचनतत्त्वाभिनिवेशान्मिथ्याभिनिवेशोपशमः शमः स सम्यग्दर्शनस्य लक्षणं, यो ह्यतत्त्वं विहायात्मना तत्त्वं प्रतिपन्नः स लक्ष्यते सम्यग्दर्शनवानिति । संवेगो भयः, जिनवचनानुसारिणो नरकेषु शीतोष्णादि-

सहनं संक्लिष्टासुरादिनिर्मितं परस्परोदीरितं च तिर्यक्षु भारारोपणाद्यनेकविधं मनुजेषु दारिद्र्यदौर्भाग्यादि देवेष्वपीर्ष्याविषादपरप्रेष्यत्वादि च दुःखमवलोकयतस्तन्नीरुतया तत्प्रशमोपायभूतं धर्म्ममनुष्ठातुर्लक्ष्यते—विद्यतेऽस्य सम्यग्दर्शनमिति। निर्वेदो विषयेष्वनभिष्वङ्गः, यथेह लोके एव प्राणिनां दुरन्तकामभोगाभिष्वङ्गोऽनेकोपद्रवफलः परलोकेऽप्यतिकटुकनरकतिर्यग्मनुष्यजन्मफलप्रदोऽतो न किञ्चिदनेन, उज्झितव्य एवायमित्येवंविधेन निर्वेदेनापि लक्ष्यतेऽस्त्यस्य सम्यग्दर्शनमिति। अनुकम्पा कृपा, यथा सर्व एव सत्त्वाः सुखार्थिनो दुःखप्रहाणार्थिनश्च ततो नाल्पापि पीडा मयैषां कार्येत्यनयापि सम्यग्दर्शनमस्त्यस्येति लक्ष्यते। सन्ति च जिनोपदिष्टा अतीन्द्रिया जीवपरलोकादिभावा इति परिणाम आस्तिक्यमनेनापि सम्यग्दर्शनयुक्तोऽयमिति लक्ष्यते। उक्तानि पञ्चलक्षणानि॥

अथ चतुष्प्रकारं सम्यक्त्वश्रद्धानमुच्यते—सम्यक्त्वं श्रद्धीयतेऽस्तीति प्रतिपद्यतेऽनेनेति सम्यक्त्वश्रद्धानम्, तत्र परमार्था जीवादयः पदार्थास्तेषां संस्तवः परिचयः परमार्थसंस्तवः प्रथमं श्रद्धानम्। सुज्ञातपरमार्थाः यतिजनाः आचार्यादयस्तेषां सेवनं सुज्ञातपरमार्थयतिजनसेवनं द्वितीयं श्रद्धानमिति। निह्नवानां परित्यागस्तृतीयं श्रद्धानम्। शाक्यादीनां वर्जनं चतुर्थं श्रद्धानमिति। अङ्गारमर्दकादीनां परमार्थसंस्तवादिसंभवेऽपि तात्त्विकानामेतेषामत्राधिकृतत्वेन तेषां तथाविधानामसंभवात् न व्यभिचार इति, तदुक्तम्—"परमत्थसंथवो खलु सुमुणिअपरमत्थजइजणनिसेवा। वावन्नकुदिट्ठीण य वज्जणा सम्मत्तसद्दहणा॥ १॥" इति उक्तं चतुष्प्रकारं श्रद्धानम्॥

अथ त्रिविधं लिङ्गमुच्यते—शुश्रूषा धर्म्मरागो, गुरुदेवानां यथासमाधिना वैयावृत्त्यकरणनियमः, तत्र श्रोतुमिच्छा शुश्रूषा सद्बोधावन्ध्यनिबन्धधर्मशास्त्रश्रवणवाञ्छेत्यर्थः, सा च वैदग्ध्यादिगुणवत्तरुणनरकिन्नरगायनश्रवणरागादप्यधिकतमा सम्यक्त्वे सति भवति, तदुक्तं—"यूनो वैदग्ध्यवतः कान्तायुक्तस्य कामिनोऽपि दृढम्। किन्नरगेयश्रवणादधिको धर्मश्रुतौ रागः॥१॥" इति। तथा धर्मे चारित्रलक्षणे रागो, न तु श्रुतधर्म्मे, शुश्रूषालक्षणेनैव गतार्थत्वात्, स च कर्मदोषात् तदकरणेऽपि कान्तारातीतदुर्गतबुभुक्षाक्षामकुक्षिब्राह्मणघृतवरभोजनाभिलाषादप्यतिरिक्तो भवति। तथा गुरवो धर्म्मोपदेष्टारो देवा अर्हन्तस्तेषां वैयावृत्त्ये तत्प्रतिपत्तिविश्रामणाभ्यर्चनादौ नियमोऽवश्यं कर्तव्यताङ्गीकारः, स च सम्यक्त्वे सति भवतीति धर्म्मधर्म्मिणोरभेदोपचारात् सम्यग्दृष्टेस्तानि लिङ्गानि। एभिस्त्रिभिः लिङ्गैः सम्यक्त्वं समुत्पन्नमस्तीति निश्चीयत इति भावः। वैयावृत्त्यनियमस्य तपोभेदत्वेन चारित्रांशरूपत्वेऽपि सम्यक्त्वे सत्येवावश्यंभावित्वेऽपि च नाविरतिसम्यग्दृष्टिगुणस्थानकाभावप्रयोजकतोऽङ्गाव्या, एतद्रूपचारित्रस्याल्पतमत्वेनाचारित्रतया विवक्षितत्वात्, संमूर्च्छनजानां संज्ञामात्रसद्भावेऽपि विशिष्टसंज्ञाऽभावादसंज्ञित्वव्यपदेशवत्, विरतित्वं च महाव्रताणुव्रतरूपानल्पचारित्रसद्भाव एवेष्यते, यतो न कार्षापणधनेन धनवानेकगवेन वा गोमानिति। उपशान्तमोहादिषु तु कृतकृत्यत्वादेषां साक्षादभावेऽपि फलतया सद्भावात्, यद्वा श्रावकधर्म्मापेक्षया शुश्रू-

चादीनि लिङ्गानि भवन्तीति न दोषः, तदुक्तम् पञ्चाशकवृत्तौ–"श्रावकधर्माधिकाराद्वा, यच्छ्रावकावस्थायां सम्यक्त्वं तदाश्रित्य शुश्रूषादयस्तु भवन्ति दृढमित्यभिहितमतो न दोषः" इति। प्रतिपन्नसम्यक्त्ववता श्राद्धेनादित एव नियमपूर्वं गुरुदेवानां वैयावृत्त्ये तथाऽभ्यासः कार्यः यथा श्राद्धविधावुक्तः, तथा च तद्ग्रन्थः–"पूर्वं तावन्मिथ्यात्वं त्याज्यं ततो नित्यं यथाशक्ति त्रिर्द्विः सकृद्वा वन्दनं जिनपूजा जिनदर्शनं सम्पूर्णदेववन्दनं चैत्यवन्दना च कार्येति, एवं सामग्र्यां गुरौ बृहल्लघु वा वन्दनं, सामग्र्यभावे नामग्रहणेन वन्दनं, नित्यं वर्षाचतुर्मास्यां पञ्चपर्व्यादौ वाष्टप्रकारीपूजा, यावज्जीवं नव्याम्रपक्वाम्रफलादेर्देवस्य ढौकनं विनाऽग्रहणं, नित्यं नैवेद्यपूगादेर्ढौकनं, नित्यं चातुर्मासीत्रय-वार्षिकदीपोत्सवादौ वाऽष्टमङ्गलढौकनं, नित्यं पर्वसु वा वर्षमध्ये कियद्वारं वा खाद्यस्वाद्यादिसर्ववस्तूनां देवस्य गुरोश्च प्रदानपूर्वं भोजनं, प्रतिमासं प्रतिवर्षं वा महाध्वजप्रदानादिविस्तरेण स्नात्रमहापूजारात्रि-जागरणादि, नित्यं वर्षादौ कियद्वारं चैत्यशालाप्रमार्जनसमारचनादि, प्रतिवर्षं प्रतिमासं वा चैत्येऽगरूत्क्षे-पणं दीपार्थं पुम्भिकायाः कियद्दीपघृतचन्दनखण्डादेः शालायां मुखवस्त्रजपमालाप्रोञ्छनकचवरवलकाद्यर्थं कियद्वस्त्रकम्बलोर्णादेश्च मोचनं, वर्षासु श्राद्धादीनामुपवेशनार्थं कियत्पट्टिकादेः करणं, प्रतिवर्षं सूत्रादिनापि सङ्घपूजा कियत्साधर्म्मिकवात्सल्यादि च, प्रत्यहं कियान् कायोत्सर्गः स्वाध्यायः त्रिशत्यादिगुणनं च, नित्यं दिवा नमस्कारसहितादेः रात्रौ दिवसचरिमस्य च प्रत्याख्यानस्य करणं, द्विः सकृद्वा प्रतिक्रमणादि चादौ नियमनीयानि" इति। नन्वविरतसम्यग्दृष्टीनां विरतिपरिणामाभावेन प्रत्याख्यानप्रति-क्रमणादेः करणं न युक्तम्, अविरतसम्यग्दृष्टिगुणस्थानाभावप्रसङ्गात्, नचास्मदादिबाह्य-क्रियाकृष्टानि गुणस्थानान्यायान्तीति वाच्यम्, क्षायोपशमिकभावरूपत्वात्तेषामिति चेत्? न, अभिप्रायापरिज्ञानात्, अविरतानां विरतिक्रियाकरणमागमे न निषिद्धं केवलं पारमा-र्थिकाध्यवसायरूपो विरतिपरिणामरूपः क्षायोपशमिकभावो न भवति, स च विशुद्धव्रत-ग्रहणादिक्रियाकारणं तन्माहात्म्यादेव तद्ग्रहणानन्तरमसन्नप्युपजायते सँश्च परिवर्धते, नतु प्रतिपातशीलो भवति। अत एवास्मदादिबाह्यक्रियाकृष्टानि गुणस्थानानि नायान्तीति बुद्ध्या सम्यक्क्रियायां नोदासितव्यम्, प्रयत्नेन तेषामपि सुलभत्वात्, उपायाधीनत्वादुपेयस्य। न चैतत् स्वमनीषिकया विजृम्भितम्, तथा चाहुः श्रीमन्तो हरिभद्रसूरिपादाः–"गहणा-दुवरि पयत्ता होइ असन्तो वि विरइपरिणामो। अकुसलकम्मोदयओ पडइ अवण्णाइ लिंगमिह ॥१॥ तम्हा णिच्चसईए बहुमाणेणं च अहिगयगुणम्मि। पडिवक्खदुगं छाए परिणइ आलोअणेणं च ॥२॥ तित्थंकरभत्तीए सुसाहुजणपज्जुवासणाए अ। उत्तरगुणसद्धाए एत्थ सया होइ जइअव्वं ॥३॥ एवमसंतो वि इमो जायइ जाओ वि पडइ न कया वि। ता इत्थं बुद्धिमया अप्पमाओ होइ कायव्वो॥४॥" इति। एवं च विरतेरभ्यासेनाविरतिर्जीयते, अभ्यासादेव सर्वक्रियासु कौशलं प्राप्नोति, अनु-भवसिद्धं चैतत्सर्वेषां लिखनपठनसंख्यानगायननृत्यादिसर्वकलाविज्ञानेषु, तदुक्तं–"अभ्या-सेन क्रियाः सर्वा अभ्यासात्सकलाः कलाः। अभ्यासात् ध्यानमौनादि किमभ्यासस्य दुष्करम् ॥१॥" निरन्तरं विरतिपरिणामाभ्यासे च प्रेत्यापि तदनुवृत्तिः स्यात्, तदुक्तं–"जं अब्भसेइ जीवो गुणं च दोसं च एत्थ जम्मम्मि। तं पावइ परलोए तेण य अब्भासजोएणं ॥१॥" इति। तस्माद-

भ्यासेन तत्परिणामदार्ढ्ये यथाशक्ति द्वादशव्रतस्वीकारः ततस्तस्य सर्वविरतिरपि सुलभा स्यादित्युक्तानि लिङ्गानि ॥

अथ विनयः उच्यते तत्रार्हत्सिद्धचैत्याचार्योपाध्यायसाधुधर्मश्रुतप्रवचनदर्शनेषु भक्तिपूजावर्णाशातनापरिहाररूपो विनयो दशप्रकारो भवति, तत्र भक्तिः अभिमुखगमनासनप्रदानपर्युपास्त्यञ्जलिबन्धाद्या, पूजा सत्काररूपा, वर्णः प्रशंसा तज्जननमुद्भासनमवर्णवादस्य च वर्जनम्, प्रतीपवर्त्तनमाशातना तस्याः परिहारः। एषो दर्शनविनयो दशस्थानविषयत्वात् दशप्रकारः, सम्यक्त्वे सत्यस्य भावात् सम्यक्त्वविनय इत्युक्तो विनयः ॥

अथ शुद्धिरुच्यते—तत्र जिनं जिनमतं जिनमतस्थितांश्च साध्वादीन् मुक्त्वा शेषमेकान्तग्रस्तं त्रिविष्टपं कचवरप्रायमसारमिति चिन्तया सम्यक्त्वस्य विशोध्यमानत्वादेतास्तिस्रः शुद्धय इति, तदुक्तं—"मोत्तूण जिणं जिणमयं जिणमयठिए मोत्तुं। संसारकत्तवारं चिंतिज्जंतं जगं सेसं ॥१॥" इति, उक्तास्तिस्रः शुद्धयः ॥

अथ दूषणपञ्चकमुच्यते—तत्र शङ्कनं शङ्का सन्देहः सा च सर्वविषया देशविषया च। सर्वविषया—अस्ति नास्ति वा धर्म्म इत्यादि, देशशङ्कैकैकवस्तुधर्म्मगोचरा, यथा 'अस्ति जीवः केवलं सर्वगतोऽसर्वगतो वा' 'सप्रदेशोऽप्रदेशो वा' 'पृथ्व्यादीनां कथं सजीवत्वं ?' 'निगोदादयो वा कथं घटन्ते ?' इत्यादि। इयं च द्विधाऽपि भगवदर्हत्प्रणीतप्रवचनेषु अप्रत्ययरूपा सम्यक्त्वं दूषयति। काङ्क्षणं काङ्क्षा अन्यान्यदर्शनजिघृक्षा, सापि सर्वविषया देशविषया च। सर्वविषया सर्वपाखण्डिधर्म्माकाङ्क्षारूपा, देशविषया त्वेकादिदर्शनविषया यथा 'सुगतेन भिक्षुणामक्लेशकरो धर्म्म उपदिष्टः स्नानान्नपानाच्छादनशयनीयादिषु सुखानुभवद्वारेण, यदाह—"मृद्वी शय्या प्रातरुत्थाय पेया मध्ये भक्तं पानकं चापराह्णे। द्राक्षाखण्डं शर्कराचार्द्धरात्रे मोक्षश्चान्ते शाक्यसिंहेन दृष्टः ॥१॥" इति, एतदपि घटमानकमेवेति' तथा 'परिव्राड्भौतब्राह्मणादयो विषयानुपभुञ्जानाः स्नानादिपरायणाश्चैव परलोकेऽप्यभीष्टसुखेन युज्यन्त इति साधीयानेषोऽपि धर्म्म' इत्यादि, दृश्यन्ते हि मुग्धबुद्धयः स्थलनिम्नक्षेत्रभूबीजवापककर्षकवत् धर्मार्थितया सर्वदर्शनान्याराधयन्तः, एवं च काङ्क्षापि परमार्थतो भगवदर्हत्प्रणीतागामानाश्वासरूपा सम्यक्त्वं दूषयति। विचिकित्सा चित्तविप्लवः फलं प्रति सन्देहः इत्यर्थः, सा च 'सत्यपि युक्त्यागमोपपन्ने जिनधर्मेऽस्य महतस्तपः क्लेशस्य सिकताकणकवलवन्निःस्वादस्यायत्यां का फलसम्पद्भवित्री ? अथ क्लेशमात्रमेवेदं निर्जराफलविकलमिति, उभयथापि हि क्रिया दृश्यन्ते सफला निष्फलाश्च कृषीवलादीनाम्, अत इयमपि तथा संभाव्यते !' इति विचिकित्सापि भगवद्वचनानाश्वासरूपत्वात् सम्यक्त्वस्य दोषः। ननु शङ्काविचिकित्सयोः कः प्रतिविशेष इति चेत् ? शृणु, सकलासकलपदार्थभाक्त्वेन द्रव्यगुणविषया शङ्का, विचिकित्सा तु क्रियाविषयैव यद्वा विचिकित्सा निन्दा—सा च सदाचारमुनिविषया, यथाऽ'स्नानेन प्रस्वेदजलक्लिन्नमलत्वात् दुर्गन्धिशरीरा एत' इति, 'को दोषः स्याद्यदि प्रासुकवारिणाऽङ्गक्षालनं कुर्वीरन्निति !' इयमपि तत्त्वतो भगवद्धर्मानाश्वा-

सरूपत्वात् सम्यक्त्वदोषः । मिथ्या विपरीता दृष्टिर्येषां ते मिथ्यादृष्टयस्तेषां प्रशंसा, सा च देशविषया सर्वविषया च, तत्र देशविषया–'इदमेव साङ्ख्यवचनं सुगतवचनं वा सम्यगिति' प्रशंसा, सापि सम्यक्त्वं दूषयति । सर्वविषया च–'सर्वाणि कापिलादीनि दर्शनानि युक्तियुक्तानीति' मध्यस्थसाराः स्तुतयः सम्यक्त्वस्य दूषणम् । मिथ्यादृष्टिभिरेवात्र संवासात् परस्परालापादिजनितः परिचयः संस्तवः, एकत्र वासे हि तत्प्रक्रियाश्रवणात् तत्क्रियादर्शनाच्च दृढसम्यक्त्ववतोऽपि दृष्टिभेदः संभाव्यते, किं पुनः मन्दबुद्धेः नवधर्मस्येति संस्तवोऽपि सम्यक्त्वस्य दूषणमित्युक्तानि पञ्च दूषणानि ॥

सम्यक्त्वस्य प्रभावकभेदेनाष्टौ प्रभावनाः भवन्ति । तत्र प्रवचनं द्वादशाङ्गं गणिपिटकं तदस्यास्तीति प्रावचनी प्रथमप्रभावकः । आक्षेपणीविक्षेपणीसंवेगजननीनिर्वेदजननीलक्षणां चतुर्विधां जनितजनमनःप्रमोदां धर्म्मकथां कथयति स धर्म्मकथी द्वितीयप्रभावकः । वादिप्रतिवादिसभ्यसभापतिरूपायां चतुरङ्गायां परिषदि प्रतिपक्षक्षेपपूर्वकस्वपक्षस्थापनार्थमवश्यं वदतीति वादी तृतीयः प्रभावकः । त्रैकालिकलाभालाभविषयं शास्त्रं वेत्त्यधीते वा स नैमित्तिकः चतुर्थः प्रभावकः । तपोऽष्टमाद्यस्यास्तीति तपस्वी पञ्चमः प्रभावकः । प्रज्ञप्त्यादिर्विद्यास्यास्तीति विद्यावान् षष्ठः प्रभावकः । अञ्जनपादलेपतिलकगुटिकाकर्षणवैक्रियत्वप्रभृतयः सिद्धयस्ताभ्यः सिद्ध्यति स्म इति सिद्धः सप्तमः प्रभावकः । कवते गद्यपद्यादिभिः प्रबन्धैः वर्णनां करोतीति कविरष्टमः प्रभावकः । एते च प्रावचन्यादयोऽष्टौ प्रभवतो भगवच्छासनस्य यथायथं देशकालाद्यौचित्येन साहाय्यकरणात् प्रभावकाः,प्रभवन्तं स्वतः प्रकाशस्वभावमेव प्रेरयन्तीति व्युत्पत्तेस्तेषां कर्म्म प्रभावना इति, उक्ताः प्रभावनाः ॥

अथ सम्यक्त्वस्य पञ्च भूषणान्युच्यन्ते–तत्र स्थैर्यं जिनधर्म्मं प्रति चलितचित्तस्य परस्य स्थिरत्वापादनं स्वयं वा परतीर्थिकर्द्धिदर्शनेऽपि जिनशासनं प्रति निष्प्रकम्पता प्रथमं भूषणं । प्रभवति जैनेन्द्रशासनं तस्य प्रभवतः प्रयोजकत्वं प्रभावना, सा चाष्टधा प्रागभिहितैव, पुनरुपादानं तु स्वपरोपकारकत्वेन तीर्थकरनामकर्म्मनिबन्धनत्वेन च प्राधान्यख्यापनार्थं, द्वितीयं भूषणम् । भक्तिः प्रवचने विनयवैयावृत्त्यरूपा प्रतिपत्तिः, सम्यग्दर्शनज्ञानचारित्रादिगुणाधिकेष्वभ्युत्थानमभियानं शिरस्यञ्जलिकरणं स्वयमासनढौकनमासनाभिग्रहो वन्दना पर्युपासना अनुगमनं चेत्यष्टविधकर्म्मविनयादष्टविधः उपचारविनयः, व्यावृत्तस्य भावः कर्म्म वा वैयावृत्त्यम्, तच्चाचार्योपाध्यायतपस्विशैक्षकग्लानकुलगणसङ्घसाधुसाधर्मिकेषु दशस्वन्नपानवस्त्रपात्रप्रतिश्रयपीठफलकसंस्तारकादिभिः धर्म्मसाधनैरुपग्रहः, शुश्रूषा भैषजक्रियाकान्तारविषमदुर्गोपसर्गेष्वभ्युपपत्तिश्चेति तृतीयं भूषणम् । जिनशासने कौशलं नैपुण्यम्, ततो हि व्यवहितोप्यर्थो विषयीक्रियते, यथानार्यदेशवर्ती आर्द्रकुमारः कौशलादभयकुमारेण प्रतिबोधित इति चतुर्थं भूषणम् । तथा तीर्थं नद्यादेरिव संसारस्य तरणे सुखावतारो मार्गः, तच्च द्रव्यभावभेदात् द्विविधम्, द्रव्यतस्तीर्थकृतां जन्मदीक्षाज्ञाननिर्वाणस्थानम्, तदुक्तम्–"जम्मं दिक्खा नाणं तित्थगराणं महानुभा-

वाणं । जत्थ य किर निव्वाणं आगाढं दंसणं होइ ॥१॥" इति । भावतीर्थं तु ज्ञानदर्शनचारित्राधारः श्रमणसङ्घः प्रथमगणधरो वा, यदाह—"तित्थं भन्ते तित्थं तित्थयरे तित्थं, गोयमा ! अरिहा ताव नियमा तित्थकरे तित्थं पुण चउव्वण्णे समणसंघे पढमगणहरे वा" इति, तस्य सेवेति पञ्चमं भूषणमित्युक्तानि भूषणानि ॥

षड्विधा यतनोच्यते—परिव्राजकभिक्षुभौतिकाद्यन्यतीर्थिकगुरूणां रुद्रविष्णुयक्षाद्यन्यतीर्थिकदेवानां दिगम्बरादिगृहीतजिनप्रतिमानां महाकालादीनां च वन्दनं नमस्करणं च न कर्तव्यम्, मिथ्यात्वस्थिरीकरणात्, तत्र वन्दनं शिरसाभिवन्दनम्, नमस्करणं प्रणामपूर्वकं प्रशस्तध्वनिभिर्गुणोत्कीर्त्तनमिति यतनाद्विकम् । तथाऽन्यतीर्थिकैः पूर्वमनालप्तः सन्नैवालपति, नापि संलपति, तत्रोद्भाषणमालापः, मुहुर्भाषणं संलापः, तत्संभाषणे हि तैः सह परिचयात् प्रतिक्रियाश्रवणदर्शनादिभिः मिथ्यात्वप्रसक्तिरपि स्यादेवेति तृतीया चतुर्थी च यतना । तथाऽनुकम्पामन्तरेणान्यतीर्थिकेभ्योऽशनादिकं न ददाति, अनुकम्पायाः कुत्राप्यनिषिद्धत्वात्, तदुक्तम्—"सव्वेहिं पि जिणेहिं दुज्जयजिअरागदोसमोहेहिं । सत्ताणुकम्पणट्ठा दाणं न कहिं वि पडिसिद्धं ॥१॥" इति पञ्चमी यतना । तथा परतीर्थिकदेवानां तत्प्रतिगृहीतजिनप्रतिमानां च पूजाकृते गन्धपुष्पादिकं नैव प्रेष्यति, आदिशब्दात् विनयवैयावृत्त्यपात्रस्नानादिकमिति षष्ठी यतना । एताभिः षड्भिर्यतनाभिः सम्यक्त्वं नातिक्रामतीति उक्ता यतना ॥

अथाकारा उच्यन्ते—अभियोजनमभियोगोऽनिच्छया प्रवर्तनम्, तत्र राजाभियोगः नृपादेरभियोगः । गणः स्वजनादिसमुदायस्तस्याभियोगः गणाभियोगः, बलं हठप्रयोगस्तेन योगो बलाभियोगः । सुरस्य कुलदेवतादेरभियोगः सुराभियोगः । कान्तारमरण्यं तत्र वृत्तिः वर्तनं निर्वाहः कान्तरवृत्तिः, यद्वा कान्तारमपि बाधाहेतुत्वादिह बाधात्वेन विवक्षितं तेन कारणेन बाधया वृत्तिः प्राणवर्तनरूपा कान्तारवृत्तिः कष्टेन निर्वाह इति यावत् । गुरवः माता पिता कलाचार्यः तेषां ज्ञातयः धर्म्मोपदेष्टारो गुरुवर्गः, तदुक्तं—"माता पिता कलाचार्य एतेषां ज्ञातयस्तथा । वृद्धा धर्म्मोपदेष्टारो गुरुवर्गस्सतां मतः ॥ १ ॥" इति तेषां निग्रहः निर्बन्धः गुरुनिग्रहः । एता जिनप्रवचने छिण्डिका अपवादरूपा भवन्ति, इदमुक्तं भवति—स्वीकृतसम्यक्त्वस्य परतीर्थिकवन्दनादिकं निषिद्धं तद्यदि राजाभियोगादिभिः कारणैः भक्तिवियुक्तो द्रव्यतः समाचरन्नपि सम्यक्त्वं नाभिचरतीति उक्ताः षडाकाराः ॥

अथ षड् भावना उच्यन्ते—तत्र मूलमिव मूलं, यथा मूलरहितो वृक्षो वायुना हतः तत्क्षणमेव निपतति, तद्वत् सम्यक्त्वमूलरहितो देशविरतिसर्वविरतिरूपश्चारित्रधर्म्मवृक्षः कुतीर्थिकमतान्दोलितो निपततीति प्रथमा भावना । तथा द्वारमिव द्वारं प्रवेशमुखमिति भावः, यथाऽकृतद्वारं प्राकारवलयवेष्टितमपि नगरमनगरं भवति, जनप्रवेशननिर्गमनाभावात्, एवं धर्म्मपुरमपि सम्यक्त्वद्वारशून्यमशक्याधिगमं स्यादिति द्वितीया भावना । तथा प्रतिष्ठते प्रासादोऽस्मिन्निति प्रतिष्ठानं पीठं ततः प्रतिष्ठानमिव प्रतिष्ठानं, यथा पृथ्वीतलगतगर्तापूरकरहितः प्रासादः सुदृढो न भवति तथा धर्म्मप्रासादोऽपि सम्यक्त्वरूपप्रति-

ष्ठानं विना निश्चलो न भवतीति तृतीया भावना । तथाऽऽधारः, यथा धरातलं विना निरालम्बनं विश्वं न भवति तथा धर्म्मविष्टपमपि सम्यक्त्वलक्षणाधारव्यतिरेकेण न तिष्ठेदिति चतुर्थी भावना । तथा भाजनं पात्रमित्यर्थः, यथा हि पात्रविशेषं विना क्षीरादिवस्तु विनश्यति एवं धर्म्मवस्त्वपि सम्यक्त्वभाजनं विनेति पञ्चमी भावना । तथा निधिः, यथा हि निधिव्यतिरेकेण महार्हमणिमौक्तिककनकादि द्रव्यं न प्राप्यते तथा सम्यक्त्वनिधानमन्तरा चारित्रधर्म्मरत्नमपीति षष्ठी भावनेत्युक्ता भावना ॥

अथ षट्स्थानान्युच्यन्ते–तत्र जीवोऽस्तीति प्रथमम्, एतेन नास्तिकदर्शनं निराकृतम् । स चोत्पादककारणाभावादुत्पत्तिविनाशरहित इति द्वितीयं स्थानम्, एतेन बौद्धमतो निराकृतः । मिथ्यात्वाविरतिकषायादिबन्धहेतुभिः करोति तत्तत्कर्म्माणि निवर्तयतीति तृतीयं स्थानम्, एतेन कपिलकल्पनाप्रतिक्षेपः कृतः । कृतं च कर्म्म वेद्यते, "सव्वं पएसतया भुज्जइ" इति वचनात्, एतेन सर्वथाऽऽभोक्तृजीववादी दुर्नयो निराकृत इति चतुर्थं स्थानम् । जीवस्य मोक्षो विद्यते, स च जीवस्य रागद्वेषमदमोहजन्मजरारोगादिदुःखक्षयरूपोऽवस्थाविशेषः, एतेन च ये सौगतविशेषाः प्रदीपस्य निर्वाणकल्पं ध्वंसरूपं निर्वाणं मन्यन्ते, तदुक्तं तन्मते–"दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् । दिशं न काञ्चिद्विदिशं न काञ्चित्, स्नेहक्षयात् केवलमेति शान्तिम्॥१॥" इति । तेऽपि निरस्ताः, दीक्षादिप्रयासवैयर्थ्यात्, दृष्टान्तमपीन्धनध्वंसकल्पत्वेन न युक्तमिति, युक्तिविस्तरस्तु ग्रन्थान्तरादवसेय इति पञ्चमं स्थानम् । अस्ति च मोक्षोपायो ज्ञानदर्शनचारित्राणां मुक्तिसाधकत्वेन घटमानत्वादिति षष्ठं स्थानम्, अनेन मोक्षोपायाभावप्रतिपादकदुर्नयस्तिरस्कृतः । एतानि षट् स्थानानि सम्यक्त्वे सति भवन्त्येवेति । उक्तमविरतसम्यग्दृष्टिगुणस्थानम् ॥

तथा सर्वसावद्ययोगस्य देशे एकव्रतविषये स्थूलसावद्ययोगादौ विरतं विरतिर्यस्यासौ देशविरतः । अस्य पुनः सर्वसावद्ययोगस्य विरतिर्नास्ति प्रत्याख्यानावरणकषायोदयात्, तत्र सर्वविरतिरूपं प्रत्याख्यानमावृण्वन्तीति प्रत्याख्यानावरणाः, तदुक्तं च–"सम्मदंसणसहिओ गिण्हंतो विरइमप्पसत्तीए । एगव्वयाइचरिमो अणुमइमेत्तो देसजई ॥१॥" इति देशविरतस्य गुणस्थानं देशविरतिगुणस्थानम् । एतद्गुणस्थानं सयोगिकेवलिगुणस्थानं च जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतो देशोनपूर्वकोटिं यावत् तिष्ठति, अन्तिमं तु पञ्चह्रस्वाक्षरोच्चारकालप्रमाणं शेषाण्यष्टावन्तर्मुहूर्त्तकालप्रमाणानि भवन्ति, केषाञ्चिन्मते तु प्रमत्ताप्रमत्ते देशोनपूर्वकोटिके, तथोक्तं भगवतीसूत्रे–"पमत्तसंजयस्स णं पमत्तसंजए वट्टमाणस्स सव्वावि णं पमत्ताद्धा कालओ केवचिरं होइ ? मंडिआ ! एगं जीवं पडुच्च जहण्णेणं एगं समयं उक्कोसेणं देसूणा पुव्वकोडी । णाणाजीवे पडुच्च सव्वद्धा । अस्या वृत्तिः–'जहण्णेण एक्कं समयं ति' कथं ? उच्यते, प्रमत्तसंयतप्रतिपत्तिसमयसमनन्तरमेव मरणात् । 'देसूणपुव्वकोडि त्ति' किल प्रत्येकमन्तर्मुहूर्त्तप्रमाणे एव प्रमत्ताप्रमत्तगुणस्थाने, ते च पर्यायेण जायमाने देशोनपूर्वकोटिं यावदुत्कर्षेण भवतः । महान्ति च अप्रमत्तापेक्षया प्रमत्तान्तर्मुहूर्त्तानि कल्प्यन्ते । एवं च अन्तर्मुहूर्त्तप्रमाणानां प्रमत्ताद्धानां सर्वासां मीलने

देशोनपूर्वकोटिकालमानं भवति । अन्ये चाहुः अष्टवर्षोनां पूर्वकोटिं यावदुत्कर्षतः प्रमत्तता स्यात् । एवं अप्रमत्तसूत्रमपि, नवरं 'जहण्णेण अंतमुहुत्तं ति' किल अप्रमत्ताद्धायां वर्तमानस्यान्तर्मुहूर्त्तमध्ये मृत्युः न भवतीति । चूर्णिकारमतं तु, प्रमत्तसंयतवर्जः सर्वोऽपि सर्वविरतोऽप्रमत्त उच्यते, प्रमादाभावात्, स चोपशमश्रेणिं प्रतिपद्यमानः मुहूर्त्ताभ्यन्तरे कालं कुर्वन् जघन्यकालो लभ्यत इति, देशोनपूर्वकोटी तु केवलिनमाश्रित्य" इति ॥

तथा प्रमाद्यति स्म संयमयोगेषु सीदति स्म प्रमत्तः, यद्वा प्रमत्तमस्यास्तीति प्रमत्तः प्रमादवान्, प्रमदनं प्रमादः स च मदिराविषयकषायनिद्राविकथानामन्यतमः सर्वे वा, प्रमत्तश्चासौ संयतश्च प्रमत्तसंयतः, तस्य गुणस्थानं प्रमत्तसंयतगुणस्थानम्, विशुद्धाविशुद्धिप्रकर्षापकर्षकृतस्वरूपभेदम्, तथाहि—देशविरतिगुणस्थानापेक्षया प्रमत्तसंयतस्य विशुद्धिप्रकर्षोऽविशुद्ध्यपकर्षश्च, अप्रमत्तगुणस्थानापेक्षया तु विपर्ययः, एवं शेषगुणस्थानेष्वपि वाच्यम् ॥

तथा न प्रमत्तोऽप्रमत्तः, यद्वा नास्ति प्रमत्तमस्यासावाप्रमत्तः, स चासौ संयतश्चाप्रमत्तसंयतः, तस्य गुणस्थानमप्रमत्तसंयतगुणस्थानम् ॥

तथाऽपूर्वमभिनवं प्रथममित्यर्थः । करणं स्थितिघातरसघातगुणश्रेणिगुणसंक्रमाभिनवस्थितिबन्धानां पञ्चानामर्थानां निवर्त्तनं यस्यासावपूर्वकरणः, तस्य गुणस्थानमपूर्वकरणगुणस्थानम् । स्थितिघातादयो यथा—बृहत्प्रमाणायाः स्थितेरग्रिमभागादुत्कृष्टतः प्रभूतसागरोपमशतप्रमाणं जघन्यतः पल्योपमसंख्येयभागमात्रमपवर्त्तनाकरणेन घातयति तद्दलिकं च या स्थितिरधो न खण्डयिष्यति तत्र प्रक्षिपति, अन्तर्मुहूर्त्तेन कालेन च तत्स्थितिखण्डमुत्कीर्यते । ततः पुनरप्यधस्तात् पल्योपमसंख्येयभागमात्रं स्थितिखण्डमन्तर्मुहूर्त्तेन कालेन घातयति, प्रागुक्तरीत्यैव च निक्षिपति, एवमपूर्वकरणाद्धायां प्रभूतानि स्थितिखण्डसहस्राणि व्यतिक्रामन्ति । अपूर्वकरणाद्यसमये यत्स्थितिकर्म्मासीत् तत्तस्यैव चरमसमये संख्येयगुणहीनं जातम् । रसस्यापि प्रचुरीभूतस्य सतोऽपवर्तनाकरणेनानन्ततमं भागं मुक्त्वा शेषाननन्तानुभागभागान् अन्तर्मुहूर्त्तेन कालेन घातयति, एवमेकस्मिन् स्थितिखण्डेऽनेकान्यनुभागखण्डसहस्राणि व्यतिक्रामन्ति, तेषां स्थितिखण्डसहस्रैश्चापूर्वकरणं परिसमापयति । स्थितिघातरसघातौ च पूर्वगुणस्थानेषु विशुद्धेरल्पत्वादल्पावेव कृतवान्, अत्र पूर्वविशुद्धेः प्रकृष्टत्वात् बृहत्प्रमाणतयाऽपूर्वाविमौ करोति, तथा विशुद्धिवशादुपरितनस्थितेरपवर्त्तनाकरणेनावतारितस्य दलिकस्योदयक्षणादुपरि शीघ्रतरक्षपणाय प्रतिसमयमसंख्येयगुणवृद्ध्यान्तर्मुहूर्त्तप्रमाणं गुणश्रेणिं विरचयति, एतां च पूर्वगुणस्थानेष्वविशुद्धत्वात् कालतो द्राघीयसीं दलिकरचनामाश्रित्याप्रथीयसीमल्पदलिकस्यापवर्त्तनात् विरचितवान्, इह तु तामेव विशुद्धत्वादपूर्वां कालतो ह्रस्वतरां दलिकरचनामाश्रित्य पुनः पृथुतरां बहुतरदलिकस्यापवर्त्तनाद्विरचयतीति । तथा कर्मणां स्थितिमपि प्रागविशुद्धत्वात् द्राघीयसीं बद्धवान्, अत्र तु विशुद्धत्वात् लघीयसीं बध्नाति । तथाऽबद्ध्यमानाशुभप्रकृतीनां बध्यमानप्रकृतिषु प्रतिक्षणमसंख्येयगुणवृद्ध्या विशुद्धिवशात् दलिकस्य नयनरूपो यो गुणसंक्रमः तमप्य-

साविहापूर्वं करोति । अयं चापूर्वकरणो द्विविधः, क्षपणार्हत्वात् क्षपक उपशमनार्हत्वादुपशामको राज्यार्हराजकुमारवत्, न पुनरसौ क्षपयत्युपशमयति वा । एतद्गुणस्थानप्रतिपन्नानां कालत्रयवर्त्तिनां नानाजीवानपेक्ष्य सामान्यतोऽसंख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि भवन्ति, तथाहि–अपूर्वकरणमन्तर्मुहूर्त्तप्रमाणं, तत्र प्रथमसमये ये प्रतिपन्नाः प्रतिपद्यन्ते प्रतिपत्स्यन्ते च तदपेक्षया जघन्यादीन्युत्कृष्टान्तान्यध्यवसायस्थानान्यसंख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति । बहूनामेकाध्यवसायस्थानवर्त्तित्वात्, नानन्तानीति । एवं द्वितीयादिसमयेष्वपि विशेषाधिकानि विशेषाधिकानि तावद्वाच्यानि यावच्चरमसमयः, स्थाप्यमानानि चैतानि विषमचतुरस्रं क्षेत्रमभिव्याप्नुवन्ति । प्रथमसमयजघन्याध्यवसायस्थानात् प्रथमसमयोत्कृष्टमध्यवसायस्थानमनन्तगुणविशुद्धम्, तस्माच्च द्वितीयसमयजघन्यमनन्तगुणविशुद्धम्, ततोऽपि द्वितीयसमयजघन्यात्तदुत्कृष्टमनन्तगुणविशुद्धं, तस्माच्च तृतीयसमयजघन्यमनन्तगुणविशुद्धं, ततोऽपि तदुत्कृष्टमनन्तगुणविशुद्धमित्येवं तावन्नेयं यावद्द्विचरमसमयोत्कृष्टाच्चरमसमयजघन्यमनन्तगुणविशुद्धं, ततोऽपि तदुत्कृष्टमनन्तगुणविशुद्धमिति । अमूनि प्रथमसमयगतान्यपि चाध्यवसायस्थानानि विशुद्ध्यपेक्षया षट्स्थानपतितानि भवन्ति । युगपदेतद्गुणस्थानप्रतिपन्नानां परस्परमध्यवसायस्थानानां व्यावृत्तिलक्षणा निवृत्तिरप्यस्तीति निवृत्तिगुणस्थानकमप्येतदुच्यते ॥

तथा युगपद् यद्गुणस्थानप्रतिपन्नानां बहूनामपि जीवानामन्योऽन्याध्यवसायस्थानस्य व्यावृत्तिर्निवृत्तिर्नास्ति तदनिवृत्तिः । सम्परैति पर्यटति संसारमनेनेति सम्परायः कषायोदयः, सूक्ष्मकिट्टिकृतसम्परायापेक्षया बादरः स्थूरः सम्परायो यस्य स बादरसम्परायः । अनिवृत्तिश्चासौ बादरसम्परायश्च अनिवृत्तिबादरसम्परायः, तस्य गुणस्थानमनिवृत्तिबादरगुणस्थानम् । एतद्गुणस्थानप्रतिपन्नानां प्रतिपद्यमानानां प्रतिपत्स्यमानानां च प्रथमसमयवर्तिनां सर्वेषां जीवानामेकमेवाध्यवसायस्थानमपूर्वकरणचरमसमयोत्कृष्टविशुद्धितोऽनन्तगुणविशुद्धमनिवृत्तिबादरसम्परायद्वितीयसमयविशुद्धितोऽनन्तगुणहीनं च भवति । तथा प्रथमसमयविशुद्धाध्यवसायस्थानात् द्वितीयसमयेऽपि कालत्रयवर्तिनां सर्वेषां जीवानामनन्तगुणविशुद्धमेकमेवाध्यवसायस्थानं भवति, एवं तावद्वाच्यं यावदनिवृत्तिकरणचरमसमयः । स चानिवृत्तिबादरोऽपि द्विधा क्षपक उपशामकश्च ॥

तथा सूक्ष्मः सम्परायः किट्टीकृतलोभकषायोदयरूपो यस्य सोऽयं सूक्ष्मसम्परायः, सोऽपि द्विविधः क्षपकः उपशामकश्च, तस्य गुणस्थानं सूक्ष्मसम्परायगुणस्थानम् ॥

तथा छाद्यते केवलज्ञानं केवलदर्शनं चात्मनोऽनेनेतिच्छद्म घातिकर्मचतुष्कोदयः, तस्मिन् सति केवलस्यानुत्पादात्, तदपगमानन्तरं चोत्पादात् । छद्मनि तिष्ठतीति छद्मस्थः स च सरागोऽपि भवतीत्यतस्तद्व्यवच्छेदार्थं वीतरागग्रहणं । वीतः विगतो रागो मायालोभकषायरूपो यस्य स वीतरागः, स चासौ छद्मस्थश्च वीतरागच्छद्मस्थः, स च क्षीणरागोऽपि भवति तद्व्यवच्छेदार्थमुपशान्तकषायग्रहणं, कष्यन्ति कषन्ते च परस्परमस्मिन् प्राणिन इति

कषः संसारः, कषमयन्ते गच्छन्त्येभिर्जन्तव इति कषायाः क्रोधादयः, सत्तायां विद्यमाना अपि उपशान्ताः–उपशमिताः संक्रमोद्वर्तनादिकरणोदयायोग्यत्वेन व्यवस्थापिताः कषाया येन स उपशान्तकषायः, स चासौ वीतरागच्छद्मस्थश्चोपशान्तकषायवीतरागच्छद्मस्थस्तस्य गुणस्थानमुपशान्तकषायवीतरागच्छद्मस्थगुणस्थानम्। कतिपयानां कषायाणामविरतसम्यग्दृष्ट्यादावुपशान्तत्वलाभेनोपशान्तकषायव्यपदेशः संभवत्यतस्तद्व्यवच्छेदाय वीतरागग्रहणम्। उपशान्तकषायवीतराग इत्येतावतापीष्टसिद्धौ छद्मस्थग्रहणं स्वरूपकथनार्थम्। अस्मिंश्च गुणस्थाने मोहनीयस्याष्टाविंशतिरपि प्रकृतय उपशान्ता भवन्ति ॥

तथा क्षीणा अभावमापन्नाः कषायाः यस्य स क्षीणकषायः, वीतरागश्चासौ छद्मस्थश्च वीतरागच्छद्मस्थः, क्षीणकषायश्चासौ वीतरागच्छद्मस्थश्च क्षीणकषायवीतरागच्छद्मस्थस्तस्य गुणस्थानं क्षीणकषायवीतरागच्छद्मस्थगुणस्थानम्। अविरतक्षायिकसम्यग्दृष्ट्यादावतिव्याप्तिवारणाय वीतरागस्य ग्रहणं कृतम्, सर्वज्ञे भगवत्यतिव्याप्तिवारणायच्छद्मस्थस्य निवेशः, उपशान्तकषायवीतरागच्छद्मस्थगुणस्थानेऽतिव्याप्तिवारणाय क्षीणकषायग्रहणम्।

अत्र प्रस्तावात् श्रेणिद्वयमुच्यते–तत्रादावुपशमश्रेणिरभिधीयते, तत्रानन्तानुबन्धिचतुष्कं मिथ्यात्वं मिश्रं सम्यक्त्वं चेत्येताः सप्त प्रकृतयोऽविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तापूर्वकरणेषु यथार्हमुपशान्ता लभ्यन्ते। अयं भावः, अपूर्वकरणवर्जेषु शेषेष्वेतत्सप्तकमध्ये यथार्हं काश्चित्प्रकृतय उपशान्ताः काश्चित्तूपशम्यमानाः प्राप्यन्तेऽत एतेऽविरतादयोऽपूर्वकरणवर्जा यथायोगमुपशामका अपि भण्यन्ते। अपूर्वकरणे त्वेता अवश्यमुपशान्ता एव स्युस्तेनोपशान्तसप्तक एवोच्यते। तत्रादावनन्तानुबन्धिनामुपशमना प्रपञ्च्यते–इह किलाविरतदेशविरतप्रमत्ताप्रमत्तानामन्यतमोऽन्यतमे योगे वर्तमानोऽन्यतमशुभलेश्यायां वर्त्तमानः साकारोपयोगोपयुक्तोऽन्तःसागरोपमकोटिकोटिस्थितिसत्कर्मा करणकालात्पूर्वमवदायमानचित्तसन्ततिः सन् परावर्त्तमानशुभप्रकृतीनां बन्धं कुर्वन् प्रतिसमयमशुभानां प्रकृतीनामनन्तगुणहीनं द्विस्थानकं शुभानामनन्तगुणवृद्धं चतुःस्थानकमनुभागं विधत्ते। स्थितिबन्धेऽपि पूर्णे पूर्णेऽन्यामन्यां पल्योपमसंख्येयभागहीनां स्थितिं बध्नाति, तदुक्तं कर्मप्रकृतौ–"ठिइबंधद्धापूरे नवबन्धं पल्लसंखभागूणं" इति, पञ्चसंग्रहेऽपि–"बंधादुत्तरबंधं पलिओवमसंखभागऊणूणं" इति, तथा सप्ततिकावृत्तौ च–"स्थितिबन्धेऽपि च पूर्णे सत्यन्यं स्थितिबन्धं पूर्वस्थितिबन्धापेक्षया पल्योपमसंख्येयभागहीनं करोति" इति। पञ्चसंग्रहमूलवृत्तौ तु–"बन्धादुत्तरबन्धं प्राक्तनस्थितिबन्धादन्यदभिनवस्थितिबन्धं तं पल्योपमासंख्येयभागहीनं बध्नाति" इति, तथा नव्यशतकवृत्तावपि–"स्थितिबन्धेऽपि च पूर्णे सति अन्यं स्थितिबन्धं पूर्वपूर्वस्थितिबन्धापेक्षया पल्योपमासंख्येयभागहीनं करोति" इति, तथा सप्ततिकाभाष्यवृत्तौ चापि–"स्थितिबन्धेऽपि पूर्णे पूर्णेऽन्यामन्यां स्थितिं पल्योपमासंख्येयभागेनोनामूनां बध्नाति" इति, तत्त्वं पुनः तद्विदो विदन्ति। तथाऽशुभानां प्रकृतीनामनुभागं चतुःस्थानकं सन्तं द्विस्थानकं करोति, शुभानां द्विस्थानकं सन्तं चतुःस्थानकं करोति। एवं चान्तर्मुहूर्त्तमवस्थाय ततो यथाक्रमं प्रत्येकमान्तर्मौहूर्त्तिकानि यथाप्रवृत्ता-

दीनि त्रीणि करणानि करोति—यथाप्रवृत्तकरणमपूर्वकरणमनिवृत्तिकरणं च, चतुर्थी तूपशान्ताद्धा । यथाप्रवृत्तकरणे प्रविशन् प्रतिसमयमनन्तगुणवृद्ध्या विशुद्ध्या प्रविशति, पूर्वोक्तं शुभप्रकृतिबन्धादिकं तथैव तत्र कुरुते, न च स्थितिघातं रसघातं गुणश्रेणिं गुणसंक्रमं वा करोति, तद्योग्यविशुद्ध्यभावात्, प्रतिसमयं च नानाजीवापेक्षयाऽसंख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि विशुद्ध्यपेक्षया षट्स्थानपतितानि च भवन्ति । किञ्चाद्यसमयापेक्षया द्वितीयसमयेऽध्यवसायस्थानानि विशेषाधिकानि, ततोऽपि तृतीयसमये विशेषाधिकानि, एवं तावज्ज्ञेयं यावद्यथाप्रवृत्तकरणचरमसमयः । एवं स्थाप्यमानानि विषमचतुरस्रं क्षेत्रमास्तृणन्ति । तत्राद्यसमये जघन्या विशोधिः सर्वस्तोका, द्वितीयसमये जघन्या विशोधिरनन्तगुणा, ततस्तृतीयसमये जघन्या विशोधिरनन्तगुणा एवमुपर्युपरि जघन्या विशोधिरनन्तगुणा तावद्वाच्या यावत् यथाप्रवृत्तकरणाद्धायाः संख्येयभागो गतो भवति । ततः आद्ये समये उत्कृष्टा विशोधिरनन्तगुणा, तत उपरि जघन्या विशोधिरनन्तगुणा, एवमुपर्यधश्चैकैकं विशोधिस्थानमनन्तगुणं तावद्वाच्यं यावत् यथाप्रवृत्तकरणचरमसमये जघन्यं विशोधिस्थानम् । तत उत्कृष्टानि यानि विशोधिस्थानान्यनुक्तानि तिष्ठन्ति तानि निरन्तरमनन्तगुणवृद्ध्या तावज्ज्ञेयानि यावदन्त्यसमये उत्कृष्टं विशोधिस्थानम् । अत्र स्थापना—

यथाप्रवृत्तकरणविशुद्धिः ( प्ररूपणा त्वधोमुखीकार्या )

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| संख्येयभागाः | | १ | समये | जघन्या विशोधिः | सर्वस्तोका | | | | | |
| | ततः | २ | ,, | ,, | अनन्तगुणा | | | | | |
| | ,, | ३ | ,, | ,, | ,, | | | | | |
| | ,, | ४ | ,, | ,, | ,, — | | ततः | १ | समये उत्कृष्टाविशोधिः | अनन्तगुणा |
| | ,, | ५ | ,, | ,, | ,, — | | ,, | २ | ,, | ,, |
| | ,, | ६ | ,, | ,, | ,, — | | ,, | ३ | ,, | ,, |
| | ,, | ७ | ,, | ,, | ,, — | | ,, | ४ | ,, | ,, |
| | ,, | ८ | ,, | ,, | ,, — | | ,, | ५ | ,, | ,, |
| | ,, | ९ | ,, | ,, | ,, — | | ,, | ६ | ,, | ,, |
| | ,, | १० | ,, | ,, | ,, — | | ,, | ७ | ,, | ,, |
| | ,, | ११ | ,, | ,, | ,, — | | ,, | ८ | ,, | ,, |
| | ,, | १२ | ,, | ,, | ,, — | | ,, | ९ | ,, | ,, |
| | ,, | १३ | ,, | ,, | ,, — | संख्येयभागाः | ,, | १० | ,, | ,, |
| | | | | | | | ,, | ११ | ,, | ,, |
| | | | | | | | ,, | १२ | ,, | ,, |
| | | | | | | | ,, | १३ | ,, | ,, |

इत्थं—रेखायुक्तसमयस्थानेषु परस्पराक्रान्तप्ररूपणा कर्त्तव्येति ॥

तदेवं यथाप्रवृत्तकरणं स्पृष्ट्वाऽपूर्वकरणे प्रविशति । तत्रापि प्रतिसमयमसंख्येयलोकाकाशप्रदेशप्रमाणानि प्रतिसमयं च षट्स्थानपतितानि भवन्ति । द्वितीयादिचरमसमयपर्यन्तेषु

विशेषाधिकानि विशेषाधिकान्यध्यवसायस्थानानि वाच्यानि। तत्रादिसमये जघन्या विशोधिः सर्वस्तोका सा च यथाप्रवृत्तकरणान्त्यसमयसत्कोत्कृष्टविशोधिस्थानादनन्तगुणा, तत आद्य-समय एवोत्कृष्टा विशोधिरनन्तगुणा, ततोऽपि द्वितीयसमये जघन्या विशोधिरनन्तगुणा, ततस्तत्रैव द्वितीयसमये उत्कृष्टा विशोधिरनन्तगुणा, एवं प्रतिसमयं तावद्वाच्यं यावदपूर्व-करणचरमसमये उत्कृष्टा विशोधिरनन्तगुणा। अत्र स्थापना—

अपूर्वकरणविशुद्धिः ( अत्र सर्वसमयेषु परस्पराक्रान्तप्ररूपणा कार्येति )

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| प्रथमे | १ | समये जघन्या | विशोधिः सर्वस्तोका ( सापि यथाप्रवृत्तसर्वोत्कृष्टविशोधेरनन्तगुणा ) तत-स्तस्यैवोत्कृष्टा विशोधिरनन्तगुणा | | | | |
| ततः | २ | समये | जघ०विशोधिरनन्तगुणा | | — | ततः उत्कृष्टा | विशोधिरनन्तगुणा |
| ततः | ३ | समये | ,, | ,, | — | ,, | ,, |
| ततः | ४ | समये | ,, | ,, | — | ,, | ,, |
| ततः | ५ | समये | ,, | ,, | — | ,, | ,, |
| ततः | ६ | समये | ,, | ,, | — | ,, | ,, |
| ततः | ७ | समये | ,, | ,, | — | ,, | ,, |
| ततः | ८ | समये | ,, | ,, | — | ,, | ,, |
| ततः | ९ | समये | ,, | ,, | — | ,, | ,, |

अत्र चापूर्वकरणाद्यसमय एव स्थितिघातो रसघातो गुणश्रेणिर्गुणसंक्रमोऽन्यश्च स्थिति-बन्ध इति पञ्च पदार्था युगपत् प्रवर्त्तन्ते। तत्र स्थितिघातो नाम स्थितिसत्कर्मणोऽग्रिमभागा-ज्जघन्येन पल्योपमसंख्येयभागमात्रमुत्कर्षेण सागरोपमशतपृथक्त्वमात्रं स्थितिखण्डमुत्कीर्य खण्डयित्वेत्यर्थो याः स्थितीरधो न खण्डयिष्यति तासु तद्दलिकनिक्षेपं करोति, अन्तर्मुहूर्त्तेन च तद्दलिकमुत्कीर्यते। ततः पुनरप्यधस्तात् पल्योपमसंख्येयभागमानं स्थितिखण्डमन्तर्मुहू-र्त्तेन कालेनोत्किरति, तथैव च निक्षिपति। एवमपूर्वकरणाद्धायां स्थितिखण्डसहस्राणि बहूनि व्यतिक्रामन्ति। ततोऽपूर्वकरणं परिसमाप्यते। अपूर्वकरणाद्यसमयस्थितिसत्कर्मापेक्ष-याऽपूर्वकरणचरमसमये संख्येयगुणहीनं स्थितिसत्कर्म भवतीति॥

गुणश्रेणिनाम यत्स्थितिखण्डं घातयति 'तन्मध्यात् दलिकं गृहीत्वा' इति पञ्चसंग्रहकर्मप्र-कृतिवृत्तिषु, कर्मप्रकृतिचूर्णौ तु "उवरिल्लातो ठिइओ पोग्गले घेत्तूण" इति, नव्यशतकवृत्तौ सप्त-तिकातद्भाष्यवृत्तौ च—"अन्तर्मुहूर्त्तप्रमाणानां स्थितीनामुपरि याः स्थितयो वर्त्तन्ते तन्मध्याद्दलिकं गृहीत्वा" इत्युक्तं, तत्त्वं पुनस्तद्विदो विदन्ति, उदयवतीनामुदयसमयादारभ्यानुदयवतीनामुदया-वलिकाया उपरीतनीषु स्थितिषु प्रथमसमये स्तोकं निक्षिपति, ततो द्वितीयसमयेऽसंख्येयगुणं, ततोऽपि तृतीयसमयेऽसंख्येयगुणमेवं तावत्प्रतिसमयमसंख्येयगुणनिक्षेपो वाच्यो यावद-न्तर्मुहूर्त्तचरमसमयः, तच्चान्तर्मुहूर्त्तमपूर्वकरणानिवृत्तिकरणकालाभ्यां मनागभ्यधिकं ज्ञेयम्।

एष आद्यसमयोपात्तदलिकस्य निक्षेपविधिः । एवं द्वितीयादिसमयोपात्तदलिकानामपि निक्षेपविधिर्द्रष्टव्यः । किञ्च गुणश्रेणिरचनाय प्रथमसमयादारभ्य गुणश्रेणिचरमसमयं यावद्गृह्यमाणं दलिकं यथोत्तरमसंख्येयगुणं द्रष्टव्यम् । तथाऽपूर्वकरणानिवृत्तिकरणसमयेष्वनुभवतः क्रमेण क्षीयमाणेषु गुणश्रेणिनिक्षेपः शेषेषु शेषेषु भवति, उपरि च न वर्धते । गुणसंक्रमो नाम अपूर्वकरणाद्यसमयादारभ्याशुभप्रकृतीनां दलिकस्य बध्यमानासु प्रकृतिषु प्रतिसमयमसंख्येयगुणतया संक्रमणम् । अत्र स्थापना—

अन्यस्थितिबन्धो नामापूर्वकरणप्रथमसमय एवान्योऽपूर्वः स्तोक इत्यर्थः स्थितिबन्धः प्रारभ्यते । स्थितिबन्धस्थितिघातौ युगपदेवारभ्येते युगपदेव च समाप्येते । एवं चैते पञ्च पदार्था अपूर्वा एतस्मिन् करणे प्रथमसमयादेवारभ्य युगपत् प्रवर्त्तन्तेऽतोऽपूर्वकरणमुच्यते । तदेवमन्तर्मुहूर्त्तमेतत्करणं स्पृष्ट्वाऽनिवृत्तिकरणं प्रविशति । अत्र च तुल्यकालप्रवि-

ष्टानां प्राणिनामध्यवसायस्थानान्याश्रित्यान्योन्यं निवृत्तिस्तिर्यक्षट्स्थानलक्षणा नास्तीत्यनिवृत्तिकरणम्, तथाहि–अस्य करणस्याद्यसमये ये वृत्ता ये च वर्त्तन्ते ये च वर्त्तिष्यन्ते तेषां सर्वेषां प्राणिनामेकमेवाध्यवसायस्थानं भवति ॥

॥ रसप्रतिघाते घात्यमानानुभागस्पर्धकसंख्या ॥

| घात्यमानाः स्थि० कण्डकाः | | | घातितानुभाग-स्पर्धकानि | | अवशिष्टानि अनु० स्पर्धकानि | |
|---|---|---|---|---|---|---|
| प्रथमे० | कण्डके | घातिते | ९०० | कोट्यः | १०० | कोट्यः |
| द्वितीये | ,, | ,, | ९० | ,, | १० | ,, |
| तृतीये | ,, | ,, | ९ | ,, | १ | कोटिः |
| चतुर्थे | ,, | ,, | ९० | लक्षाणि | १० | लक्षाणि |
| पञ्चमे | ,, | ,, | ९ | लक्षाणि | १ | लक्षम् |
| षष्ठे | ,, | ,, | ९० | सहस्राणि | १० | सहस्राणि |
| सप्तमे | ,, | ,, | ९ | ,, | १ | सहस्रम् |
| अष्टमे | ,, | ,, | ९ | शतानि | १ | शतम् |
| नवमे | ,, | ,, | | नवतिः (९०) | | दश (१०) |

एवमनेकसहस्राण्यनुभागघातानि

प्ररूपणा चेत्थं—प्रथमे स्थितिकण्डके घातिते सति तदनुगतानुभागस्पर्धकाण्यप्यनन्तानि कल्पनया '९०० कोट्यः' घातितानि अवशिष्टश्चैकोऽनन्ततमो भागः कल्पनया '१०० कोट्यः' एवं द्वितीयादिस्थितिघातेऽप्येकमनन्ततमभागं मुक्त्वा शेषसर्वानुभागस्य विनाशो वक्तव्यः ॥

॥ गुणसंक्रमः ॥

अबध्यमानाशुभानां दलस्य संख्याक्रमः

| समयाः | बध्यमानपरप्रकृतौ संक्रम्यमाणदलिकसंख्या | अवशिष्टदलिकसंख्या ( अबध्यमानाशुभायाः ) |
|---|---|---|
| १ मे समये | अनन्तं सर्वतःस्तोकम् | अनन्तगुणं ततो- |
| २ ये समये | ततोऽसंख्यगुणं | ऽसंख्येयभागहीनम् |
| ३ ये ,, | ,, | ,, |
| ४ र्थे ,, | ,, | ,, |
| ५ मे ,, | ,, | ,, |
| ६ ष्ठे ,, | ,, | ,, |
| ७ मे ,, | ,, | ,, |
| ८ मे ,, | ,, | ,, |

एवमन्तर्मुहूर्तं यावत्

॥ अनिवृत्तिकरणविशुद्धिः ॥

प्रथमे समयेऽजघन्योत्कृष्टाविशुद्धिः सर्वाल्पा ( सापि अपूर्वकरणसर्वोत्कृष्टविशुद्धेरनन्तगुणा )

ततः २ समयेऽनन्तगुणा
ततः ३ समये ,,
ततः ४ समये ,,
ततः ५ समये ,,
ततः ६ समये ,,
ततः ७ समये ,,
ततः ८ समये ,,
ततः ९ समये ,,
ततः १० समये ,,
ततः ११ समये ,,

विशुद्धेर्जघन्योत्कृष्टत्वसमानत्वादुत्कृष्टविशोधिभेदतया नोक्ता

एवं द्वितीयादिसमयेष्वपि कालत्रयवर्त्तिनां सर्वेषामपि प्राणिनामेकमेवाध्यवसायस्थानं, नवरं प्रथमादिसमयापेक्षया द्वितीयादिसमयेष्वध्यवसायस्थानमनन्तगुणविशुद्धमनन्तगुणवृद्धं च वाच्यम्, ततोऽत्र करणे समयप्रमाणान्यध्यवसायस्थानानि भवन्ति, तानि च

मुक्तावलिस्थानेन स्थापितव्यानि । अत्राप्यपूर्वकरणवत् प्रथमसमयादारभ्य पञ्च पदार्था युगपत् प्रवर्त्तन्ते । अनिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्सु एकस्मिन् भागेऽवतिष्ठमानेऽनन्तानुबन्धिनामधस्तादावलिकामात्रं मुक्त्वाऽन्तर्मुहूर्त्तप्रमाणमन्तरकरणमभिनवबन्धाद्धातुल्येनान्तर्मुहूर्त्तेन कालेन करोति । अन्तरकरणसत्कं च दलिकमुत्कीर्यमाणं बध्यमानासु परप्रकृतिषु क्षिपति । अधस्तनावलिकागतं च स्तिबुकसंक्रमेण वेद्यमानासु परप्रकृतिषु संक्रमयति । अन्तरकरणे च कृते सति द्वितीयसमयेऽनन्तानुबन्धिनामुपरितनस्थितिगतं दलिकमुपशमयितुमारभते, तद्यथा–प्रथमे समये स्तोकं, द्वितीयसमयेऽसंख्येयगुणं ततोऽपि तृतीयसमयेऽसंख्येयगुणमुपशमयति, एवं तावदन्तर्मुहूर्त्तेन कालेन साकल्येनानन्तानुबन्धिन उपशमिता भवन्ति । उपशमिता नाम यथा रेणुनिकरो नीरेणाभिषिच्याभिषिच्य द्रुघणादिना कुट्टितो निश्चलो भवति, एवं कर्म्मरेणुनिवहोऽपि विशोधिवारिणा सिक्त्वा सिक्त्वाऽनिवृत्तिकरणद्रुघणकुट्टितः संक्रमोदीरणानिधत्तिनिकाचनाकरणोदयानामयोग्यः संपद्यते, तदेवमेकेषामाचार्याणां मतेनानन्तानुबन्धिनामुपशमनाभिहिता ॥

॥ करणत्रयस्य स्थापना ॥

( प्ररूपणा त्वधोमुखी कार्या )

| समयाः | विशोधिस्थानानि जघन्यतः | क्रमेण विशेषाधिकानि करणानां मध्य०स्थानानि | विशुद्धिस्थानानि उत्कृष्टतः |
|---|---|---|---|
| १ मे | | ०००० श्री ००००० | करणकालात्पूर्वं जघन्योत्कृष्टविशुद्धिः कर्मप्रकृत्यादौ नोक्ताऽतोऽत्रापि नोच्यते |
| २ ये | | ०००० बी ०००००० | |
| ३ ये | | ०००० प्र ०००००० | |
| ४ र्थे | | ०००० ००००००० | |
| ५ मे | | ०००० श्री ००००००० | |
| १ मे | ३० ( १ संख्ये० भा० ) नन्तगुण वृद्ध्यानि | ० ( विषमचतुरस्रम् ) प्रतिसमयमसंख्येयलोकाकाशप्रदेशप्रमाणान्यध्यवसायस्थानानि षट्स्थानपतितानि ( अधान्यस्थितिबन्धः पल्योपमसंख्येयभागहीनोऽध्यवसायश्चैवं ) (अन्तर्मुहूर्त्तप्रमाणम्) ० | ५० |
| २ ये | ३५ | ० य ० | ६० |
| ३ ये | ४० | ० ० | ७० |
| ४ र्थे | ४५ | ० था ० | ८० |
| ५ मे | ५५ | ० ०० | ९० |
| ६ ष्ठे | ६५ | ० प्र ०० | १०० |
| ७ मे | ७५ | ० ०० | ११० |
| ८ मे | ८५ | ० ०० | १२० |
| ९ मे | ९५ | ० वृ ००० | १३० |
| १० मे | १०५ | ० ००० | १४० ( १ संख्ये० भागाः ) अत्र यत्पञ्चाधिकत्वं तदनन्तगुणमिति ज्ञापनार्थं |
| ११ मे | ११५ | ० त्त ००० | १४५ |
| १२ मे | १२५ | ० ०००० | १५० |
| १३ मे | १३५ | ० क० ०००० | १५५ |
| | | ० ०००० | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | मे | | १६० | ० | (अन्तर्मुहूर्त प्रमाणम्) अ पू र्व क० (प्रतिसमयमसंख्येयलोकाकाश-प्रदेशप्रमाणान्यध्य० स्थानानि नि-षट्स्थानपतितानि । अत्र प्रथम-समयात्–स्थितिघातः रसघातः–गु-णश्रेणिः-गुणसंक्रमः-अन्यस्थिति ब-न्धश्चप्रवर्त्तन्तेऽध्य० क्षे० वि० चतु० । | ० | १६५ | |
| २ | ये | | १७० | ० | | ० | १७५ | |
| ३ | ये | | १८० | ० | | ०० | १८५ | |
| ४ | थें | | १९० | ० | | ०० | १९५ | |
| ५ | मे | | २०० | ० | | ०० | २०५ | |
| ६ | छे | | २१० | ० | | ००० | २१५ | |
| ७ | मे | | २२० | ० | | ०० | २२५ | |
| ८ | मे | | २३० | ० | | ००० | २३५ | |
| ९ | मे | | २४० | ० | | ००० | २४५ | |
| | | | | | अजघन्यानुत्कृष्टा विशुद्धिः | | | |
| १ | मे | ,, | २५० | ⊙ ० | (अन्तर्मुहूर्तप्रमाणम्) अ नि वृ त्ति क० प्रतिसमयमेकैकमध्यवसायस्थान-मतस्स्थाप्यमानानि मुक्तावलिस्था-नसंस्थितानि भवन्ति । विशुद्ध्यपे-क्षया च क्षेत्रं विषमचतुरस्रभवति । | ००⦶० | २५० | ,, |
| २ | ये | ,, | २५५ | ⊙ ०० | | ००⦶० | २५५ | ,, |
| ३ | ये | ,, | २६० | ⊙ ०० | | ००⦶०० | २६० | ,, |
| ४ | थें | ,, | २६५ | ⊙ ०० | | ००⦶०० | २६५ | ,, |
| ५ | मे | ,, | २७० | ⊙ ०० | | ००⦶०० | २७० | ,, |
| ६ | मे | ,, | २७५ | ⊙ ०० | | ००⦶०० | २७५ | ,, |
| ७ | छे | ,, | २८० | ⊙ ०० | | ००⦶००० | २८० | ,, |
| ८ | मे | ,, | २८५ | ⊙ ०० | | ००⦶००० | २८५ | ,, |
| ९ | मे | ,, | २[illegible]० | ⊙ ०० | | ००⦶००० | २९० | ,, |
| १० | मे | ,, | २९५ | ⊙ ०० | | ००⦶००० | २९५ | ,, |
| ११ | मे | ,, | ३०० | ⊙ ०० | | ००⦶०००० | ३०० | ,, |

⊙⊙⊙⊙⊙ एतानि शून्यानि अध्यवसायस्थानानि ।

० ० ० ० ० ० एते बिन्दवः विशुद्ध्यंशाः । शून्यबिन्द्वोः संख्यानियमो नास्ति ॥

⊖⊖⊖ इति मुक्तावलिसंस्थानम्

## करणत्रयपूर्वविशुद्धेः प्रस्थापकः–

१ पञ्चेन्द्रियसंज्ञिपर्याप्तचातुर्गतिकः ।

२ ग्रन्थिकाभव्यादनन्तगुणविशुद्धः ।

३ मतिश्रुतावधिविभङ्गान्यतमसाकारोपयोगयुक्तः ।

४ त्रयाणामन्यतमयोगयुक्तः ।

५ विशुद्धलेश्यात्रयान्यतमयुक्तः ।

६ कृतसप्तकर्मान्तः को० को० सा० स्थितिकः ।

## करणत्रयपूर्वविशुद्धेः क्रिया–

१ अशुभानुभागस्य चतुस्स्थानकसत्त्वं बन्धं च द्विस्थानकं करोति । तमपि प्रतिसमयमनन्तगुणहीनं २, शुभानुभागस्य द्विस्थानकसत्त्वं बन्धं च चतुःस्थानिकं करोति । तमपि प्रतिसमयमनन्तगुणाधिकम् ।

३ स्वभवप्रायोग्याः शुभपरावर्त्तमानाः प्रकृतीः बध्नाति ।

४ अभिनवबन्धं पल्योपमसंख्येय ( पञ्चसंग्रहे–पल्यासंख्येय ) भागहीनं अन्तःको० को० सा० प्रमाणं बध्नाति ।

५ योगानुरूपं प्रदेशग्रहणं करोति ।

६ आयुर्बन्धं न करोति । ( उ० विशोधिकत्वात् )

## ॥ अनन्तानुबन्धिनामुपशमनाक्रमः ॥

प्रस्थापकाः–अविरताश्चातुर्गतिकाः देशविरतास्तिर्यग्नराः सर्वविरता मनुष्या एव। (अत्र बिन्दवः प्रदेशोदयसूचकाः)

| क्रियाक्रमः | |
|---|---|
| विशुद्धि (अन्तर्मु०) | अत्र प्रथमसमयादन्यस्थितिबन्धः । |
| यथाप्रवृत्तम् (अन्तर्मु०) | अत्रापि प्रथमसमयादन्यस्थितिबन्धः । |
| अपूर्वकरणम् (अन्तर्मु०) | अत्र प्रथमसमयात् स्थितिघातादि ५ पदार्थां युगपत् प्रवर्तन्ते। (नवरं गु०श्रे० दलिकप्रक्षेप उदयावलिकाया उपरि) |
| अनिवृत्तिकरणम् (अन्तर्मु०) — संख्येया भागाः | अत्रापि पूर्वोक्ताः ५ पदार्था युगपत् प्रवर्तन्ते । |
| अनिवृत्तिकरणम् — १ संख्येयो भागः | अतः प्रारभ्यान्तरकरणं प्रथमस्थितेः प्रारभ्यते, द्वितीयसमयादुपशमनाऽपि प्रारभ्यते । |
| आव लि० | स्तिबुकेन अनुदयवतीनामावलिकामात्रायाः प्रथमस्थितेःप्रथम (=पूर्व) समयो· यथायथा क्षीयते तथातथोपरितनसमय(=परसमयः) आवलिकायां प्रविशति। |
| अन्तरम् (अनन्तानुबन्धिनामनुदयः) अन्तर्मु० | अत्र अन्तरकरणक्रियासमाप्ता, उपशान्ता अनन्तानुबन्धिनोऽपि, निवृत्ताः स्थितिघातादयोऽपि । |
| द्वितीया स्थितिः (उपशान्ता) | अत्रागतस्य पुनरपि प्रदेशोदयो भवति । |

अन्ये त्वनन्तानुबन्धिनामुपशमना न मन्यन्ते, किन्तु विसंयोजना। विसंयोजना नाम

क्षपणा, सा चैवं,–इह चातुर्गतिका अप्यविरताः क्षायोपशमसम्यग्दृष्टयः, देशविरताः तिर्यङ्मनुजाः, सर्वविरताः मनुजा एव सर्वाभिः पर्याप्तिभिः पर्याप्ताः अनन्तानुबन्धिनां क्षपणार्थं यथाप्रवृत्त्यादीनि त्रीणि करणानि कुर्वन्ति। करणवक्तव्यता च प्रागिव सर्वापि वक्तव्या, नवरमिहानिवृत्तिकरणे प्रविष्टः सन् अन्तरकरणमुपशमनाद्धा च न भवति, तदुक्तं कर्म्मप्रकृतौ–
''चउगइया पज्जत्ता तिण्णि वि संजोअणा विजोइंति। करणेहिं तिहिं सहिया नंतरकरणं उवसमो वा॥१॥''
इति। अन्तरकरणाभावान्न प्रथमस्थितिरपि, तदुक्तं ''न उण पढमठिइं करेंति'' इति। गुणसंक्रमस्त्वपूर्वकरणे प्रथमस्थितिखण्डस्य स्थित्यपेक्षया बृहत्तरस्य द्वितीयादिस्थितिखण्डानां च विशेषविशेषहीनानां यद्घातनं तेन निष्पन्नो य उद्वलनासंक्रमस्तदनुविद्धो द्रष्टव्यः। तदनेनोद्वलनासंक्रमानुविद्धगुणसंक्रमेणानन्तानुबन्धिनः शेषप्रकृतिरूपतावस्थापनेन विनाशयति। अनिवृत्तिकरणे च प्रविष्टः सन् गुणसंक्रमानुविद्धोद्वलनासंक्रमेणाधस्तनामावलिकां मुक्त्वा निरवशेषान् विनाशयति, अधस्तनावलिकागतं च दलिकं वेद्यमानासु प्रकृतिषु संक्रमयति। सप्ततिकाभाष्यवृत्तौ तु–''स चैवंरूपेऽनिवृत्तिकरणे प्रविष्टः सन्ननन्तानुबन्धिनां स्थितिमपवर्त्तनाकरणेन पल्योपमासंख्येयभागमात्रां विधत्ते। अपवर्त्तनाविधिश्च कर्म्मप्रकृतिसंग्रहण्यामुद्वलनसंक्रमवद्बोद्धव्या। तच्च पल्योपमासंख्येयभागमात्रस्थितिगतं दलिकमधस्तादावलिकामात्रं मुक्त्वा बध्यमानासु मोहनीयप्रकृतिषु परिणमयति, तत्राद्यसमये स्तोकं ततो द्वितीयसमयेऽसंख्येयगुणं एवं यावदन्त्यसमये सर्वसंक्रमेणासंख्येयगुणं परिणमयति'' इत्युक्तम्। अत्रापवर्त्तना व्याघातभाविनी द्रष्टव्येति। तदेवमुक्तानन्तानुबन्धिनां विसंयोजना॥

## ॥ अनन्तानुबन्धिनां विसंयोजनाक्रमः ॥

प्रस्थापकाः—अविरताश्चातुर्गतिकाः पर्याप्ताः देशविरतास्तिर्यग्मनुष्याः सर्वविरता मनुष्या एव।

क्रियाक्रमः

| | |
|---|---|
| विशुद्धिः (अन्तर्मु०) | अत्र प्रथमसमयादेवान्यस्थितिबन्धः। |
| यथाप्रवृत्तम् (अन्तर्मु०) | अत्रापि प्रथमसमयादेवान्यस्थितिबन्धः। |
| अपूर्वकरणम् (अन्तर्मु०) | अत्र प्रथमसमयादेव स्थितिघातादि ५ पदार्था युगपत् प्रवर्तन्ते, नवरं गुणसंक्रमानुविद्धोद्वलनासंक्रमोऽपि। |




अनन्तानुबन्धिनां क्षयः

अत्र गुणसंक्रमानुविद्धोद्वलनासंक्रमेणाधस्तनावलिकामात्रं मुक्त्वा निरवशेषं विनाशयति, आवलिकामात्रं तु वेद्यमानपरप्रकृतिषु स्तिबुकसंक्रमेण ( नव्यशतकप्रणेतृभिस्तु अनन्ततमं भागं मिथ्यात्वे प्रक्षिप्य ) वेदयति ।

सम्प्रति दर्शनत्रिकस्योपशमना भण्यते—तत्र मिथ्यात्वं मिथ्यादृष्टिः क्षायोपशमिकसम्यग्दृष्टिश्चोपशमयति, सम्यक्त्वसम्यग्मिथ्यात्वे तु वेदकसम्यग्दृष्टिरेवोपशमयति । तत्र सम्यक्त्वमुत्पादयतो मिथ्यादृष्टेः मिथ्यात्वस्योपशमना भवति, सा चैवं,—पञ्चेन्द्रियः संज्ञी सर्वाभिः पर्याप्तिभिः पर्याप्तः उपशमलब्ध्युपदेशश्रवणलब्धिप्रयोगलब्धित्रिकयुक्तः जघन्यपरिणामेन तेजोलेश्यायां मध्यमपरिणामेन पद्मलेश्यायामुत्कृष्टपरिणामेन शुक्ललेश्यायां साकारोपयोगे च मतिश्रुताज्ञानविभङ्गज्ञानानामन्यतमस्मिन् वर्तमानो देवो नारको वा मनुजगतिप्रायोग्याणां मनुजद्विकपञ्चेन्द्रियजात्यौदारिकशरीरौदारिकाङ्गोपाङ्गप्रथमसंहननप्रथमसंस्थानप्रशस्तखगतिपराघातोच्छ्वासत्रसदशकसातवेदनीयोच्चैर्गोत्ररूपां द्वाविंशतिसंख्यानां परावर्त्तमानानां शुभप्रकृतीनां बन्धकः, सप्तमपृथ्वीनारको यदि सम्यक्त्वमुत्पादयति तदा मनुजद्विकोच्चैर्गोत्रस्थाने तिर्यग्द्विकनीचैर्गोत्रे वक्तव्ये शेषं तथैव । तिर्यङ् मनुजो वोत्पादयति तदा देवद्विकपञ्चेन्द्रियजातिवैक्रियद्विकप्रथमसंस्थानप्रशस्तखगतिपराघातोच्छ्वासत्रसदशकसातवेदनीयोच्चैर्गोत्राणामेकविंशतिप्रकृतीनां बन्धकः, उत्तरोत्तरसमयेषु चातीव विशुद्ध्यमानः प्रतिसमयमनन्तगुणविशुद्ध्या प्रवर्द्धमानशुभाध्यवसायश्चातुर्गतिकानामन्यतमोऽशुभानुभागेऽनन्तगुणहानिप्रवृत्तपरिणामः शुभेऽनुभागेऽनन्तगुणवृद्धिकरणप्रवृत्तपरिणामोऽन्तःसागरोपमकोटिकोटिस्थितिसत्कर्मायुष्कमबध्नन् ,अतिविशुद्धपरिणामो ह्यायुर्बन्धं नारभते, पूर्वस्मात्पूर्वस्मात् स्थितिबन्धादुत्तरोत्तरं स्थितिबन्धं पल्योपमसंख्येयभागेन न्यूनं न्यूनं कुर्वन्नशुभानां

प्रकृतीनामनुभागं प्रतिसमयमनन्तगुणहीयमानं २ द्विस्थानकं शुभानां च चतुस्स्थानकं प्रतिसमयमनन्तगुणवृद्धं बध्नन् अनुभागसत्कर्माण्यशुभप्रकृतीनां चतुःस्थानकमपवर्त्तनाकरणेन द्विस्थानकं शुभानां प्रकृतीनां च द्विस्थानकं सन्तमुद्वर्त्तनाकरणेन चतुःस्थानकं कुर्वन् प्रागिव यथाप्रवृत्तादीनि त्रीणि करणानि करोति । नवरमिहापूर्वकरणे मिथ्यात्वस्य बध्यमानत्वेन गुणसंक्रमो न भवति, स्थितिघातरसघाताभिनवस्थितिबन्धगुणश्रेणयश्च भवन्ति । मिथ्यात्वस्योदयमानत्वेन गुणश्रेणिदलिकरचनाप्युदयसमयादारभ्य वेदितव्या । अनिवृत्तिकरणाद्धायाश्च संख्येयेषु भागेषु गतेषु सत्सु एकस्मिन् संख्येयतमे भागेऽवतिष्ठमानेऽन्तर्मुहूर्त्तमात्रमधो मुक्त्वा मिथ्यात्वस्यान्तरकरणमन्तर्मुहूर्त्तप्रमाणं करोति । अन्तरकरणं नामोदयक्षणादुपरि मिथ्यात्वस्थितिमन्तर्मुहूर्त्तमानामतिक्रम्योपरितनीं च विष्कम्भयित्वा मध्येऽन्तर्मुहूर्त्तमानं तत्प्रदेशवेद्यदलिकाभावकरणम् । तन्निष्पादनकालोऽप्यन्तरकरणकाल एव यथा तन्तुसंयोजनाकालः पटकरणकालः । सोऽप्यन्तर्मुहूर्त्तप्रमाणः प्रथमस्थितेः किञ्चिन्न्यूनोऽभिनवस्थितिबन्धाद्धया समानः, तथाहि–प्रथमस्थित्यन्तरकरणे द्वे अप्यन्तर्मुहूर्त्तप्रमाणे युगपदारभते, अन्तरकरणप्रथमसमय एव चान्यं स्थितिबन्धं मिथ्यात्वस्य स्थितिबन्धान्तरकरणे युगपदेव परिसमापयतीति न्यायाचार्याः । नव्यशतकवृत्तौ 'मिथ्यात्वस्यान्तरकरणमन्तर्मुहूर्त्तप्रमाणं प्रथमस्थितेः किञ्चित् समधिकं न्यूनं वाऽभिनवस्थितिबन्धाद्धासमेनान्तर्मुहूर्त्तेन कालेन करोतीति' । सप्ततिकावृत्तौ पुनः 'मिथ्यात्वस्यान्तरकरणमन्तर्मुहूर्त्तप्रमाणं प्रथमस्थितेः किञ्चित् समधिकं अभिनवस्थितिबन्धाद्धासमेनान्तर्मुहूर्त्तेन कालेन करोतीति' । अस्माकं त्वन्तरकरणकरणकालः प्रथमस्थितेः किञ्चिन्न्यूनोऽन्तरकरणकालस्तु प्रथमस्थितेः किञ्चित् समधिकश्च प्रतिभातीति न त्रयाणामपि पूज्यानां मतभेदः । अन्तरकरणसत्कं दलिकं तूत्कीर्योत्कीर्य प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति, एवं प्रतिसमयं तावत्प्रक्षिपति यावदन्तरकरणदलिकं सकलमपि क्षीयते । प्रथमस्थितौ वर्तमान उदीरणाप्रयोगेणैव प्रथमस्थितिगतं दलिकं समाकृष्य उदये प्रक्षिपति सोदीरणा, यत्पुनः द्वितीयस्थितिगतं दलिकं समाकृष्योदये प्रक्षिपति सा उदीरणापि पूर्वसूरिभिर्विशेषप्रतिपत्त्यर्थमागाल इत्युच्यते । अन्तरकरणादधस्तनी स्थितिः प्रथमा स्थितिरित्युच्यते, उपरितनी तु द्वितीया । उदयोदीरणाभ्यां च प्रथमस्थितिमनुभवन् तावद्गच्छति यावदावलिकाद्विकं शेषं तिष्ठति । तस्मिंश्च स्थिते आगालो व्यवच्छिद्यते, तत उदीरणैव केवला प्रवर्त्तते, सापि तावत् यावदावलिकाशेषो भवति । आवलिकाशेषीभूतायां तूदीरणापि शान्ता भवति, ततः केवलेनैवोदयेनावलिकामात्रमनुभवति । उदयावलिकाचरमसमये तु द्वितीयस्थितिगतं दलिकमनुभागभेदेन त्रिधा करोति, तद्यथा–सम्यक्त्वं सम्यग्मिथ्यात्वं मिथ्यात्वमिति । एषः प्रथमसम्यक्त्वलाभो मिथ्यात्वस्य सर्वोपशमनात् भवति ॥

## ॥ श्रेणिसत्कदर्शनमोहोपशमनाक्रमः ॥

क्रियाक्रमः

| | | |
|---|---|---|
| | विशुद्धिः | अत्र प्रथमसमयादन्यस्थितिबन्धः । |
| | यथाप्रवृत्तकरणम् | अत्रापि प्रथमसमयादेवान्यस्थितिबन्धः । |
| अत्र प्रथमसमयादारभ्य मिथ्यात्वमिश्रयोर्गुणसंक्रमः प्रवर्तते | अपूर्वकरणम् | अत्र प्रथमसमयादेव स्थितिघात–रसघात–गुणश्रेणिः अन्यस्थितिबन्धश्च प्रवर्त्तन्ते एवं गुणसंक्रमोऽपि । |
| | अनि- संख्येया भागाः | |

आवलिका: | आव० | आव० | गु० श्रे० भागः

संख्येयतमभागरूपा सम्यक्त्वस्य प्रथमस्थितिः — क्षि प्र क र ण म्

उपशमसम्यक्त्वाद्धा अन्तरम् वा (अन्तर्मु०) — अन्तर्मुहूर्तं

उपशमिता द्वितीया स्थितिः सम्यक्त्वस्य

मिथ्यात्वस्यावलिकास्थि० प्रथमस्थितिः — मि थ्या त्व स्य अ न्त र म् (अन्तर्मु०) — उपशमिता द्वितीया स्थितिः मिथ्यात्वस्य

मिश्रस्यावलिका- प्रथमस्थि० — मि श्र स्य अ न्त र म् (अन्तर्मु०) — उपशमिता द्वितीयास्थितिः मिश्रस्य

मिथ्यामिश्रयोः १ आव० स्तिबुकेन क्षपयति.

अत्र त्रयाणामन्तरकरणक्रिया सम्यक्त्वागालश्च प्रवर्तते ।

अत्र द्वितीयसमयात्त्रयाणामप्युपशमना प्रवर्तते ।

अत्र सम्यक्त्वागालगुणश्रेण्योर्विच्छेदः ।

अत्र सम्यक्त्वोदीरणा स्थितिघातरसघातौ च निवृत्ताः ।

अत्र सम्यक्त्वोदयविच्छेदः, उपशान्तं दर्शनत्रिकम् ।

अयं प्र० स्थि० गतोऽपि गुणश्रेणिविभागोऽन्तरकरणेन सहोत्कीर्णो भवति ।

अत्र मिथ्यात्वमिश्रयोर्गु० सं० विच्छेदः, विध्या० सं० प्रवृत्तिश्च तथा ७ कर्मणां स्थि० घात-रसघात-गुणश्रे० निवृत्ताः ।

इदं च सम्यक्त्वं प्रतिपद्यमानः कश्चिद्देशविरतिसहितं सर्वविरतिसहितं वा प्रतिपद्यते,

तदुक्तं पञ्चसंग्रहे—"सम्मत्तेणं समगं सव्वं देसं च कोइ पडिवज्जे" इति ॥

सम्प्रति वेदकसम्यग्दृष्टेस्त्रयाणामपि दर्शनमोहनीयानामुपशमनाविधिरुच्यते—

इह वेदकसम्यग्दृष्टिः संयमे वर्तमानः सन् अन्तर्मुहूर्त्तमात्रेण कालेन दर्शनत्रितयमुपशमयतीति मलयगिरिपादाः, नव्यशतकवृत्तौ तु—"इहोपशमश्रेणिप्रारम्भको भवत्यप्रमत्तसंयत एव", अन्ये तु "अविरतदेशविरतप्रमत्ताप्रमत्तसंयतानामन्यतमः" इति प्रतिपादयन्ति। उपशमयतः करणत्रिकविधिः पूर्ववत् तावद्वक्तव्यो यावदनिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्सु एकस्मिन् भागेऽवतिष्ठमानेऽन्तरकरणं करोति। तच्च कुर्वन् सम्यक्त्वस्य प्रथमस्थितिमन्तर्मुहूर्त्तप्रमाणां मिथ्यात्वमिश्रयोश्चावलिकामात्रां स्थापयति। उत्कीर्यमाणं च दलिकं त्रयाणामपि सम्यक्त्वस्य प्रथमस्थितौ प्रक्षिपति। मिथ्यात्वमिश्रयोः प्रथमस्थितिसत्कं दलिकं सम्यक्त्वप्रथमस्थितौ स्तिबुकसंक्रमेण संक्रमयति। सम्यक्त्वस्य प्रथमस्थितौ विपाकानुभवतः क्रमेण क्षीणायां सत्यामौपशमिकसम्यग्दृष्टिर्भवति। त्रयाणामपि मिथ्यात्वादीनामुपरितनस्थितिगतदलिकस्यानन्तानुबन्धिवदुपशमनां करोति ॥

। अनादिमिथ्यात्वोपशमनानुक्रमः। ( उपशमसम्यक्त्वस्य प्रथमलाभो वा )

प्रस्थापकः—पर्याप्तसंज्ञिपञ्चेन्द्रियश्चातुर्गतिकः, ग्रन्थिकाभव्यादनन्तगुणविशुद्धः, अज्ञानत्रिकस्यान्यतमोपयोगे प्रवर्त्तमानः त्रयान्यतमविशुद्धलेश्याकः।

क्रियाक्रमः

विशुद्धिः (अन्तर्मु०)

अत्र प्र० समयादेवान्यस्थितिबन्धः।

यथाप्रवृत्तक० (अन्तर्मु०)

अत्र प्र० समयादेव अन्यस्थितिबन्धः।

१ अत्र पर्यन्तसमयमध्य आगच्छति

अपूर्वकरणम् (अन्तर्मु०) (ग्रन्थिभेदकरणमत्रैव)

अत्र प्र० समयादेव स्थितिघातः रसघातः गुणश्रेणिः (घात्यमानस्थितिकण्डकाद्दलिकं गृहीत्वोदयसमयात्प्रक्षेपरूपा) अन्यस्थितिबन्धश्च प्रवर्तते।

१ इदं यन्त्रकमष्टाशीतितमपत्रे वाचनीयम्। तत्रस्थं च यन्त्रमत्र वाचनीम्।

संक्लेशे: भागा:

मिथ्यात्वस्य प्रथमस्थितिः

अन्तर्मुहूर्त्तम्

अत्रापि प्रथमसमयादेव पूर्वोक्ताः ४ पदार्थाः प्रवर्त्तन्ते ।

अत्रागालप्रवृत्तिः ।

*अत्र मिथ्यात्वागलस्य गु० श्रेण्याश्च विच्छेदः ।

||अत्र मिथ्यात्वस्योदीरणास्थितिघातरसघातविच्छेदः । + अत्र त्रिपुञ्जकरणप्रवृत्तिः ।

चरमसमये

§ अत्र मिथ्यात्वस्य गु० संक्रमप्रारम्भः । + एतद्विभागो गुणश्रेणिसत्कः प्रथमस्थितिगतोपि अन्तरकरणदलिकेन सहोत्कीर्णो भवति । ¶ अत्रान्तरकरणे केचित् ५-६-७ वा गुणस्थानमपि लभन्ते—अत्र मिथ्यात्वस्य गु० संक्रमविच्छेदः विध्यातसंक्रमस्य प्रवृत्तिश्च तथा ७ कर्मणां स्थि० घातरसघात गु० श्रेणिविच्छेदः । ‡ अतः प्रारभ्य केचित्संयोजनोदयात्सास्वादनाऽपि भवन्ति । † अत्र त्रिपुञ्जमाकृष्यान्त्यावलिकायां विशेषवि० हीनक्रमेण प्रक्षिपति । * अत्रान्यतमपुञ्जोदयः स्यात् ।

एवमुपशान्तदर्शनमोहनीयत्रिकश्चारित्रमोहनीयमुपशमयितुकामः पुनरपि संक्लेशविशुद्धिवशात् प्रमत्ताप्रमत्तभावे सहस्रशः कालपरावृत्तीः कृत्वा यथाप्रवृत्तादीनि त्रीणि करणानि करोति । करणानां स्वरूपं प्रागिव वक्तव्यम् । नवरं यथाप्रवृत्तकरणमप्रमत्तगुणस्थानकेऽपूर्वकरणं त्वपूर्वकरणगुणस्थानकेऽनिवृत्तिकरणं चानिवृत्तिगुणस्थाने भवति । तत्रापूर्वकरणप्रथमसमयादारभ्य स्थितिघातरसघातगुणश्रेण्यभिनवस्थितिबन्धा युगपत् प्रवर्त्तन्ते, गुणसंक्रमश्च सर्वासामबध्यमानानामशुभप्रकृतीनां बध्यमानासु भवति । अपूर्वकरणाद्धायाः संख्येयतमे भागे गते सति निद्राद्विकबन्धव्यवच्छेदः । ततः प्रभूतेषु स्थितिखण्डसहस्रेषु गतेषु सत्स्वपूर्वकरणाद्धायाः संख्येया भागा गता भवन्त्येकोऽवशिष्यते । अत्रान्तरे च देवद्विकपञ्चेन्द्रियजात्यौदारिकद्विकवर्जशरीराङ्गोपाङ्गसमचतुरस्रसंस्थानवर्णादिचतुष्कशुभखगत्यातपोद्योतवर्जप्रत्येकषट्कत्रसनवकलक्षणानां त्रिंशत्प्रकृतीनां बन्धव्यवच्छेदः । ततः स्थितिखण्डपृथक्त्वे गते सत्यपूर्वकरणाद्धायाश्चरमसमये हास्यरतिभयजुगुप्सानां बन्धव्यवच्छेदः, हास्यादिषट्कानां चोदयो व्यवच्छिद्यते, देशोपशमनानिधत्तिनिकाचनाकरणव्यवच्छेदश्च । ततोऽनिवृत्तिकरणे प्रविशति । अनिवृत्तिकरणप्रथमसमये 'आयुर्वर्जानां सप्तानां कर्म्मणां स्थितिसत्कर्मान्तःसागरोपमकोटिकोटिप्रमाणं, बन्धः पुनरन्तःसागरोपमकोटिप्रमाण' इति कर्मप्रकृतौ शीवशर्मसूरिपादाः । पञ्चसंग्रहवृत्तौ तु—"अंतो कोडाकोडी बन्धं सन्तं च

सत्तण्हं" इति ग्रन्थेनायुर्वर्जानां सप्तानां कर्म्मणामन्तःसागरोपमकोटाकोटीप्रमाणो बन्धः सत्ता च प्रोक्ता, तथाप्यपूर्वकरणात् संख्येयगुणहीने बन्धसत्कर्मणी द्रष्टव्ये इति विशेषः। सोऽपि बन्धः पूर्वक्रमेण हानिं गच्छति। पूर्णे स्थितिबन्धेऽन्यस्थितिबन्धं पल्योपमसंख्येयभागहीनं करोति, तस्मिन्नपि पूर्णे सत्यन्यं स्थितिबन्धं पल्योपमसंख्येयभागहीनं करोतीत्यादि। अल्पबहुत्वमपि बन्धसत्तापकर्षेऽपि पूर्वक्रमेणैव वेदितव्यम्। तथा च–'सर्वस्तोके नामगोत्रे हीनस्थितिकत्वात् स्वस्थाने परस्परं तुल्ये, ततो ज्ञानावरणदर्शनावरणान्तरायवेदनीयानि विशेषाधिकानि परस्परं तुल्यानि, ततोऽपि मोहनीयं विशेषाधिकमिति'। एतच्चाल्पबहुत्वं सर्वकालमपि द्रष्टव्यम्। अनिवृत्तिकरणे प्रविष्ट उत्कृष्टतोऽपि पल्योपमसंख्येयतमं भागं स्थितिखण्डं चारित्रमोहनीयोपशामकः खण्डयति। केवलमुत्कृष्टाज्जघन्यस्थितिखण्डं लघुतरं द्रष्टव्यम्। स्थितिघातसहस्रेषु गतेषु सत्सु बध्यमानप्रकृतीनां बन्धः सागरोपमसहस्रपृथक्त्वप्रमाणो भवति। ततोऽनिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु सत्स्वेकस्मिंश्चावशिष्टे सत्यसंज्ञिपञ्चेन्द्रियतुल्यः स्थितिबन्धो भवति। तदनन्तरं स्थितिघातपृथक्त्वे गते सति चतुरिन्द्रियस्थितिबन्धतुल्यः स्थितिबन्धः, ततो भूयोऽपि स्थितिघातपृथक्त्वे गते सति त्रीन्द्रियबन्धतुल्यः, ततोऽपि स्थितिखण्डपृथक्त्वे गते सति द्वीन्द्रियबन्धतुल्यः, ततोऽप्येवमेवैकेन्द्रियबन्धतुल्यः, तत ऊर्ध्वं स्थितिबन्धसहस्रेषु गतेषु सत्सु नामगोत्रयोः स्थितिबन्धः पल्योपममात्रः, ज्ञानावरणदर्शनावरणान्तरायवेदनीयानां सार्धपल्योपममानो मोहनीयस्य द्विपल्योपमप्रमाणो भवति। सत्कर्मण्यप्यल्पबहुत्वं बन्धक्रमेण वक्तव्यम्, तद्यथा–'सर्वस्तोकं नामगोत्रयोः परस्परं तुल्यं ततो ज्ञानावरणदर्शनावरणान्तरायवेदनीयानां विशेषाधिकं ततो मोहनीयस्य विशेषाधिकमिति'। यस्य कर्म्मणो यदा पल्योपमप्रमाणः स्थितिबन्धस्तस्य तत्कालादनन्तरमन्योऽन्यः स्थितिबन्धो जायमानः संख्येयगुणहीनो भवति। ततश्च नामगोत्रयोः पल्योपमप्रमाणादन्यं स्थितिबन्धं संख्येयगुणहीनं करोति, शेषकर्म्मणां तु पल्योपमसंख्येयभागहीनं स्थितिबन्धं करोति। ततः कतिपयेषु स्थितिबन्धसहस्रेषु गतेषु सत्सु ज्ञानावरणदर्शनावरणान्तरायवेदनीयानां पल्योपमप्रमाणः स्थितिबन्धो भवति। मोहनीयस्य सार्द्धपल्योपमः, इतो ज्ञानावरणदर्शनावरणान्तरायवेदनीयानां स्थितिबन्धः संख्येयगुणहीनो भवति, मोहनीयस्य तु संख्येयभागहीनो भवति। ततः स्थितिबन्धसहस्रेषु गतेषु सत्सु मोहनीयस्य पल्योपमप्रमाणः स्थितिबन्धो भवति, ततो मोहनीयस्याप्यन्यं स्थितिबन्धं पल्योपमसंख्येयगुणहीनं करोति। तदानीं च शेषकर्म्मणां पल्योपमसंख्येयभागप्रमाणः स्थितिबन्धो भवति, तदुक्तं कर्मप्रकृतिचूर्णौ–"ततो अन्नेण ठितिखंडपुहुत्तेण मोहणिज्जस्स ठितिबन्धो पलिओवमं ताहे मोहाउयवज्जाणं छण्हं कम्माणं पलिओवमस्स संखेज्जति भागो ठितिबन्धो" इति।

अत्राल्पबहुत्वमेतत्–'सर्वस्तोकं नामगोत्रयोः सत्कर्म ततो ज्ञानावरणदर्शनावरणान्तरायवेदनीयानां संख्ययगुणं सत्कर्म परस्परं तुल्यं, ततोऽपि मोहनीयस्य संख्येयगुणं स्थितिसत्कर्मेति'। ततः प्रभूतेषु स्थितिबन्धसहस्रेषु गतेषु सत्सु मोहनीयस्यापि पल्योपमसंख्येयभागमात्रः स्थिति-

बन्धो भवति । तदानीं नामगोत्रयोरन्यं स्थितिबन्धमसंख्येयगुणहीनं शेषकर्म्मणां च संख्येयगुणहीनमारभते । अत्र च सत्कर्म्मापेक्षयाऽल्पबहुत्वमुच्यते—'नामगोत्रयोः सर्वस्तोकं सत्कर्म, ततो ज्ञानावरणदर्शनावरणान्तरायवेदनीयानामसंख्येयगुणं स्वस्थाने तु परस्परं तुल्यं ततो मोहनीयस्य संख्येयगुणं सत्कर्म भवतीति' । ततः स्थितिबन्धसहस्रेषु गतेषु ज्ञानावरणदर्शनावरणान्तरायवेदनीयानां स्थितिबन्धः पल्योपमासंख्येयभागमात्रो भवति । तदुक्तं कर्मप्रकृतिचूर्णौ—"ततो ठितिखंडसहस्सेसु गतेसु अन्नो ठितिबंधो नाणावरणादीणं तिण्हं अन्तराइयस्स य असंखेज्जगुणहीणो आढवेति" इति । अत्र सत्कर्मापेक्षयाल्पबहुत्वम्—'सर्वस्तोकं नामगोत्रयोः स्थितिसत्कर्म, ततो ज्ञानावरणदर्शनावरणान्तरायवेदनीयानामसंख्येयगुणं परस्परं तुल्यं ततो मोहनीयस्यासंख्येयगुणं स्थितिसत्कर्म भवती'ति । ततो बहुषु स्थितिबन्धसहस्रेषु गतेष्वेकहेलयैव मोहनीयस्य स्थितिबन्धो ज्ञानावरणदर्शनावरणान्तरायवेदनीयानामधस्तात् भवति, सत्कर्मापि चैवमेव भवति । ननु पूर्वं ज्ञानावरणादीनामुपर्यसंख्येयगुणं मोहनीयसत्कर्मासीदधुना कथमेकहेलयाधस्ताज्जातमिति चेत्? बृहत्तरस्थितिखण्डस्यापवर्त्तितत्वान्न दोष इति । अत्र चाल्पबहुत्वं—'सर्वस्तोकं नामगोत्रयोः सत्कर्म, ततो मोहनीयस्यासंख्येयगुणं ततोऽपि ज्ञानावरणदर्शनावरणान्तरायवेदनीयानामसंख्येयगुणं परस्परं तुल्यमिति' । ततो बहुषु स्थितिबन्धसहस्रेषु गतेषु सत्सु मोहनीयस्य स्थितिबन्धा नामगोत्राभ्यामसंख्येयगुणहीनो जातः । अत्रापि बृहत्तरस्थितिखण्डापवर्त्तनमेवमग्रेऽपि वाच्यमिति । अत्र स्थितिबन्धमाश्रित्याल्पबहुत्वमुच्यते—'सर्वस्तोको मोहनीयस्य स्थितिबन्धस्ततो नामगोत्रयोरसंख्येयगुणः स्वस्थाने तु परस्परं तुल्यः, ततो ज्ञानावरणादीनां चतुर्णामसंख्येयगुणः परस्परं तुल्यः' । ततः कतिपयेषु स्थितिबन्धसहस्रेषु गतेषु सत्सु वेदनीयं ज्ञानावरणदर्शनावरणान्तरायेभ्योऽसंख्येयगुणं जातमिति न्यायाचार्याः । कर्मप्रकृतिचूर्णौ तु 'कतिपयेष्वि'ति स्थाने 'संख्येयेष्वि' त्युक्तमस्ति । तदनन्तरं च वेदनीयस्यान्यस्थितिबन्धः सर्वेभ्योऽप्यसंख्येयगुणो जायते । अत्र स्थितिबन्धमाश्रित्याल्पबहुत्वं चिन्त्यते—'सर्वस्तोको मोहनीयस्य स्थितिबन्धः, ततो नामगोत्रयोरसंख्येयगुणः स्वस्थाने परस्परं तुल्यस्ततो ज्ञानावरणदर्शनावरणान्तरायाणामसंख्येयगुणः स्वस्थाने तु मिथस्तुल्यः ततोऽपि वेदनीयस्यासंख्येयगुण' इति । ततः स्थितिबन्धसहस्रेषु गतेषु सत्सु ज्ञानावरणदर्शनावरणान्तरायेभ्यो नामगोत्रकर्मणी असंख्येयगुणे जाते । ज्ञानावरणादीन्यसंख्येयगुणहीनानि जातानीत्यर्थः । अत्राल्पबहुत्वं—'सर्वस्तोको मोहनीयस्य स्थितिबन्धस्ततो ज्ञानावरणदर्शनावरणान्तरायाणामसंख्येयगुणः स्वस्थाने परस्परं तुल्यस्ततोऽपि नामगोत्रयोरसंख्येयगुणः स्वस्थाने परस्परं तुल्यः, ततोऽपि वेदनीयस्यासंख्येयगुण' इति पञ्चसंग्रहे, तथा च तद्गाथा—"वीसगअसंखभागे मोहं पच्छा उ घाइ तइयस्स । वीसाण तओ घाई असंखभागंमि बज्झन्ति ॥ १ ॥" अस्याः स्वोपज्ञवृत्तिः—ततः स्थितिबन्धसहस्रेष्वतीतेषु नामगोत्रयोरधो मोहनीयस्य एकवारयैव बन्धो भवति । सर्वस्तोको मोहनीये, तस्मादसंख्येयगुणस्तुल्यश्च नामगोत्रयोः, घातिकर्म्मणामसंख्येयगुणस्तुल्यश्च । 'तइयस्स' त्ति वेदनीयस्यासंख्येयगुणः ।

ततः स्थितिबन्धसहस्रेषु गतेषु 'वीसगणं' ति नामगोत्रयोरेकप्रहारेणैव जातान्यधो घातीनि । मोहनीयस्य स्तोकबन्धः, शेषघातिकर्म्मणामसंख्येयगुणः, नामगोत्रयोः असंख्येयगुणो वेदनीयस्यासंख्येयगुणोऽनेन विधिना बध्यत इति गाथार्थः । **अत्र मलयगिरीयावृत्तिरप्युपन्यस्यते, तथाहि**–"ततः स्थितिबन्धसहस्रेषु गतेषु एकहेलयैव विंशतिकयोः नामगोत्रयोरधस्तादसंख्येयगुणहीनो मोहनीयस्य स्थितिबन्धो भवति । अत्र स्थितिबन्धमाश्रित्याल्पबहुत्वं चिन्त्यते–सर्वस्तोको मोहनीयस्य स्थितिबन्धः, ततो नामगोत्रयोरसंख्येयगुणः, स्वस्थाने परस्परं तुल्यः, ततो ज्ञानावरणादीनां चतुर्णामसंख्येयगुणः, स्वस्थाने परस्परं तुल्यः । स्थितिबन्धसहस्रेष्वतिक्रान्तेषु पश्चात्तृतीयस्य वेदनीयस्य घातीनि ज्ञानावरण-दर्शनावरणीयान्तरायाणि अधो जातानि । अत्र स्थितिबन्धमाश्रित्याल्पबहुत्वं चिन्त्यते–सर्वस्तोको मोहनीयस्य स्थितिबन्धः, ततो नामगोत्रयोरसंख्येयगुणः स्वस्थाने तु तयोः परस्परं तुल्यः, ततोऽपि ज्ञानावरणदर्शनावरणान्तरायाणामसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः, ततोऽपि वेदनीयस्यासंख्येयगुणः । ततः स्थितिबन्धसहस्रेषु गतेषु सत्सु विंशतिकयोर्नामगोत्रयोरसंख्येयभागे घातीनि ज्ञानावरणीयादीनि त्रीणि बध्यन्ते, नामगोत्रापेक्षया ज्ञानावरणीयादीनां स्थितिबन्धोऽसंख्येयगुणहीनो भवतीत्यर्थः । अत्राल्पबहुत्वं–सर्वस्तोको मोहनीयस्य स्थितिबन्धः, ततो ज्ञानावरणदर्शनावरणान्त-रायाणामसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः, ततोऽपि नामगोत्रयोरसंख्येयगुणः, स्वस्थाने तु परस्परं तुल्यः, ततोऽपि वेदनीयस्यासंख्येयगुण" इति । **कर्म्मप्रकृतौ तु वेदनीयस्य विशे-षाधिक उक्तः, तथा च तद्ग्रन्थः**–"तो तीसगाणमुप्पिं च वीसगाइं असंखगुणणाए । तइयं च वीसगाहि य विसेसमहियं कमेणेइ ॥ १ ॥" **वृत्तिः**–"ततोऽनेनैव विधिना स्थितिबन्धसहस्रेषु गतेषु सत्सु त्रिंशत्कानां त्रिंशत्सागरोपमकोटाकोटिस्थितिकानां ज्ञानावरणदर्शनावरणान्तरायाणामुपरि स्थिति-बन्धमधिकृत्य विंशतिके नामगोत्रे जाते, अत्राल्पबहुत्वमिदं–सर्वस्तोको मोहनीयस्य स्थितिबन्धः, ततो ज्ञानावरणदर्शनावरणान्तरायाणामसंख्येयगुणः स्वस्थाने तु परस्परं तुल्यः, ततोऽपि नामगोत्रयोरसंख्ये-यगुणः स्वस्थाने तु परस्परं तुल्यः, ततोऽपि वेदनीयस्य विशेषाधिकः । 'असंखगुणणाए'त्ति यत्र मोहनीयं ज्ञानावरणादिभ्योऽसंख्येयगुणहीनं कृतं ततः प्रभृति सर्वत्राप्यसंख्येयगुणहीनमेव क्रमेण एत्या-गच्छति । तथा तृतीयं वेदनीयं विंशतिकाभ्यां नामगोत्राभ्यां विशेषाधिकं जातं सत्सर्वत्रापि विशेषा-धिकमेव क्रमेण एत्यनुवर्तत" इति । **एवं कर्मप्रकृतिचूर्णौ मलयगिरिकृतकर्मप्रकृतिवृत्तौ च वाच्यम्, तत्त्वं पुनस्तद्विदो विदन्ति। यस्मिन् काले सर्वकर्म्मणां पल्योपमासंख्येयभाग-मात्रस्थितिबन्धो जातः तस्मिन् काले बध्यमानप्रकृतिस्थित्यपेक्षया हीनानामसंख्येयसमय-प्रबद्धानां कर्म्मस्थितीनामेवोदीरणा भवति, शेषस्थितीनां क्षीणत्वसंभवात्, तदुक्तं पञ्चसं-ग्रहवृत्तौ**–"इह यदा पल्योपमासंख्येयभागमात्रं स्थितिबन्धं करोति तदा बध्यमानप्रकृतिस्थित्यपेक्षया याः समयादिहीनाः स्थितयस्ता एवोदीरणामुपगच्छन्ति, नान्याः, ताश्च चिरकालबद्धा एव क्षीण-शेषाः संभवन्तीत्यसंख्येयसमयबद्धानां तदानीमुदीरणा" इति । **ततः स्थितिबन्धसहस्रेषु गतेषु सत्सु मनःपर्यायज्ञानावरणदानान्तराययोः देशघातिनमनुभागं बध्नाति । ततः संख्ये-येषु स्थितिबन्धसहस्रेष्वतिक्रान्तेषु लाभान्तरायावधिज्ञानावरणावधिदर्शनावरणानां देश-**

घातिरसं बध्नाति । ततः संख्येयेषु स्थितिबन्धसहस्रेष्वतिक्रान्तेषु भोगान्तरायाचक्षुर्दर्शनावरणश्रुतज्ञानावरणानां देशघातिरसं बध्नाति । ततः संख्येयेषु स्थितिबन्धसहस्रेषु व्यतिक्रान्तेषु चक्षुर्दर्शनावरणीयस्यानुभागं देशघातिनं बध्नाति । ततोऽपि संख्येयेषु स्थितिबन्धसहस्रेषु व्यतिक्रान्तेषु मतिज्ञानावरणपरिभोगान्तराययोर्देशघातिरसं बध्नाति । ततः संख्येयेषु स्थितिबन्धसहस्रेषु व्यतीतेषु वीर्यान्तरायस्य देशघातिरसं बध्नाति । अश्रेणिगतास्तु सर्वेऽपि सर्वासां देशघातिप्रकृतीनामनुभागं सर्वघातिनमेव बध्नन्ति । ततः संख्येयेषु स्थितिबन्धसहस्रेषु गतेष्वाद्यवर्जद्वादशकषायाणां नवानां नोकषायाणां चान्तरकरणं करोति । तत्रोदयवतीनां प्रथमा स्थितिः स्वोदयकालप्रमाणा, शेषाणामावलिकामात्रा । उदयश्च चतुर्णां संज्वलनानामन्यतमस्य कषायस्य त्रयाणां वेदानां चान्यतमस्य वेदस्य भवति। चतुर्णां कषायाणां त्रयाणां वेदानां च स्वोदयकालप्रमाणमिदम्—स्त्रीवेदनपुंसकवेदयोरुदयकालः सर्वस्तोकः स्वस्थाने तु मिथस्तुल्यः, ततः पुरुषवेदस्य संख्येयगुणः, ततः संज्वलनक्रोधस्य विशेषाधिकः, ततः संज्वलनमानस्य विशेषाधिकः, ततः संज्वलनमायाया विशेषाधिकः, ततः संज्वलनलोभस्य विशेषाधिकः, तदुक्तं पञ्चसंग्रहे—"थीअपुमोदयकाला संखेज्जगुणो उ पुरिसवेयस्स । तस्स वि विसेसअहिओ कोहे तत्तो वि जह कमसो ॥ १ ॥" इति । तत्र संज्वलनक्रोधेन श्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणक्रोधोपशमो न भवति तावत्संज्वलनक्रोधस्योदयः, संज्वलनमानेनोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानावरणमानोपशमो न भवति तावत्संज्वलनमानस्योदयः, संज्वलनमाययोपशमश्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानमायोपशमो न भवति तावत्संज्वलनमायाया उदयः, संज्वलनलोभेन श्रेणिं प्रतिपन्नस्य यावदप्रत्याख्यानप्रत्याख्यानलोभोपशमो न भवति तावत्संज्वलनलोभस्योदयः, ततः परं सूक्ष्मसम्परायाद्धा । तदेवमन्तरकरणमुपरितनभागापेक्षया समस्थितिकमधोभागापेक्षया च विषमस्थितिकं, प्रथमस्थितिप्रतियोगिकतिपयप्रकृत्युदयकालवैषम्यात् । यावता कालेन चान्यं स्थितिबन्धमन्यं स्थितिखण्डं वा घातयति, तावता कालेनान्तरकरणमपि परिसमापयति, त्रयाणां तुल्यकालत्वात् । त्रीण्यपि युगपदारभते युगपच्च परिसमापयतीत्यर्थः, तदुक्तं पञ्चसंग्रहे—"अन्तरकरणेण समं ठिइखंडगबन्धगद्धनिप्पत्ती । अंतरकरणाणंतरसमये जायंति सत्त इमे ॥ १ ॥" इति । तच्चान्तरं प्रथमस्थितेः संख्येयगुणं भवति । अन्तरकरणसत्कदलिकस्य प्रक्षेपविधिश्चायम्—येषां कर्म्मणां तदानीं बन्ध उदयश्च विद्यते तेषामन्तरकरणसत्कं दलिकं प्रथमस्थितौ द्वितीयस्थितौ च प्रक्षिपति, यथा पुरुषवेदोदयारूढः पुरुषवेदस्य । येषां तु कर्म्मणामुदय एव केवलो विद्यते न बन्धस्तेषामन्तरकरणसत्कं दलिकं प्रथमस्थितावेव प्रक्षिपति, न द्वितीयस्थितौ, यथा स्त्रीवेदोदयारूढः स्त्रीवेदस्य । येषां पुनरुदयो न विद्यते किन्तु केवलो बन्धस्तेषामन्तरकरणसत्कं दलिकं द्वितीयस्थितावेव प्रक्षिपति, न प्रथमस्थितौ, यथा संज्वलनक्रोधोदयारूढः संज्वलनमानादीनाम् । येषां पुनर्न बन्धो नाप्युदयस्तेषामन्तरकरणसत्कं दलिकं परप्रकृतौ प्रक्षिपति, यथा द्वितीयतृतीयकषायाणामिति ॥ अत्र द्वेस्थापने—

## ॥ चा० मोहानामन्तरकरणविषमतायाश्चित्रं ॥

इदमन्तरवैषम्यमन्तरकरणक्रियाप्रारम्भे (प्र० स्थितौ वर्त्तमानस्य)

इदमन्तरवैषम्यमेकस्य जीवस्यैकस्मिन् समये न भवेत् परमनेकजीवापेक्षया प्राप्यते, एकजीवस्यैकस्मिन्समये ऽन्यतरस्यैकवेदस्य कषायस्य चान्तरकरणभवनात् ।

अन्तरकरणकाले ऽनुदयवतीनां १९ नाम् — प्र० स्थि० |....| अ न्त र म् (अन्तर्मु०) |.........| आव० — द्वितीया स्थितिः संख्ये० वर्षप्रमाणा

अन्यतरस्यैकस्योदयो भवति:

प्र० स्थितिः अन्तर्मु०
स्त्रीवेदस्य— |.....| अ न्त र म् (अन्तर्मु०) |.........| द्वि० स्थि० सं० व०

प्र. स्थितिः अन्तर्मु०
नपुंवेदस्य— |.......| अ न्त र म् (अन्तर्मु०) |.........| स्त्रीवेदतुल्यः — द्वि० स्थि० सं० व०

प्र. स्थितिः अन्तर्मु०
पुंवेदस्य— |..........| अ न्त र म् (अन्तर्मु०) |.........| नपुं० वेदतः स० गुणा — द्वि० स्थि० सं० व०

प्र० स्थितिः अन्तर्मु०
सं० क्रोधस्य— |............| अ न्त र म् (अन्तर्मु०) |.........| पुं वेदतः विशेषाधिका — द्वि० स्थि० सं० व०

सं० मानस्य— |..............| अ न्त र म् (अन्तमु०) |.........| प्र० स्थि० अन्तर्मु० ( क्रोधतः विशेषाधिका ) — द्वि० स्थि० सं० व०

सं० मायायाः— |................| अ न्त र म् (अन्तर्मु०) |.........| प्र० स्थि० अन्तर्मु० (मानस्य प्र०स्थितितः विशे० ) — द्वि० स्थि० सं० व०

सं० लोभस्य— |..................| अ न्त र म् (अन्तर्मु०) |.........| प्र० स्थि० अन्तर्मु० (मायायाः विशे० ) — द्वि० स्थि० सं० व०

|. . . .| इति बिन्दुयुक्ताः स्थितयः सपौद्गलिकाः ।

॥ इत्थं प्र० स्थितेर्वैषम्यादन्तरकरणमधोभागे विषममुपरितनभागे समस्थितिकं (परस्परापेक्षया) ज्ञेयम् ।

## ॥ चा०मोहनीयान्तरकरणकाले अन्तरकरणदलिकप्रक्षेपविषयस्य चित्रम् ॥

तदानीं मोहस्य बन्धोदयप्रकृतीनां स्थि० कताया अन्त० द० प्रक्षेपविधिः—

○○○○○○○○○○ | ⊙⊙⊙⊙⊙⊙ | ○○○○○○○○○○

प्रथमा स्थितिः । (अन्तर्मु०) अन्तरकरणदलिकप्रक्षेपविषयरूपा

अन्तरकरणस्थानं (अन्तर्मु०) उत्कीर्यमाणाः स्थितयश्च ।

द्वितीया स्थितिः। (उत्कृ०संख्ये० वर्षप्रमाणा) अन्तरकरणदलिकप्रक्षेपविषयरूपा।

अन्तरकरणकाले मोहस्य उदयमाश्रगतानां प्रकृतीनां स्थि० लताया अन्त० क० द० प्रक्षेपविधिः–




अन्तरकरणकाले बध्यमानमोहनीयस्य स्थितिलताया अन्त० क० द० प्र० वि०–






अन्तरकरणकाले अबन्धोदयमोहप्रकृतीनां स्थितिलताया अन्त० क० द० प्र० वि०–






अन्तरकरणद्वितीयसमये वक्ष्यमाणाः सप्ताधिकारा युगपत् प्रवर्तन्ते, तथाहि– १ पुरुषवेदसंज्वलनानामानुपूर्व्या संक्रमः। २ संज्वलनलोभस्य संक्रमाभावः। ३ अन्तरकरणात् प्राग्यद्बद्धं कर्म तद्बन्धावलिकायामतिक्रान्तायां प्राक्तनोदयसत्कर्मानुविद्धमुदीरणामायाति स्म, अन्तरकरणे तु कृते तदनन्तरसमये यद्बद्धं तत् षडावलिकाकालमतीत्योदीरणामायाति। ४ मोहनीयस्यैकस्थानिकमनुभागं बध्नाति। ५ मोहनीयस्य संख्येयवर्षप्रमाणोदीरणा। ६ मोहनीयस्य संख्येयवार्षिको बन्धः स च सर्वोऽपि पूर्वस्मात् पूर्वस्मात् संख्येयगुणहीनो भवति, शेषाणां तु कर्मणामसंख्येयगुणहीनः। ७ तथाऽन्तरकरणकृते सति द्वितीयसमये नपुंसकवेदमुपशमयितुमारभते, तद्यथा—नपुंसकवेदस्य प्रथमसमये स्तोकं प्रदेशाग्रमुपशमयति, ततो द्वितीयसमयेऽसंख्येयगुणं ततोऽपि तृतीयसमयेऽसंख्येयगुणमेवं यावदन्तरकरणचरमसमयः। परप्रकृतिषु च प्रतिसमयमुपशमितदलिकापेक्षयाऽसंख्येयगुणं तावत्संक्रमयति यावद्द्विचरमसमयः। चरमसमये पुनरुपशम्यमानं दलिकं संक्रम्यमाणदलिकापेक्षयाऽसंख्येयगुणं द्रष्टव्यम्। नपुंसकवेदोपशमारम्भप्रथमसमयादारभ्य च सर्वकर्मणामुदीरणा दलिकापेक्षया सर्वस्तोका उदयस्त्वसंख्येयगुणः। तदेवमुपशान्ता दर्शनसप्तकेन सह अष्टौ प्रकृतय इति॥ अत्र स्थापना–

### ॥ नपुंसकोपशमनाक्रमस्य चित्रं ॥

(स्त्रीवेदषट्नोकषायाणामप्युपशमनविधिर्नपुं० वेदतुल्या)

अन्तर्मुहूर्त्तेन

००००००००००००००००००००००००००००००००००००००००
००००००००००००००००००००००००००००००००००००००००
००००००० नपुं० वेदस्य द्वि० स्थितिगतप्रदेशोपचयः ०००००००
००००००००००००००००००००००००००००००००००००००००
००००००००००००००००००००००००००००००००००००००००
००००००००००००००००००००००००००००००००००००००००

प्रतिसमयमुपशम्यमाना प्रदेशसंख्या

| | | |
|---|---|---|
| १ | १० | १४ |
| २ | १५ | १९ |
| ३ | २० | २४ |
| ४ | २५ | २९ |
| ५ | ३० | ३४ |
| ६ | ३५ | ३९ |
| ७ | ४० | ४४ |
| ८ | ४५ | ४९ |
| ९ | ५० | ५४ |
| १० | ५५ | ५९ |
| ११ | ६० | ६४ |
| १२ | ६५ | ६९ |
| १३ | ७० | ७४ |
| १४ | ७५ | ७९ |
| १५ | ८० | ८४ |
| १६ | ८५ | ८९ |
| १७ | ९७ | ९३ |

प्रतिसमयं बध्यमानपरप्रकृतिषु संक्रम्यमाणा प्रदेशसंख्या

अन्त्यसमये संक्रान्तप्रदेशापेक्षयोपशान्ताः प्रदेशा असं०गुणाः । प्रक्षपणा च ग्रन्थानुसारेण कर्त्तव्या ।

अत्र अन्त्यसमयवर्जसर्वेषु समयेषु प्रतिसमयमुपशम्यमानप्रदेशापेक्षयाऽसंख्येयगुणदलिकं संक्रम्यमाणं भवेत् ।

अत्र अन्तर्मु०स्य १७ समयाः कल्पनीयाः । तथात्र 'यच्चतुरधिकत्वं' तत् असं० गुणं ज्ञेयम् ।

नपुंसकवेदानन्तरं स्थितिबन्धसहस्रेषु गतेषु सत्सु पूर्वोक्तप्रकारेण स्त्रीवेदमुपशमयति । स्त्रीवेदस्य च संख्येयतमे भागे उपशान्ते सति ज्ञानावरणदर्शनावरणान्तरायाणां संख्येयवर्षप्रमाणः स्थितिबन्धो भवति। ततोऽन्यो यः स्थितिबन्धो घातिकर्मणां स पूर्वस्मात् पूर्वस्मात् संख्येयगुणहीनः । यत्र च घातिकर्मणां संख्येयवार्षिको बन्धो जातस्ततः प्रारभ्य चक्षुरचक्षुरवधिदर्शनावरण-मतिश्रुतावधिमनःपर्यवज्ञानावरणा-न्तरायपञ्चकानामेकस्थानिकोऽनुभागबन्धः । ततः स्थितिबन्धसहस्रेषु गतेषु सत्सु स्त्रीवेद उपशान्तो भवति । एवमुपशान्ता नव प्रकृतयः । ततः स्त्रीवेदोपशमनानन्तरं पुरुषवेदस्य हास्यादिषट्कस्य च युगपदुपशमनामारभते । सप्तानामपि नपुंसकवेदोक्तप्रकारेणोपशम्यमाना-नामुपशमनाद्धायाः संख्येयतमे भागे गते सति नामगोत्रयोः संख्येयवर्षप्रमाणो बन्धो भवति। वेदनीयस्यासंख्येयवर्षप्रमाणः स्थितिबन्धः, तस्मिँश्च स्थितिबन्धे पूर्णे सत्यन्यः स्थितिबन्धो वेदनीयस्यापि संख्येयवार्षिको भवति। ततः प्रभृति सर्वेषां कर्म्मणां स्थितिबन्धः संख्येयवार्षिको भवति। पूर्वस्मात् पूर्वस्माच्च संख्येयगुणहीनो भवति । ततः स्थितिबन्धसहस्रेषु गतेषु सत्सु सप्तापि नोकषाया उपशान्ता भवन्ति। अत्रायं विशेषः–यस्मिन् समये हा-

॥ पुंवेदोपशमनाक्रमस्य चित्रम् ॥

पुंवेदद्वि० स्थितिगतप्रदेशोपचयः

| समयः | प्रतिसमयमसंख्येयगुणोपशमना (नपुं०वेदवत्), बद्धोपशमना, अन्तर्मुहूर्त्तोपशमना | प्रतिसमयमसंख्येयगुणासंक्रान्तिः (नपुं०वेदवत्), बद्धसंक्रान्तिः, अन्तर्मुहूर्त्तेन संक्रान्तिः |
|---|---|---|
| १ मेसमये | १० | १४ |
| २ ये | १५ | १९ |
| ३ ये | २० | २४ |
| ४ थें | २५ | २९ |
| ५ मे | ३० | ३४ |
| ६ ठे | ३५ | ३९ |
| ७ मे | ४० | ४४ |
| ८ मे | ४५ | ४९ |
| ९ मे | ५० | ५४ |
| १० मे | ५५ | ५९ |
| ११ मे | ६० | ६४ |
| १२ मे | ६५ | ६९ |
| १३ मे | ७० | ७४ |
| १४ मे | ७५ | ७९ |
| १५ मे | ८७ | ८३ |

| समयः | प्रतिसमयमसं० गुणोपशमना, बद्धमात्रस्योपशमना, द्विसमयोनाव० द्विकेनोपशमना | प्रतिसमयं विशेषहीनेन संक्रामति, बद्धमात्रस्य संक्रान्तिः, द्विसमयोनाव० द्विकेन संक्रान्तिः |
|---|---|---|
| १६ मे | ९१ | ८२ |
| १७ मे | ९५ | ८१ |
| १८ मे | ९९ | ८० |
| १९ मे | १०३ | ७९ |
| २० मे | १०७ | ७८ |
| २१ मे | ११० | ७७ |
| २२ मे | ११४ | ७६ |

अत्र यत् 'चतुरधिकत्वं' तदसंख्येयगुणत्वं ज्ञेयं, तथा 'एकहीनत्वं' तत् विशेषहीनत्वं ज्ञेयम् ।

१ तः १५ = अन्तर्मु० समयाः । १६ तः २२ = द्विसमयोनाव० द्विकसमयाः ।

स्यादिषट्कमुपशान्तं तस्मिन्नेव समये पुरुषवेदस्यैकसमयमात्रोदयस्थितिस्तिष्ठति । तदानीं स्थितिबन्धः पुरुषवेदस्य षोडशवार्षिकः संख्येयानि वर्षसहस्राणि च संज्वलनानां भवति । यच्च समयोनावलिकाद्विकेन कालेन बद्धं पुरुषवेदसत्कं दलिकं तदनुपशान्तं वर्तते शेषं सर्वमपि नपुंसकवेदोक्तप्रकारेणोपशान्तमिति, तदुक्तं पञ्चसंग्रहे–"जं समयं उवसंतं छक्कं उदयट्ठिई तया सेसा । पुरिसे समऊणावलिदुगेण बद्धं अणुवसंतं ॥१॥" इति । कर्मप्रकृतावपि–"छस्सुवसमिज्जमाणे सेक्का उदयट्ठिई पुरिससेसा । समऊणावलियदुगे बद्धावि य तावदद्धाए ॥ १ ॥" इति । षडशीतिवृत्तौ तु–"ततोऽनयैव रीत्याऽन्तर्मुहूर्त्तेन हास्यादिषट्कम् । तस्मिँश्चोपशान्ते तत्समयमेव पुरुषवेदस्य बन्धोदयव्यवच्छेदः । ततः समयोनावलिकाद्विकेन पुरुषवेदमुपशमयती"ति । एवं सप्ततिकाभाष्यवृत्तावपि–"ततोऽनयैव रीत्याऽन्तर्मुहूर्त्तेन हास्यादिषट्कोपशमे पञ्चदश । अत्रैव च समये पुंवेदस्य बन्धोदयोदीरणानामधःस्थितेश्च व्यवच्छेद" इति, तत्त्वं पुनस्तद्विदो विदन्ति । पुरुषवेदस्य प्रथमस्थितौ द्व्यावलिकाशेषायां प्रागुक्तलक्षण आगालो व्यवच्छिद्यते

उदीरणा तु भवति । तस्मिन्नेव च समये पुरुषवेदस्य प्रतिग्रहतापगच्छति, संक्रम्यमाणसत्कं दलिकं पुरुषवेदे न संक्रमयतीत्यर्थः । संक्रमकरणे कर्मप्रकृतिपञ्चसंग्रहादौ तद्वृत्तौ च 'प्रथमस्थितौ समयोनावलिकाद्विकशेषायां पुरुषवेदस्यापतद्ग्रहतोक्ता, उपशमनाधिकारे तु पुरुषवेदस्य प्रथमस्थितावावलिकाद्विकशेषायामागालो व्यवच्छिद्यते, तस्मिन्नेव समये तत्पतद्ग्रहताऽप्यपगच्छतीत्युक्तमतोऽस्माभिरपि तथैवोक्तमिति । यदा च पुरुषवेदसत्का समयमात्रा उदयस्थितिरतिक्रान्ता भवति तदैव पुरुषवेदस्य बन्धोऽपि व्यवच्छिद्यते । यदप्यवेदकाद्धायाः प्रथमसमये समयद्वयोनावलिकद्विकबद्धं पुरुषवेदसत्कं दलिकमनुपशान्तं तिष्ठति तदपि समयद्वयोनावलिकाद्विकेन कालेनोपशमयति । उपशमनाविधिश्चायं–प्रथमसमये स्तोकमुपशमयति ततोऽपि द्वितीयसमयेऽसंख्येयगुणं ततोऽपि तृतीयसमयेऽसंख्येयगुणमेवं तावद्वाच्यं यावत्समयद्वयोनावलिकाद्विकचरमसमयः । परप्रकृतिषु च प्रतिसमयं समयद्वयोनावलिकाकालं यावत् यथाप्रवृत्तसंक्रमेण संक्रमयति, तद्यथा–प्रथमसमये प्रभूतं द्वितीयसमये विशेषहीनं ततोऽपि तृतीयसमये विशेषहीनमेवं तावद्वाच्यं यावच्चरमसमयस्तत उपशान्तः पुरुषवेदः । उपरिगता चास्य स्थापना ॥

सर्वाश्च षोडश प्रकृतय उपशान्ता भवन्ति । तदानीं च संज्वलनानां स्थितिबन्धोऽन्तर्मुहूर्त्तोनो द्वात्रिंशद्वर्षप्रमाणो भवति, तदुक्तं कर्मप्रकृतिवृत्तौ सुगृहितनामधेयैः श्रीमदाराध्यप्रवरैर्न्यायाचार्यैः–"ततः पुरुषवेद उपशान्तः । तदानीं च संज्वलनानां द्वात्रिंशद्वर्षप्रमाणोऽन्तर्मुहूर्त्तोनः स्थितिबन्धो भवति" । पञ्चसंग्रहे तु–"बन्धो बत्तीससमा संजलणाणियराण उ सहस्सं" । कर्मप्रकृतिचूर्णौ तु–"पढमसमयअवेयगस्स संजलणाण ठिइबंधो बत्तीसं वरिसाणि अन्तोमुहूत्तूणाणि" इत्यस्मत्प्रतौ लिखितमस्तीति । तत्त्वं पुनस्तद्विदो विदन्ति । ज्ञानावरणदर्शनावरणान्तरायवेदनीयनामगोत्राणां संख्येयानि वर्षसहस्राणि भवन्ति । ननु पुरुषवेदबन्धव्यवच्छेदानन्तरं क्षपकश्रेण्यामश्वकर्णकरणाद्धायां वर्तमानः पुरुषवेदं समयोनावलिकाद्विकेन क्रोधे गुणसंक्रमेण संक्रमयन् चरमसमये सर्वसंक्रमेण संक्रमयति, तद्वदत्रापि गुणसंक्रमो विध्यातसंक्रमो वा कथं न भवतीति चेत्? सत्यम्, परं कर्म्मप्रकृतिचूर्ण्यादौ सर्वत्र यथाप्रवृत्तसंक्रमस्यैवोक्तत्वेनास्माभिरपि तथैवोक्तमिति । यस्मिन् समये पुरुषवेदेनावेदको जातस्तस्मात् समयादारभ्य क्रोधत्रिकं युगपदुपशमयितुमारभते । तदुपशमनां कुर्वन् प्रथमस्थितिबन्धे पूर्णेऽन्यं स्थितिबन्धं संज्वलनानां संख्येयभागहीनं शेषाणां संख्येयगुणहीनं करोति । शेषं स्थितिघातादिकं तथैव । संज्वलनक्रोधस्य प्रथमस्थितौ समयोनावलिकात्रिकशेषायां पतद्ग्रहतापगच्छति । अप्रत्याख्यानप्रत्याख्यानावरणक्रोधदलिकं न तत्र प्रक्षिपति, किन्तु संज्वलनमानादाविति भावः । प्रथमस्थितावावलिकाद्विकशेषायां त्वागालो व्यवच्छिद्यते, आवलिकाशेषायां तूदीरणाया व्यवच्छेदः । उदीरणावलिकायाश्चरमसमये संज्वलनानां स्थितिबन्धश्चत्वारो मासाः शेषकर्मणां तु संख्येयानि वर्षसहस्राणि । संज्वलनक्रोधस्य च तदा बन्धोदयोदीरणाव्यवच्छेदः । तदानीं च मध्यमक्रोधद्विकमुपशान्तम् । प्रथमस्थितिसत्कामावलिकां समयोनावलिकाद्विकबद्धं च मुक्त्वा शेषं

सर्वं संज्वलनक्रोधस्योपशान्तम् । प्रथमस्थितिसत्का चावलिकास्तिबुकसंक्रमेण माने प्रक्षिप्यते । समयोनावलिकाद्विकबद्धं च दलिकं पुरुषवेदोक्तप्रकारेणोपशमयति संक्रमयति च, तद्यथा–प्रथमसमये स्तोकमुपशमयति, ततोऽपि द्वितीयसमयेऽसंख्येयगुणं ततोऽपि तृतीयसमयेऽसंख्येयगुणमेवं समयोनावलिकाद्विकचरमसमयः । परप्रकृतिषु च यथाप्रवृत्तसंक्रमेण समयोनावलिकाद्विकं यावत् पुरुषवेदवत् संक्रमयति । एवं संज्वलनक्रोधः सर्वात्मनोपशान्तः । यदैव संज्वलनक्रोधस्य बन्धोदयोदीरणा व्यवच्छिन्नास्तदैव संज्वलनमानस्य द्वितीयस्थितेर्दलिकं समाकृष्य प्रथमां स्थितिं करोति वेदयते च । तत्रोदयसमये स्तोकं प्रक्षिपति, द्वितीयस्थितावसंख्येयगुणं ततस्तृतीयस्थितावसंख्येयगुणमेवं तावद्वाच्यं यावत्प्रथमस्थितेश्चरमसमयः । प्रथमस्थितिप्रथमसमये संज्वलनमानस्य स्थितिबन्धश्चत्वारो मासा इति पञ्चसङ्ग्रहकर्मप्रकृतिवृत्त्योः । कर्मप्रकृतिचूर्णौ त्वन्तर्मुहूर्त्तन्यूनाश्चत्वारो मासाः, तथाच तद्ग्रन्थः–"ताहे चेव माणस्स पढमठिर्तिं बीयठितीतो दलियं घेत्तूण करेति पढमसमयवेयगो पढमठिर्तिं करेमाणे पढमसमते उदते पदेसग्गं थोवं देति । से काले असंखेज्जगुणाए सेढीए देति जाव पढमठितीए चरमसमयो त्ति । ताहे चेव माणस्स तिविहस्स उवसामगो । तंमि समते माणसंजलणाए ठितीए बंधो चत्तारिमासा अंतोमुहुत्तूणा" एवमग्रेऽपि मायालोभयोः प्रथमस्थितिप्रथमसमये चूर्णिकाराभिप्रायेणान्तर्मुहूर्तोना स्थितिर्वाच्या । ज्ञानावरणीयदर्शनावरणीयान्तरायनामगोत्रवेदनीयानां संख्येयानि वर्षसहस्राणि स्थितिबन्धः । तदानीमेव च मानत्रिकं युगपदुपशमयितुमारभते । संज्वलनमानस्य च प्रथमस्थितौ समयोनावलिकात्रिकशेषायां प्रतिग्रहतापगच्छति, तत्र मध्यममानद्विकस्य दलिकं न प्रक्षिपति, किन्तु संज्वलनमायादौ । संज्वलनमानस्य प्रथमस्थितावावलिकाद्विकशेषायामागालो व्यवच्छिद्यते, तत उदीरणैव केवला प्रवर्त्तते । सापि च यावदावलिकाचरमसमयः । ततः प्रथमस्थितेरावलिका शेषीभूता तिष्ठति । उदीरणावलिकाचरमसमये संज्वलनानां द्विमासिकः स्थितिबन्धः शेषकर्मणां तु संख्येयवर्षाणि । तदानीं संज्वलनमानस्य बन्धोदयोदीरणाव्यवच्छेदः । मध्यममानद्विकं चोपशान्तम् । तदानीं संज्वलनमानस्य समयोनावलिकद्विकबद्धं प्रथमस्थितिसत्कां चावलिकां मुक्त्वा शेषं सर्वमुपशान्तम् । तदानीमेव संज्वलनमायाया द्वितीयस्थितेर्दलिकं समाकृष्य प्रथमां स्थितिं करोति वेदयते च । संज्वलनमानस्य प्रथमस्थितिसत्कामावलिकां स्तिबुकसंक्रमेण संज्वलनमायायां संक्रमयति । समयोनावलिकाद्विकबद्धं च पुरुषवेदोक्तप्रकारेणोपशमयति संक्रमयति च । संज्वलनमायोदयप्रथमसमये च मायालोभयोः स्थितिबन्धो द्वौ मासौ, शेषकर्मणां संख्येयानि वर्षाणि । तत्समयादेवारभ्य तिस्रोऽपि माया युगपदुपशमयितुमारभते । ततो मध्यममायाद्विकसत्कं दलिकं संज्वलनमायायाः प्रथमस्थितौ समयोनावलिकात्रिकशेषायां बध्यमानायां संज्वलनमायायां न प्रक्षिपति, किन्तु संज्वलनलोभे । आवलिकाद्विकशेषायां त्वागालो व्यवच्छिद्यते, तत उदीरणैव केवला प्रवर्तते, सापि तावत् यावदावलिकाचरमसमयः । तस्मिंश्च समये संज्वलनमायालोभयोः स्थितिबन्ध एको मासः शेषकर्मणां तु संख्येयानि वर्षाणि । तदानीमेव च संज्वलनमायाया बन्धोदयोदीरणाव्य-

वच्छेदः, मध्यमं मायाद्विकं चोपशान्तम्। संज्वलनमायायाः प्रथमस्थितिसत्कामावलिकां समयोनावलिकाद्विकबद्धं चानुपशान्तं तिष्ठते, शेषं सर्वमुपशान्तम्। ततोऽसौ लोभवेदको जातस्तस्मिंश्च समये संज्वलनलोभस्य द्वितीयस्थितेः सकाशाद्दलिकमाकृष्य प्रथमस्थितिं करोति वेदयति च। पूर्वोक्तां च मायायाः प्रथमस्थितिसत्कामावलिकां स्तिबुकसंक्रमेण संज्वलनलोभे संक्रमयति। समयोनावलिकाद्विकबद्धाश्च लताः पुरुषवेदक्रमेणोपशमयति, संक्रमयति च संज्वलनलोभे। लोभस्य द्वितीयस्थितेर्दलिकमाकृष्य प्रथमां त्रिविभागोपेतां स्थितिं करोति, तद्यथा–प्रथमो विभागोऽश्वकर्णकरणाद्धासंज्ञः, द्वितीयकिट्टिकरणाद्धासंज्ञः। एतयोर्द्वयोर्विभागयोर्दलिकनिक्षेपो भवति। किमुक्तं भवति? द्वितीयस्थितेर्दलिकं समाकृष्य द्विभागप्रमाणां प्रथमां स्थितिं करोतीति। तृतीयः पुनः किट्टिवेदनाद्धा संज्वलनलोभोदये वर्तमानः प्रथमसमये त्रीनपि लोभान् युगपदुपशमयितुमारभते। उपशमनाविधिश्च प्राग्वत्। तत्राश्वकर्णकरणाद्धायां वर्तमानः पूर्वस्पर्द्धकेभ्यः प्रतिसमयं दलिकं गृहीत्वा तस्यात्यन्तं नीरसतामापाद्यापूर्वस्पर्द्धकानि करोति। संक्रमितमायादलिकसम्बन्धिभ्यः पूर्वबद्धसंज्वलनलोभसत्केभ्यो वा पूर्वस्पर्द्धकेभ्यः प्रतिसमयं दलिकं गृहीत्वा तस्य तत्कालबध्यमानसंज्वलनलोभस्पर्द्धकवदत्यन्तनीरसतामापादयन्नपूर्वं दलिकं प्रतिसमयं गृह्णन्नपूर्वस्पर्द्धकानि करोति। इह तावदनन्तानन्तपरमाणुनिष्पन्नान् स्कन्धान् जीवः कर्मतया गृह्णाति। तत्र चैकस्मिन् स्कन्धे यः सर्वजघन्यो रसः सोऽपि सर्वजीवानन्तगुणान् रसाविभागान् प्रयच्छति। तदुपेतपरमाणूनां समुदायः प्रथमा वर्गणा। ततः क्रमेणैकोत्तररसाविभागवृद्ध्या सिद्धानन्तभागाभव्यानन्तगुणा वर्गणा वाच्याः। तावद्वर्गणासमुदायः स्पर्द्धकमुच्यते। इत ऊर्ध्वमेकोत्तरवृद्ध्या वर्धमानो रसो न लभ्यते, किन्तु सर्वजीवानन्तगुणैरेव रसाविभागैः। ततः प्राक्तनक्रमेण द्वितीयं स्पर्द्धकमारभ्यते। एवं तृतीयादीनि तावद्वाच्यानि यावदनन्तस्पर्द्धकानि। एतेभ्य एवेदानीं प्रथमादिवर्गणा गृहीत्वा विशुद्धिप्रकर्षवशादनन्तगुणहीनरसाः कृत्वा पूर्ववत् स्पर्द्धकानि करोति। न चैवंभूतानि कदापि पूर्वं कृतानि ततोऽपूर्वाणीत्युच्यन्ते। एवमपूर्वाणि स्पर्द्धकानि कुर्वतः संख्येयेषु स्थितिबन्धसहस्रेषु गतेषु सत्स्वश्वकर्णकरणाद्धा परिसमाप्यते। ततः किट्टिकरणाद्धायां प्रविशति। तदानीं च संज्वलनलोभस्य दिनपृथक्त्वप्रमाणः स्थितिबन्धः, शेषकर्मणां वर्षपृथक्त्वप्रमाणः। किट्टिकरणाद्धायां च वर्तमानः पूर्वस्पर्द्धकेभ्योऽपूर्वस्पर्द्धकेभ्यश्च दलिकं गृहीत्वा प्रतिसमयमनन्ताः किट्टीः करोति। किट्टयो नाम पूर्वस्पर्द्धकेभ्यश्च वर्गणा गृहीत्वा तासामनन्तगुणहीनरसतामापाद्यैकोत्तरवृद्धित्यागेन बृहदन्तरालतया व्यवस्थापनं, यथा यासामेव वर्गणानामसत्कल्पनयाऽनुभागभागानां शतमेकोत्तरं द्व्युत्तरादि वासीत् तासामेवानुभागभागानां पञ्चकस्य दशकस्य पञ्चदशकादेश्च व्यवस्थापनमिति। ताश्चैकस्मिन् अनुभागस्पर्द्धके यावन्त्यो वर्गणास्तासामनन्ततमे भागे यावन्त्यो वर्गणास्तावत्प्रमाणाः प्रथमसमये करोति। ताश्चानन्ताः सर्वजघन्यादनुभागादप्यनन्तगुणहीनरसाः करोति। द्वितीयसमये प्रथमसमयकिट्टिभ्योऽसंख्येयगुणहीनास्तृतीयसमये ततोऽप्यसंख्ये-

यगुणहीना एवं तावद्वाच्यं यावत् किट्टिकरणाद्धाचरमसमयः । प्रतिसमयं दलिकमसंख्येयगुणं, तद्यथा–प्रथमसमये सकलकिट्टिगतं दलिकं सर्वस्तोकं ततो द्वितीयसमये सकलकिट्टिगतमसंख्येयगुणं ततोऽपि तृतीयसमये समस्तकिट्टिगतं दलिकमसंख्येयगुणमेवं तावद्वाच्यं यावत् किट्टिकरणाद्धायाश्चरमसमयः । अनुभागस्तु प्रथमसमयासु कृतासु किट्टिषु सर्वप्रभूतः, ततो द्वितीयसमयासु कृतासु किट्टिष्वनन्तगुणहीनः, ततस्तृतीयसमयकृतास्वनन्तगुणहीनः, एवं तावद्वाच्यं यावत् किट्टिकरणाद्धाचरमसमयः । तथा प्रथमसमयेषु या निवर्त्तिताः किट्टयस्तासां मध्ये या मन्दरसास्तासां दलिकं सर्वप्रभूतं, ततोऽनन्तरेणानन्तगुणेनानुभागेनाधिकायां द्वितीयस्यां किट्टौ दलिकं विशेषहीनं ततोऽप्यनन्तरेणानन्तगुणानुभागेनाधिकायां तृतीयस्यां किट्टौ दलिकं विशेषहीनमेवमनन्तरानन्तरानन्तगुणाधिकानुभागासु किट्टिषु विशेषहीनं विशेषहीनं दलिकं तावद्वाच्यं यावत् सर्वोत्कृष्टरसा किट्टिः । एवं प्रतिसमयनिवर्त्तितानामपि किट्टीनां भावनीयम् । तथा प्रथमसमयकृतानां किट्टीनां मध्ये या सर्वजघन्यानुभागा किट्टी सा सर्वस्तोकानुभागा, ततो द्वितीयाऽनन्तगुणानुभागा, ततोऽपि तृतीयाऽनन्तगुणानुभागा एवं तावद्वाच्यं यावत् प्रथमसमयकृतानां किट्टीनां मध्ये सर्वोत्कृष्टा किट्टिः । एवं द्वितीयादिसमयकृतानामपि किट्टीनां प्ररूपणा कर्त्तव्या । तथा किट्टीनां परस्परं प्रदेशानामल्पबहुत्वमुच्यते–तत्र प्रथमसमयकृतानां किट्टीनां मध्ये या सर्वबहुप्रदेशा किट्टिः सा स्तोकप्रदेशा तदपेक्षया द्वितीयादिसमयकृतानां किट्टीनां मध्ये या सर्वाल्पप्रदेशा साऽसंख्येयगुणा, ततोऽपि तृतीयसमयकृतानां किट्टीनां मध्ये या सर्वाल्पप्रदेशा सा असंख्येयगुणप्रदेशा एवं तावद्वक्तव्यं यावच्चरमसमयः । तथा प्रथमसमयकृतानां किट्टीनां मध्ये या सर्वजघन्यानुभागा किट्टिः सा प्रभूतानुभागा ततो द्वितीयसमयकृतानां किट्टीनां मध्ये या सर्वोत्कृष्टानुभागा किट्टी साऽनन्तगुणहीना, तथा द्वितीयसमयकृतानां किट्टीनां मध्ये या सर्वमन्दानुभागा किट्टी तदपेक्षया तृतीयसमयकृतानां किट्टीनां मध्ये या सर्वोत्कृष्टानुभागा किट्टिः साऽनन्तगुणहीना एवं तावद्वाच्यं यावच्चरमसमयः । अत्र स्थापना—

॥ किट्टिकरणाद्धायां सं० लोभद्वि० स्थितौ किट्टिकरणविधेश्चित्रम् ॥

प्रथमसमयकृताः किट्टयः १२ (वस्तुतोऽ-
नन्ताः)। अनुभागमधिकृत्याद्यसर्वोत्कृष्टरसा-
पि जघन्यानुभागस्पर्धकतोऽनन्तगुणही-
नाः प्रदेशसमुदायः सर्वस्तोकः ।

सर्वोत्कृष्टानुभागा किट्टिः सर्वाल्पप्रादेशिकी प्रथमा ततोऽनं० गु० हीनरसा द्वितीयादयः किट्टयोऽनुक्रमेण विशेषाधिकप्रादेशिक्यो ज्ञेयाः ।[1]

१ सर्वेऽपि बिन्दवो यथोत्तरमधिकाधिकरूपेण बोद्धव्याः ।

उपरितोऽनं० गु० हीनरसासं० गु०प्रादेशिकी प्रथमा कीट्टिः। ततोऽनन्तगु० हीनरसा विशेषाधिकप्रादेशिक्यश्च द्वितियाद्यः कि०। ” ” ”
” ” ” ”
” ” ” ”
” ” ” ”
” ” ” ”
” ” ” ”
” ” ” ”

द्वि० समयकृताः किट्टयः ११ (वस्तुतोऽनन्ताः) परं प्र० स० कृतकिट्टिभ्योऽसंख्येयगु० हीनाः। अनुभागसमुदायोऽनन्तगुणहीनः। प्रदेशसमुदायोऽसंख्येयगुणः (प्र० समयतः)

उपरितनादनंत गु०हीनरसासं० गु०प्रादे०प्रथमा कि०। ततोनं० गु० ही० रसा विशेषाधिकप्रा० द्वि० कि०। ” ” ”
” ” ” ”
” ” ” ”
” ” ” ”
” ” ” ”
” ” ” ”

तृतियसमयकृताः किट्टयोऽनन्ताः द्वि० परं स०कृतकिट्टिभ्योऽसं० गु० हीनास्तदपि ९। अनुभागसमु० अनं० गु० हीनः। प्रदे० समु० असं० गुणः।

उपरितोऽनं० गु० हीनासं० गु० प्रादे० प्रथमा। ततोऽनं० गु० ही० रसा विशेषाधि० प्रादे० द्वि० कि०। ” ” ”
” ” ” ”
” ” ” ”
” ” ” ”

चतुर्थसमयकृतकिट्टयोऽनन्ताः परं तृ० समयतोऽसं० गु० हीनास्तदपि ७। अनु०समु०अनं०गु० हीनः। प्रदे० समु० असं० गुणः।

उपरिष्टादनं० गु० हीनासं० गु० प्रा०प्र०कि०। ततोऽनं०गु०ही० रसा विशेषा०प्रा० द्वि० कि०।
” ” ” ”

सर्वजघन्यानुभागा किट्टिः, सर्वोत्कृष्टप्रादेशिकी, सर्वान्तिमा।

पञ्चमसमयकृतकिट्टयोऽनन्ताः परं च० समयतोऽसं० गु० हीनाः तदप्यसत्कल्पनया।५ अनु० समु० अनं०गु० हीनः। प्रदे० समु० असं० गुणः।

इति अनुभागकिट्टिरूपा रेखाः।

इति प्रत्येकानुभागकिट्टिगतप्रदेशाः। (पंक्तिरूपाः)

किट्टीकरणाद्धायाः समयोनासु तिसृष्वावलिकासु शेषासु संज्वलनलोभस्य पतद्ग्रहतापगच्छति, अप्रत्याख्यानप्रत्याख्यानावरणलोभद्विकं संज्वलनलोभे न प्रक्षिपतीत्यर्थः। मध्यमलोभद्विकदलिकं तु स्वस्थान एवोपशमं नीयते। किट्टीकरणाद्धाया आवलिकाद्विकशेषायां त्वागालो व्यवच्छिद्यते किन्तु केवलोदीरणा प्रवर्तते। सापि तावत् यावदावलिका। तथा

किट्टीकरणाद्धायाः संख्येयेषु भागेषु सत्सु संज्वलनलोभस्यान्तर्मुहूर्त्तप्रमाणः स्थितिबन्धः। ज्ञानावरणदर्शनावरणान्तरायाणां दिनपृथक्त्वप्रमाणो नामगोत्रवेदनीयानां प्रभूतवर्षसहस्रप्रमाणः। किट्टिकरणाद्धायाश्चरमसमये संज्वलनलोभस्यान्तर्मुहूर्त्तप्रमाणः केवलमिदमन्तर्मुहूर्त्तं लघुतरमवसेयम्। ज्ञानावरणदर्शनावरणान्तरायाणामन्तरहोरात्रं नामगोत्रवेदनीयानां किञ्चिदूनवर्षद्वयप्रमाणः। उदीरणावलिकायाश्चरमसमये संज्वलनलोभस्य बन्धबादरोदयोदीरणा व्यवच्छिद्यन्ते। अनिवृत्तिबादरसम्परायगुणस्थानमपि परिसमाप्यते। अनिवृत्तिकरणचरमसमये मध्यमलोभद्विकमुपशान्तम्। तदानीं च संज्वलनलोभस्य समयोनावलिकाद्विकबद्धं, द्वितीयस्थितिगतं किट्टीकृतं किट्टीकरणाद्धायां शेषीभूतं, चरमावलिकागतं च मुक्त्वा शेषं सर्वमुपशान्तं वर्त्तते, तदुक्तं पञ्चसंग्रहे—"लोभस्स अणुवसंतं किट्टी उदयावली य पुव्वुत्तं। बायरगुणेण समगं दोण्ह वि लोभा समुवसंता ॥ १ ॥" इति। ततः किट्टिवेदनाद्धायां प्रविशति। तत्र प्रविष्टः प्रथमसमये सूक्ष्मसम्पराय उच्यते। सूक्ष्मसम्परायाद्धायां चान्तर्मौहूर्त्तिक्यामुपविष्टः सन् संज्वलनलोभस्योपरितनस्थितेः कतिपयकिट्टीराकृष्य सूक्ष्मसम्परायाद्धातुल्यामधस्तनस्थितिं कुरुते वेदयते च। किट्टीकरणाद्धायाः चरमावलिकागतं दलिकं स्तिबुकसंक्रमेण संक्रमयति। सूक्ष्मसम्परायाद्धायाः प्रथमसमये प्रथमान्तिमसमयकृताः किट्टीः वर्जयित्वा शेषसमयकृताः किट्टयः प्रायः उदयमागच्छन्ति। प्रथमस्थितिभावानाक्रान्तकिट्टिव्यवच्छेदार्थं प्रायः पदम्। तथा चरमसमयकृतानां किट्टीनामधस्तादसंख्येयभागं प्रथमसमयकृतानां किट्टीनामुपरितनमसंख्येयभागं वर्जयित्वा शेषाः किट्टीरुदीरयति। द्वितीयसमये उदयप्राप्तानां किट्टीनामसंख्येयभागं मुञ्चति, उपशान्तत्वेनोदये न ददाति। अपूर्वं चासंख्येयभागमनुभवनार्थमुदीरणाकरणेन गृह्णाति। एवं प्रतिसमयमियतो भागस्य ग्रहणमोक्षौ कुर्वता तावद्गन्तव्यं यावत् सूक्ष्मसम्परायचरमसमयः। द्वितीयस्थितिगतमपि दलिकं सूक्ष्मसम्परायप्रथमसमयादारभ्य सकलामपि सूक्ष्मसम्परायाद्धां यावत् पूर्ववदुपशमयति। समयोनावलिकाद्विकबद्धमपि च दलिकमुपशमयति। सूक्ष्मसम्परायाद्धायाश्चरमसमये ज्ञानावरणदर्शनावरणान्तरायाणामन्तर्मुहूर्त्तप्रमाणः स्थितिबन्धः। यशःकीर्त्तिनाम्न उच्चैर्गोत्रस्य च षोडशमुहूर्त्तप्रमाणः स्थितिबन्धः। वेदनीयस्य चतुर्विंशतिमुहूर्त्तप्रमाणः स्थितिबन्धः। तस्मिन्नेव समये मोहनीयमुपशान्तम्। शातवेदनीयं विहाय शेषकर्मणां बन्धव्यवच्छेदश्च। ततोऽनन्तरसमये उपशान्तमोहो भवति। तत्र चोपशान्ताद्धासंख्येयतमभागसमयप्रमाणा गुणश्रेणी रचयति। सर्वा अपि गुणश्रेणयः कालापेक्षया प्रदेशापेक्षया च तुल्याः। ताश्चान्तर्मुहूर्त्तप्रमाणा उपशान्तमोहगुणस्थानकालं यावत् करोति, अवस्थितपरिणामरूपहेतोरेकरूपत्वात्। दर्शनत्रिकं मुक्त्वोपशान्तमोहनीयं संक्रमोद्वर्त्तनापवर्तनोदीरणानिधत्तिनिकाचनाकरणानामयोग्यं भवति। दर्शनत्रिके तु संक्रमापवर्तने भवतः, नान्यत्करणं, तत्र मिथ्यात्वमिश्रयोः सम्यक्त्वे संक्रमः, अपवर्त्तना त्रयाणामपि भवति। इत्थं च क्रोधेन श्रेणिं प्रतिपन्नस्य द्रष्टव्यम्। यदा तु मानेन श्रेणिं प्रतिपन्नस्तदा मानमनुभवन्नेव संज्वलनक्रोधं नपुंसकवेदोक्तप्रकारेण प्रथमत उपशमयति, ततः क्रोधोक्त-

प्रकारेण मानत्रिकमुपशमयति, शेषं तथैव । यदा च मायया श्रेणिं प्रतिपन्नस्तदा मायां वेदयन्नेव नपुंसकवेदोक्तप्रकारेण प्रथमतः क्रोधत्रिकं ततो मानत्रिकं चोपशमयति । ततः क्रोधोक्तप्रकारेण मायात्रिकं शेषं तथैव । यदा तु लोभेन श्रेणिं प्रतिपन्नस्तदा लोभमनुभवन् नपुंसकवेदोक्तप्रकारेण क्रोधत्रिकं ततो मानत्रिकं ततो मायात्रिकं चोपशमयति । ततो लोभत्रिकमुक्तप्रकारेणोपशमयतीति । अत्र स्थापना—

॥ चारित्रमोहस्य सर्वोपशमनानुक्रमः ॥ ( पुंवेदसंज्वलनक्रोधोदयाभ्याम् )

प्रस्थापकः—उपशमसम्यग्दृष्टिः क्षायिकसम्यग्दृष्टिर्वा । प्ररूपणा त्वधोमुखी कार्या ।

संज्ञार्थः—सं० व०=संख्येयानि वर्षाणि । शेषवर्ज=प्रथमस्थितेश्चरमावलिकासमयोनावलिकाद्विकेन बद्धं दलिकं च वर्जयित्वा । ० ०̩ ० ०̩ ० ०̩ ०=स्थितिघातसहस्राणि । '० ०̩ ० ०̩' इत्यत्र बिन्दवस्तदावारककर्मोदयसूचकाः, तदधस्तन्यो रेखास्तु स्थितिघातसूचनार्थम् ।

क्रियाक्रमः

| गुणस्थानम् | काल: | | क्रिया |
|---|---|---|---|
| ७ मगुणस्थानम् | विशुद्धिः ( अन्तर्मु० ) | | अतोऽन्यस्थितिबन्धः । ( पल्यसंख्येयभागहीनक्रमेण ) |
| | यथाप्रवृत्तम् ( अन्तर्मु० ) | | अत्र प्रथमसमयादारभ्य स्थितिघातादि ५ पदार्था युगपत् प्रवर्तन्ते । |
| ८ मगुणस्थानम् | अपूर्वकरणम् ( अन्तर्मु० ) | १ संख्येयतमो भागः | अत्र निद्राप्रचलयोर्बन्धविच्छेदः । |
| | | संख्येया भागाः — स्थि० घातसहस्राणि | अत्र देव २-पञ्चे०-वै० २-तै०-का०-समच०-वर्णादि ४-अगु०-उप०-परा०-उश्वा०-त्रस ९-सुखग०-निर्माण-जिन-आहा० २-इति ३० प्रकृतीनां बन्धविच्छेदः । |
| | | स्थितिखण्डपृथक्त्वानि | अत्र चरमसमये हास्यरतिभयकुत्सानां बन्धविच्छेदः । हास्यषट्कस्योदयविच्छेदः । सर्वेषां देशोप०-निध०-निकाचनाया अपि विच्छेदः । |

अ नि वृ त्ति क र ण प्र

स्थितिघातसहस्राणि

अत्रापि प्रथमसमयतः पूर्ववत् ५ पदार्थाः प्रवर्तन्ते। (परमत्र प्रथमसमये पञ्चसंग्रहमतेन बन्धः सत्ता च अन्तः को० को० सागरप्रमाणा, कर्मप्रकृतिमतेन बन्धः कोटिसागरप्रमाणः सत्ता त्वन्तः को० को० प्रमाणा। यद्यपि प्रागुक्तेष्वपि करणेष्वेतावान् बन्ध एतावदेव सत्कर्म सदा कर्मणां प्राप्यते, तथाप्यत्र बन्धसत्कर्मणी तदपेक्षया संख्येयगुणहीने द्रष्टव्ये इति विशेषः। सोऽपि बन्धः पूर्वक्रमेण हानिं गच्छति)

अनिवृत्तिसंख्येयाभागाः। इत ऊर्ध्वमेक एव भागः शेषोऽवतिष्ठते।

अत्र सागरोपमसहस्रपृथक्त्वः स्थितिबन्धः। (७ कर्मणाम्)

स्थि० घा० पृथ०

अत्रासंज्ञिपञ्चे० तुल्यस्थि० बन्धः।

स्थि० घा० पृथ०

अत्र चतुरिन्द्रियतुल्यस्थितिबन्धः।

स्थि० घा० पृ०

अत्र त्रीन्द्रियतुल्यस्थितिबन्धः।

स्थि० घा० पृ०

अत्र द्वीन्द्रियतुल्यस्थितिबन्धः।

स्थि० ब० स०

अत्रैकेन्द्रियतुल्यस्थितिबन्धः।

इतः प्रारभ्य ७ कर्मणां यस्य कर्मणः पल्यो० मात्रस्थि० बन्धः तस्यान्यस्थि० बन्धः संख्ये० गु० हीनः, शेषाणां पूर्ववत्। अत्र सत्कर्मापेक्षयाल्पबहुत्वं–

| | | नाम० गो० | ज्ञाना० | मोहस्य | |
|---|---|---|---|---|---|
| अ | स्थि० बन्ध सह० | १ प० सहस्राभिः सं० गु० हानिभिः | १॥ प० सहस्राभिः सं० भा० हानिभिः | २ प० सं० भिः संख्येय भागहानिभिः | सर्वस्तोकं सत्कर्म नामगोत्रयोः। ततो ज्ञानदर्शनावरणवेदनीयान्तरायाणां विशेषाधिकम्। ततो मोहस्य विशेषाधिकम्। |
| नि | स्थि० बन्ध सह० | अत्र प० सं० भागः | १ प० सहस्राभिः सं० गु० हानिभिः | १॥ प० | |
| वृ | | | | | |
| त्ति | स्थि० बन्ध सह० | अत्र प० सं० भागः | प० सं० भागः | १ प० सह० सं० गु० हानिभिः | अत्र सर्वस्तोकं नामगोत्रयोः सत्कर्म ततो ज्ञानावरणादिचतुर्णां संख्येयगुणं ततो मोहनीयस्य संख्येयगुणम्। |
| क | स्थि० बन्ध सहस्रा० | अत्र प० सं० भागः अतःसह० असं० गु० हानिभिः | प० सं० भागः | प० सं० भागः | अत्र सर्वस्तोकं नामगोत्रयोः सत्कर्म ततो ज्ञानावरणादिचतुर्णामसंख्येयगुणं ततोऽपि मोहनीयस्य संख्येयगुणम्। |
| र | स्थि० बन्ध सह० | अत्र प० असं० भा० | प० असं० भागः अतः असं० गु० हानिः | प० सं० भागः | अत्र सर्वस्तोकं नामगोत्रयोः सत्कर्म। ततो ज्ञानावरणादिचतुर्णामसंख्येयगुणम्। ततो मोहस्यासंख्येयगुणम्। अतो मोहनीयस्य बृहदपवर्तना प्रवर्तते। |
| ण | स्थि० बं० सह० | प० असं० | प० असं० | प० असं० | अत्र सर्वस्तोकं नामगोत्रयोः सत्कर्म ततो मोहस्यासंख्येयगुणं ततो ज्ञानावरणादीनां चतुर्णामसंख्येयगुणम्। इतोऽसंख्येयसमयबद्धाः स्थितय एवोदीरणामागच्छन्ति नान्याः। |
| म | स्थि० बन्ध स० | प० अ० | प० अ० | प० अ० | अत्र सर्वस्तोको मोहस्य स्थितिबन्धः। ततो नामगोत्रयोरसंख्येयगुणः। ततो ज्ञानावरणादीनामसंख्येयगुणः। |

| अनिवृत्तिकरण | | | | | |
|---|---|---|---|---|---|
| स्थि० बन्धसहस्राणि | अन्तःना० गो० प० अ० | ज्ञा० द० अ० प० अ० | अं० प० अ० | मोह० प० अ० | अत्र सर्वस्तोको मोहस्य स्थितिबन्धः, ततो नामगोत्रयोरसंख्येयगुणस्ततो ज्ञानदर्शनावरणान्तरायाणामसंख्येयगुणस्ततो वेदनीयस्यासंख्येयगुणः। अतो मनःप० दानान्तराययोर्देशघात्यनुभागबन्धः। |
| स्थि० बन्धसहस्राणि | प० असं० भा० | प० असं० भा० | प० असं० भा० | प० असं० भा० | अत्र सर्वस्तोको मोहस्य स्थितिबन्धः ततो ज्ञानावरणादित्रिकस्यासंख्येयगुणस्ततो नामगोत्रयोरसंख्येयगुणस्ततो वेदनीयस्य 'विशेषाधिक' इति कर्म प्र० 'असंख्येयगुण' इति पञ्चसंग्रहे। अतो लाभान्त० अवधि २ कयोश्च दे० घा० अनु० बन्धः। |
| स्थि० बन्धसहस्रा० | | | | | ...अतः भोगा०-अचक्षु०-श्रुतज्ञाना-व० नां दे० घा० अनु० बन्धः। |
| स्थि० बन्धसहस्रा० | | | | | ...अतः चक्षु० स्य दे० घा० बन्धः। |
| स्थि० बन्धसहस्राणि | | | | | ...अतः उपभो०-मत्योर्दे० घा० बं०। |
| स्थि० बन्धसह० | | | | | ...अतः वीर्यान्त० स्य दे० घा० बं०। |

सं० वा० अतः २१ मोहानामन्तरकरणं प्रारभते। अनन्तरसमये मोहस्य ७ पदार्थां युगपत् प्रवर्तन्ते- १ अनुभा० बं० १ स्थानकः। २ उदीरणा सं० वार्षिका। ३ स्थि० बं० सं० वा०। ४ पु०—संज्व० नां आनुपू० संक्रमः। ५ सं०लोभस्य असंक्रमः। ६ सर्वासामप्युदीरणा बन्धतः ६ आव० अनन्तरं। ७ मोहान्यस्थि० बन्धः सं० गु० हीनः, शेषाणां असं० गु० हीनः। नपुंसकोपशमना च।

अत्र नपु० उपशान्तः। अतः सर्वासु उदी०तः उदयदलिकमसं०गुणम्।

···अतः स्त्रीवेदोपशमनाप्रारम्भः।

···अतः सप्त दे० घा० ज्ञा० द० नाम् १ स्थान० अनु० बन्धः।

···अत्र स्त्रीवेद उपशान्तः। अनन्तरसमयात् ६ नोक० पुंवे० उपशमना प्रारम्भः।

अतः सं० गु० हान्या स्थि० बन्धः

अतः असं० गु० हान्या ,,

अतः असं० गु० हान्या ,,

सं०वा० अतः सं० गु० हान्या

अतः असं० गु० हान्या ,,

स्थि० बन्धसहस्राणि ( अन्तर्मुहूर्तं वा )

नपुंसकोपशमनाद्धा

उपशमनाद्धायाः १ संख्येयभागः

स्त्रीवेदोपशमनाद्धा ( अन्तर्मु० )

स्थि० बन्धसहस्रा०

नोकषायोपशमनाद्धायाः १ संख्ये० भागः

६ नो क षा यो- पुं० वे-

अ न्त र क र ण प्र

सं० वा०

सं० वा०

अतः ७ कर्मणां सं० वा० स्थि० बं०।

अत्र पुंवेदागालविच्छेदः, पतद्ग्रहताऽपि।

अत्र पुंवेदोदयोदीरणाविच्छेदः।

अत्र ६ नोकषाया उपशान्ताः । पुंवेदस्य समयमात्रा शेषास्थितिः । पुं० १६ वर्षः संज्व० स्य च संख्येयवर्षसहस्राणि स्थितिबन्धः।

अत्र वेदस्यावेदकोऽबन्धकोऽपि । द्विसमयोनाव० द्विकेन बद्धं दलिकं वर्जशेषं सर्वं पुंवेददलिकमुपशान्तं । क्रोध ३ कोपशमनाप्रारम्भश्च।

| सैव सं० वा० | सैव सं० वा० | सैव सं० वा० | अन्तर्मु० हीन ३२ वर्ष | अत्र पुंवेद उपशान्तः। |
|---|---|---|---|---|

अत्र सं० क्रोधस्य अपतद्ग्रहता जाता।

अत्र सं०क्रोधागालविच्छेदः ।

सं० ४ णां ४ मास — अतोऽनन्तरसमये सं० क्रोधस्य बन्धोदयोदीरणाविच्छेदः । अप्र० प्र० क्रोधावुपशान्तौ । बद्धद० वर्जसं० क्रोधः उपशान्तः । सं० क्रोधस्य चरमावलिकावशिष्टा । सं० मानोदयः । मान३कोपशमनाप्रारम्भश्च ।

अत्र सं० क्रोधस्य चरमावलिकास्तिबुकेन सं०माने संक्रान्ता ।

अत्र सं० क्रोधस्य बद्धदलिकं उपशान्तं संक्रान्तं च । तेन सं० क्रोधः सर्वथा उपशान्तः ।

अत्र सं० मानपतद्ग्रहता भग्ना ।

अत्र सं० मानागालविच्छेदः ।

सं० त्रिकस्य २ मासौ — अत्र सं० मानस्य बन्धोदयोदीरणाविच्छेदः । अप्र० प्र० मानौ उपशान्तौ । शेषीभूतावलिकाबद्धद०वर्जमानोपशान्तिः । सं० मायाया उदयः । माया ३ कोपशमनाप्रारम्भः ।

अत्र सं० मानस्य चरमावलिकास्तिबुकेन सं० मायायां संक्रान्ता ।

अत्र मानः सर्वोपशान्तः । बद्धदलिकमुपशान्तं संक्रान्तं च ।

अ नि वृ त्ति क र ण म् (९मगुणस्थानकं समाप्तम्)

प श म ना द्धा (अन्तर्मु०)

लो भ त्रि क स्यो प श

सं० स्थि० बं०। अश्वकर्णकरणाद्धा (प्रथम० अन्तर्मु०) | सं० स्थि० बं०। किट्टीकरणाद्धा (द्वितीयो भागः अन्तर्मु०)

संख्येयाः स्थि० बं० | आवलि० | आव० | आवलिका | आवलिका | सं०स्थि०बं० | किट्टयद्धायाः संख्येयभागाः | आवलि० | आवलि०

| | | | | |
|---|---|---|---|---|
| | | | | अत्र सं० मायायाः पतद्ग्रहताविच्छेदः। |
| | | | | अत्र सं० मायागालविच्छेदः। |
| | | | माया-लोभयोः १ मास | अत्र सं० मायाया बन्धोदयोदीरणाविच्छेदः। मध्यमाये उपशान्ते। चरमावलिकां समयोनावलिकाद्विकबद्धं च वर्जयित्वा सर्वा माया उपशान्ता। सं०लोभस्य द्वि० स्थितिं ३भागकरणेन प्र० स्थितिं कृत्वा वेदयति। अत्र प्रथमभागतः प्रारभ्यापूर्वाणि स्पर्धकानि सं०लोभस्य करोति। लोभत्रिकोपशमनाप्रारम्भः। |
| | | | | अत्र मायायाश्चरमावलिका स्तिबुकेन लोभे संक्रान्ता। |
| | | | | अत्र सं० माया सर्वोपशान्ता। बद्धदलिकमुपशान्तं संक्रान्तं च। |
| व०स०पृ० | व०स०पृ० | व०स०पृ० | दीनपृ० | अत्रापूर्वस्पर्धककरणं समाप्तं। अनन्तरसमयात्प्रतिसमयं लोभस्यानन्तकिट्टीकरणप्रारम्भः। |
| | दीनपृ० | | अन्तर्मुहू० | |
| | | | | अत्र सं० लोभस्य पतद्ग्रहताविच्छेदः। |
| | | | | अत्र सं० लोभागालविच्छेदः। |
| २ वर्ष० | अहोरात्रं० | २ वर्ष० | स्तोकमन्तर्मु० | अत्र किट्टिचरमावलिकाबद्धवर्जसर्व- |

| | | | | |
|---|---|---|---|---|
| आवलिका आवलि० किट्टिवेदनाद्धा (तृतीयो भागः) मनाद्धा (अन्तर्मु०) सूक्ष्मसंपरायः (१०मगुणस्थानमन्तर्मुहूर्तम्) | | | | लोभ उपशान्तः । मध्यलोभौ सर्वोपशान्तौ । लोभबन्धविच्छेदेन मोहस्याबन्धः । बा० लोभोदयोदीरणाविच्छेदः । अनिवृत्तिकरणं समाप्तं । किट्टीकरणं समाप्तं । अनन्तरसमयात्सूक्ष्मकिट्टिवेदनमुपशमनं च ।<br>अत्र बा०लोभस्य चरमावलिकास्तिबुकेन संक्रान्ता ।<br>अत्र बद्धदलिकोपशान्तिः । |
| | १६ मुहूर्त | अन्तर्मु० | २४ मुहू० | अत्र सू० लोभस्य (किट्टेः) उदयविच्छेदः । मोहस्य सर्वोपशमना । |
| (११ मगुणस्थानं अन्तर्मु०) अन्तरम् (मोहस्य) (मोहस्य) उपशान्ताद्धा | (अबन्धः) | (अबन्धः) | अतः प्रारभ्य सामयिकस्थि० बन्धः प्रवर्तते प्रति समयं | अत्रोपशान्ताद्धायां प्रविष्टो जीव उपशमयथाख्यातचारित्रमुपशान्तवीतरागत्वं च प्राप्नोति । चारित्रमोहनीयं सर्वकरणासाध्यं, दर्शनमोहद्विकं च संक्रमापवर्त्तनामात्रसाध्यं सम्यक्त्वं च अपवर्त्तनामात्रसाध्यं भवति । भवक्षयेण समयाद्यनन्तरमनुत्तरे गच्छति । |
| मोहस्य द्वितीया स्थितिः (अत्रागतानां पुनर्मोहोदय उपशमनातो विपर्ययक्रमेण भवति) | १६ मुहूर्तादिस्थि० बन्धः पुनः प्रवर्तते | अन्तर्मुहूर्तादिस्थि० बन्धः पुनः प्रवर्तते | २४ मुहूर्तादिस्थि० बन्धः पुनः प्रवर्तते | अत्र उपशान्ताद्धाक्षयेण च यथैवारूढस्तथैव प्रतिपतन् प्रमत्तं यावत् गच्छति । |

॥ संक्षेपतो मोहोपशमनाक्रमस्य चित्रं १२६ तमपृष्ठादुर्ध्वमुखं वाच्यम् ॥




( अ नि वृ त्ति गु ण स्था न म् )

○○○○○○ ( नोक० ६ शान्तिः )

○ ( स्त्रीशान्तिः ) ⊙⊙⊙⊙⊙⊙⊙ ( नोक० पुंवेदोपशमना )

○ ( नपुं० उपशान्तिः ) ⊙ ( स्त्रीवेदोपशमना )

⊙ ( नपुं० उपशमना )

⦶⦶⦶⦶ ( हा० र० भ० जु०- बन्धविच्छेदः ) ⊖⊖⊖⊖⊖⊖ ( हास्य ६कोदय- विच्छेदः )

⦶⦶⦶⦶⦶⦶⦶⦶⦶⦶⦶⦶⦶⦶⦶
⦶⦶⦶⦶⦶⦶⦶⦶⦶⦶⦶⦶⦶⦶⦶
( देव २ कादि ३० बन्धविच्छेदः )

⦶⦶ ( निद्रा २ बन्धवि० )

यथाप्र०

वि०

○○○ ( द० ३ शान्तिः )

⊙⊙⊙ ( दर्श० ३ कोपशमना )

अपू० क०

यथाप्र०

वि०

○○○○
( अनं० ४ शान्तिः )
( विसंयोजिता वा )

⊙⊙⊙⊙ ( अनं० ४ कोपशमना )

अपूर्वक०
यथाप्र०
वि०

( अप्रमत्तगु० स्थानम् ) ( अपूर्वकरण गु० ) ( अनिवृ-

‘फ’ ॥ श्रेणितः प्रतिपततो द्वितीयस्थितेः प्रथमस्थितीकरणचित्रम् ॥



सम्प्रति प्रतिपात उच्यते, सोऽपि द्विधा—भवक्षयेणाद्धाक्षयेण च। तत्र भवक्षयो म्रियमाणस्य, अद्धाक्षयश्चोपशान्ताद्धायां परिपूर्णायां। यः पुनः भवक्षयेण प्रतिपतति स आद्यसमय एव बन्धनादीनि सर्वाणि करणानि प्रवर्त्तयति, अविरतसम्यग्दृष्टित्वभावात्। प्रथमसमये च यानि कर्म्माण्युदीर्यन्ते तान्युदयावलिकायां प्रविशन्ति। यानि च नोदीरणायां निविशन्ते तेषां कर्मणां दलिकान्युदयावलिकाया बहिस्तात् गोपुच्छाकारेण विरचयति। भवक्षयेण म्रियमाणो नियमेन देवेष्वेव गच्छति। किञ्च सास्वादनेऽपि म्रियमाणो देव एव भवति, तदुक्तं पञ्चसंग्रहे—"उवसमसम्मत्ताद्धाअन्तो आउक्खया धुवं देवो। जेण तिसु आउगेसुं बद्धेसु न सेढिमारुहइ।" इति। यस्तूपशान्तमोहगुणस्थानाद्धाद्धाक्षयेण प्रतिपतति स येनैव क्रमेण स्थितिघातादीन् कुर्वन्नारूढस्तेनैव क्रमेण पश्चानुपूर्व्या स्थितिघातादीन् कुर्वन् प्रतिपतति, स च तावत्प्रतिपतति यावत् प्रमत्तगुणस्थानकम्। प्रतिपतन् क्रमेण संज्वलनलोभादीनि कर्म्माण्यनुभवति, तथाहि—प्रथमतः संज्वलनलोभमनुभवति। ततो मायोदयविच्छेदस्थानादारभ्य मायामनुभवति। ततो मानोदयविच्छेदस्थानादारभ्य मानं ततः क्रोधोदयविच्छेदस्थानादारम्य क्रोधमनुभवति। अनेन क्रमेण तेषामनुभवनार्थं द्वितीयस्थितेः सकाशाद्दलिकमाकृष्याकृष्य प्रथमां स्थितिं करोति। तत्रोदयसमये प्रभूतं दलिकं प्रक्षिपति, ततो द्वितीयादिषु समयेषु विशेषहीनं विशेषहीनं तावद्वाच्यं यावदुदयावलिकाचरमसमयः। उदयावलिकाचरमसमयप्रक्षिप्तदलिकेभ्य उदयावलिकाया उपरितनप्रथमसमयेऽसंख्येयगुणं प्रक्षिपति, ततोऽप्युपरितनद्वितीयसमयेऽसंख्येयगुणं प्रक्षिपति। ततोऽपि तृतीयसमयेऽसंख्येयगुणमेवमुदयवतीनां तावद्वक्तव्यं यावद्गुणश्रेणिमस्तकम्। ततः पुनरप्युदयावलिकोक्तक्रमेण विशेषहीनो विशेषहीनो निक्षेपो वक्तव्यः। अनुदयवतीनां तूदयावलिकाया उपर्येव दलिकनिक्षेपः प्रवर्त्तते, सोऽपि गुणश्रेणिमस्तकं यावत् प्रतिसमयमसंख्येयगुणः ततः परतः पुनर्विशेषहीनो विशेषहीनः। अत्रत्या स्थापना च '卐' एतादृशचिह्नीकृतास्यपृष्टभागे ( ११७ तमपृष्ठे )ऽवलोकनीयेति।

तथाऽन्तरकरणे कृते बध्यमानमोहनीयप्रकृतीनामानुपूर्व्यैव संक्रम उक्तः स इह तु न भवति, किन्त्वनानुपूर्व्यापि भवति। तथा प्रागन्तरकरणे कृते सति बध्यमानप्रकृतीनां षण्णामावलिकानां मध्य उदीरणा न भवतीत्युक्तमिह तु बन्धावलिकातिक्रमेऽप्युदीरणा भवतीति। शेषं तु यत् यत्र स्थाने व्यवच्छिन्नं बन्धसंक्रमणापवर्तनोदीरणादेशोपशमनाऽऽगालनिधत्तिनिकाचनादि तत् तत्र स्थाने तथैव भवति। तथा यत् स्थितिघातादिकं यत्र जातं तत्तत्र स्थाने तद्विधमेव भवति। तथा मोहनीयप्रकृतीनां गुणश्रेणिः कालमधिकृत्य वेद्यमानसंज्वलनकालादभ्यधिका प्रतिपतता सता प्रारभ्यते। समारोहकालापेक्षया तु तुल्या। तथा यस्य कषायस्योदये उपशमश्रेणिप्रतिपत्तिरासीत् तस्योदयप्राप्तस्य सतो गुणश्रेणिः प्रतिपतता शेषकर्म्मसत्कगुणश्रेणिभिः सह तुल्या क्रियते। यथा कश्चित् संज्वलनक्रोधेनोपशमश्रेणिं प्रतिपन्नस्ततः श्रेणेः प्रतिपतन्नपि संज्वलनक्रोधोदयवान् भवति, ततः प्रभृति तस्य

शेषकर्मभिः सह तुल्या गुणश्रेणिर्भवति । एवं मानमाययोरपि वाच्यम् । संज्वलनलोभेन पुनरुपशमश्रेणिं प्रतिपन्नस्य प्रतिपातकाले प्रथमसमयादेवारभ्य संज्वलनलोभस्य शेषकर्मगुणश्रेणिभिः सह तुल्या प्रवर्त्तते । तथा क्षपकस्यारोहतो यस्मिन् स्थाने यावत्प्रमाणः स्थितिबन्धस्तस्मिन्नेव स्थाने उपशमश्रेणिमारोहतो द्विगुणस्थितिबन्धो भवति, क्षपकापेक्षयोपशमकस्य मन्दपरिणामत्वात् । ततोऽपि तस्मिन्नेव स्थाने उपशमश्रेणितः प्रतिपततो द्विगुणो भवति, आरोहणादवतरणपरिणामस्य मन्दत्वात् । क्षपकाच्चतुर्गुणो बन्धो भवतीत्यर्थः । तथा क्षपकस्याशुभप्रकृतीनां यत्र स्थाने यावाननुभागबन्धस्तस्मिन्नेव स्थाने उपशमश्रेणिमारोहतस्तासामेवाशुभप्रकृतीनामनन्तगुणो भवति, ततोऽपि तस्मिन्नेव स्थाने तासामेव प्रकृतीनामुपशमश्रेणिं प्रतिपततोऽनन्तगुणो भवति । शुभानां पुनरनुभागो विपरीतोऽनन्तगुणो वक्तव्यस्तथाहि-उपशमश्रेणीतः प्रतिपततो यस्मिम् स्थाने योऽनुभागः शुभप्रकृतीनां बन्धमायाति, तदपेक्षया तस्मिन्नेव स्थाने शुभप्रकृतीनामुपशमश्रेणिमारोहतोऽनन्तगुणानुभागो बन्धमायाति, ततोऽपि तस्मिन्नेव स्थाने क्षपकश्रेणिमारोहतोऽनन्तगुणोऽनुभागो बन्धमायाति । शेषमारोहत इव प्रतिपततोऽपि ज्ञेयं यावत् प्रमत्तगुणस्थानम् । प्रमत्ताप्रमत्तयोः प्रभूतानि सहस्राणि यावत् परिवृत्तीः कृत्वा देशविरतिमविरतसम्यग्दृष्टिं वा गच्छेत् । येषां मतेनानन्तानुबन्धिनामुपशमना भवति, तेषां मते कश्चित् सास्वादनभावमपि गच्छेत् । तथैकत्र भवे उत्कर्षतो द्वौ वारावुपशमश्रेणिं प्रतिपद्यते-"एगभवे दुक्खुत्तो चरित्तमोहं उवसमेज्जा" इति पञ्चसंग्रहवचनात् । तस्य चावश्यं तत्र भवे क्षपकश्रेण्यभावः । यः पुनरेकवारमुपशमश्रेणिं प्रपद्यते स तस्मिन्भवे क्षपकश्रेणिमपि करोति । तदुक्तं चूर्णौ-"जो दुवे वारे उवसमसेढिं पडिवज्जइ तस्स नियमा तम्मि भवे खवगसेढी नत्थि जो इक्कसिं उवसमसेढिं पडिवज्जइ तस्स खवगसेढी होज्ज व त्ति" इति कार्मग्रन्थिकाभिप्रायः । आगमाभिप्रायेण त्वेकस्मिन् भवे एकामेव श्रेणिं प्रतिपद्यते-"अन्नयरसेढिवज्जं एगभवेणं च सव्वाइं" । अन्यत्राप्युक्तम्-"मोहोपशम एकस्मिन् भवे द्विः स्यादसन्ततः । यस्मिन् भवे तूपशमः क्षयो मोहस्य तत्र न ॥ १ ॥" इति । एवं पुरुषवेदेन श्रेणिं प्रतिपन्नस्य विधिरुक्तः । स्त्रीवेदेन श्रेणिं प्रतिपन्ना सती प्रथमतो नपुंसकवेदमुपशमयति, ततः स्त्रीवेदं तच्च तावदुपशमयति यावत्स्वोदयस्य द्विचरमसमयः, तस्मिंश्च समये एकां चरमसमयमात्रामुदयस्थितिं च वर्जयित्वा शेषं सकलमपि स्त्रीवेदसत्कं दलिकमुपशमितं ततश्चरमसमये गते सति अवेदका सती सप्तनोकषायान् युगपदुपशमयितुमारभते । शेषं पुरुषवेदेन श्रेणिं प्रतिपन्नस्येव सर्वं द्रष्टव्यम् । नपुंसकवेदेन श्रेणिं प्रतिपन्नस्तु स्त्रीवेदेन पुरुषवेदेन वा श्रेणिं प्रतिपद्यमानो यस्मिन् स्थाने नपुंसकवेदमुपशमयति, तद्दूरं यावत्केवलं नपुंसकवेदमेवोपशमयति, तत ऊर्ध्वं तु युगपत् वर्षवरं स्त्रीवेदं च तावदुपशमयति यावत् नपुंसकवेदोपशमनाद्धाद्विचरमसमयस्तस्मिंश्च समये स्त्रीवेद उपशान्तः । नपुंसकवेदस्य समयमात्रोदयस्थितिर्वर्त्तते, शेषं सर्वमप्युपशान्तं तस्यामप्युदयस्थि-

तावतीतायामवेदको भूत्वा पुरुषवेदादिकाः सप्तप्रकृतीः युगपदुपशमयितुमारभते । शेषं पुरुषवेदेन श्रेणिं प्रतिपन्नवद्द्रष्टव्यमिति पञ्चसङ्ग्रहकर्मप्रकृतिवृत्तितः । नव्यशतकवृत्तौ तु— "अथ स्त्रीवेदप्रारम्भिका ततः प्रथमं नपुंसकवेदं ततः पुरुषवेदं ततः षट्कं ततः स्त्रीवेदमिति । अथ नपुंसक एव प्रारम्भकस्ततोऽसावुदीर्णमपि प्रथमं स्त्रीवेदमुपशमयति ततः पुरुषवेदं ततः षट्कं ततो नपुंसकवेदमिति" इत्युक्तोपशमश्रेणिरिति ॥

॥ भिन्नकषायोदयेन श्रेणौ विशेषः ॥

| संज्व०क्रोधोदयेन | संज्व०मानोदयेन | सं०मायोदयेन | सं०लोभोदयेन |
|---|---|---|---|
| प्रथमं सं०क्रोधं वेदयमानः क्रोधत्रिकं (नपुं० वत्) | सं०मानं वेदयमानः क्रोधत्रिकम् | सं०मायां वेदयमानः प्रथमं क्रोधत्रिकम् | सं०लोभं वेदयमानः प्रथमं क्रोधत्रिकम् |
| ततो मानत्रिकं (क्रोधवत्) | ततो मानत्रिकम् | ततो मानत्रिकम् | ततो मानत्रिकम् |
| ततो मायात्रिकम् | ततो मायात्रिकम् | ततो मायात्रिम् | ततो मायात्रिकम् |
| ततो लोभत्रिकमुपशमयति | ततो लोभत्रिकमुपशमयति | ततो लोभत्रिकम् | ततो लोभत्रिकम् |

॥ भिन्नवेदेन श्रेणौ विशेषः ॥

**यदि स्त्री प्रारम्भिका**

प्रथमं नपुं० वेदं शमयति
ततः स्त्रीवेदं शमयति
ततः समयानन्तरं पुंवेदहास्य-६ कम्
शेषविधिः पुंवेदवत् ।

**यदि नपुंसकः प्रारम्भकः**

प्रथमं नपुं० वेदोपशमनाप्रारम्भः
ततः नपुं०स्त्रीवेदौ युगपदुपशमयति
ततः स्त्रीवेदोपशान्तिः, नपुंसः १ स्थि० अवशिष्टा
ततः समयानन्तरं नपुं०वेदोपशान्तिः
ततः समयानन्तरं पुंहास्य ६ कोपशमना प्रारम्भः
शेषविधिः पुंवेदवत् ।

**यदा पुरुषः प्रारम्भकः**

प्रथमं नपुं०वेदं शमयति
ततोऽन्तर्मुहूर्त्तानन्तरं स्त्रीवेदं शमयति
ततः समयानन्तरं पुंवेदहास्य ६ कोपशमना प्रारम्भः
ततो हास्य ६ कोपशान्तिः पुं० १ स्थितिरवशिष्टा
ततः पुंवेदोदयशान्तिः
ततः उदयावलिका समयोनावलिकाद्विकबद्धं च मुक्त्वा सर्वपुंवेदशान्तिः ।

अत्र यस्याः प्रकृतेरुपशमो नोक्तस्तस्याः तत्स्थान एवान्तर्मुहूर्त्तेनोपशमो भवतीति ज्ञेयम् ॥

---

अथ क्षपकश्रेणिरुच्यते—यो वर्षाष्टकादुपरि वर्त्तमानो मनुष्यो वज्रर्षभनाराचसंहननी शुभध्यानोऽविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमतसंयतानामन्यतमः—यदि अप्रमत्तसंयतः पूर्ववित् तदा शुक्लध्यानोपगतः शेषस्तु सर्वोऽपि धर्मध्यानोपगतः—तत्र क्षपकश्रेणिमारोहन् प्रथमतोऽनन्तानुबन्धिनः क्षपयति । सा च क्षपणा प्रागुक्तत्वेन न पुनरुच्यते । अनन्तानुबन्धिचतुष्कं क्षपयित्वा दर्शनत्रिकं युगपत् क्षपयितुमारभमाणः प्राग्वत् पुनरपि यथाप्रवृत्त्यादीनि त्रीणि करणानि करोति । करणानि च प्रागिव वक्तव्यानि, नवरमपूर्वकरणप्रथमसमयादारभ्य चरमसमयपर्यन्तमनुदितयोर्मिथ्यात्वमिश्रयोर्दलिकं गुणसंक्रमेण सम्यक्त्वे

प्रक्षिपति । तत्रोद्वलनासंक्रममपि तयोरेवारभते–प्रथमं स्थितिखण्डं बृहत्तरमुद्वलयति, ततो द्वितीयं विशेषहीनं ततोऽपि तृतीयं विशेषहीनमेवं तावद्वाच्यं यावदपूर्वकरणचरमसमयः। अपूर्वकरणप्रथमसमये यत्स्थितिसत्कर्मासीत् तत्तस्यैवापूर्वकरणचरमसमये संख्येयगुणहीनं जातम् । अपूर्वस्थितिबन्धोऽपि अपूर्वकरणप्रथमसमये यावान् स्थितिबन्ध आसीत् तदपेक्षयाऽपूर्वकरणचरमसमये संख्येयगुणहीनो भवति । ततोऽनिवृत्तिकरणे प्रविशति । तत्र च प्रविष्टः सन् प्रथमसमयादारभ्यापूर्वां गुणश्रेणिमपूर्वाभिनवस्थितिबन्धमपूर्वस्थितिघातमपूर्वरसघातं कर्त्तुमारभते । अनिवृत्तिकरणाद्धायाः प्रथमसमय एव च दर्शनत्रिकस्य देशोपशमनानिधत्तिनिकाचनाव्यवच्छेदः । किञ्च दर्शनत्रिकस्य स्थितिसत्कर्मानिवृत्तिकरणप्रथमसमयादारभ्य स्थितिघातादिभिर्घात्यमानं स्थितिखण्डसहस्रेषु गतेषु सत्स्वसंज्ञिपञ्चेन्द्रियस्थितिसत्कर्मसमानं भवति । ततः पुनरपि स्थितिघातसहस्रपृथक्त्वे गते सति चतुरिन्द्रियसत्कर्मसमानं भवति, ततः पुनरपि तावन्मात्रेषु स्थितिखण्डसहस्रेषु गतेषु त्रीन्द्रियस्थितिसत्कर्मसमानं भवति । ततोऽपि स्थितिघातसहस्रपृथक्त्वेषु गतेषु द्वीन्द्रियस्थितिसत्कर्मसमानं भवति । ततोऽपि तावन्मात्रेषु स्थितिखण्डेषु गतेषु सत्स्वेकेन्द्रियस्थितिसत्कर्मसमानं भवति । ततोऽपि तावन्मात्रेषु स्थितिखण्डेषु गतेषु सत्सु चूर्णिकृन्मते 'पल्योपममात्रप्रमाणं' भवति, तदुक्तं कर्मप्रकृतिचूर्णौ–"अणियट्टिपढमसमते दंसणमोहणियस्स ठितिसंतकम्मं खंडिज्जमाणं खंडं असन्निपंचेन्दियसंतकम्मठितिसमगं होति । ततो ठितिखंडगपहुत्ते गते चउरिंदियसंतकम्मठितिसमगं होति । ततो तत्तिहिं चेव ठितिखंडगेहिं गतेहिं तेइंदियसंतकम्मठितिसमगं, ततो तत्तिएहिं चेव ठितिखंडगेहिं गतेहिं बिइंदियसत्तसमगं, एवं एव एगिंदियसत्तसमगं ठितिसंतकम्मं होइ । ततो ठितिखंडगपुहुत्तेणं जायं पलिओवमठितियं दंसणमोहणिज्जठितिसंतकम्मं" इति । पञ्चसंग्रहकृन्मते तु 'पल्योपमसंख्येयभागमात्रं', तदुक्तं तत्रैव–"ठिइखंडगसहस्साइं एक्केक्के अंतरम्मि गच्छंति । पलिओवमसंखंसे दंसणसंते तओ जाए ॥ १ ॥" इति । दर्शनत्रिकस्य पल्योपममात्रस्थितौ जातायां सत्यां तत एकं संख्येयभागं स्थितिखण्डं मुक्त्वा शेषं सर्वमपि त्रयाणामपि दर्शनमोहनीयानां विनाशयति । एवं सहस्रशः स्थितिघाता व्रजन्ति । तदनन्तरं च मिथ्यात्वस्यैकमसंख्येयभागं मुक्त्वा शेषानसंख्येयभागान् सम्यक्त्वमिश्रयोश्चैकं संख्येयभागं मुक्त्वा शेषान् संख्येयभागान् विनाशयति । ततः सहस्रेषु स्थितिखण्डेषु गतेषु सत्सु मिथ्यात्वमुदयावलिकाविहीनं सर्वमपि क्षीणमावलिकामात्रं तिष्ठति । सम्यक्त्वमिश्रयोस्तु पल्योपमासंख्येयभागमात्रं शेषं तिष्ठति । मिथ्यात्वस्योदयावलिकासत्कं दलिकं तु स्तिबुकसंक्रमेण सम्यक्त्वमोहनीये प्रक्षिपति । अमूनि स्थितिखण्डानि खण्ड्यमानानि मिथ्यात्वसत्कानि सम्यक्त्वमिश्रयोः प्रक्षिपति,

मिश्रसत्कानि सम्यक्त्वे प्रक्षिपति, सम्यक्त्वसत्कानि त्वधस्तात् स्वस्थान इति। ततः सम्यक्त्वमिश्रयोरेकमसंख्येयभागं मुक्त्वा शेषानसंख्येयभागान् विनाशयति। ततो यदेकमसंख्येयभागं तस्याप्यसंख्येयान् भागान् कृत्वा एकं च भागं मुक्त्वा शेषान् विनाशयति। एवं कतिपयेषु स्थितिखण्डेषु गतेषु सत्सु मिश्रमोहनीयमावलिकामात्रमवतिष्ठते, तदा सम्यक्त्वसत्कर्माष्टवर्षप्रमाणं भवति। तदानीं च सकलविघ्नविलयात् निश्चयनयमतेन दर्शनमोहनीयक्षपक उच्यते। तत ऊर्ध्वं सम्यक्त्वस्यान्तर्मुहूर्त्तप्रमाणं स्थितिखण्डं घातयति, तद्दलिकं चोदयसमयादारभ्य प्रक्षिपति। तच्चैवम्—उदयसमये स्तोकं ततोऽपि द्वितीयसमयेऽसंख्येयगुणं ततोऽपि तृतीयसमयेऽसंख्येयगुणमेवं तावद्वाच्यं यावद्गुणश्रेणिशिरस्तत ऊर्ध्वं विशेषहीनं विशेषहीनं तावद्वाच्यं यावच्चरमा स्थितिः। ततो द्वितीयं स्थितिखण्डं प्रथमस्थितिखण्डादसंख्येयगुणमन्तर्मुहूर्त्तेन कालेन खण्डयति, दलिकनिक्षेपप्रकारस्तु पूर्वोक्तप्रकारेणोदयसमयादारभ्य निक्षिपति। एवं पूर्वस्मात्पूर्वस्मादसंख्येयगुणान्यान्तर्मौहूर्त्तिकान्यनेकानि स्थितिखण्डानि द्विचरमस्थितिखण्डं यावत् खण्डयति, पूर्वोक्तप्रकारेण दलिकनिक्षेपं च करोति। चरमं च स्थितिखण्डं द्विचरमात् स्थितिखण्डात् संख्येयगुणं। तस्मिंश्च खण्ड्यमाने तेनैव सह गुणश्रेण्या अपि संख्येयभागं खण्डयति। अन्याश्च तदुपरितनीः संख्येयगुणाः स्थितीश्चरमखण्डस्य तावन्मानत्वादेव उत्कीर्य च तद्दलिकमुदयसमयादारभ्यासंख्येयगुणनया श्रेण्या निक्षिपति, तद्यथा—उदयसमये स्तोकं निक्षिपति, ततो द्वितीयसमयेऽसंख्येयगुणं ततोऽपि तृतीयसमयेऽसंख्येयगुणमेवं तावद्वाच्यं यावद्गुणश्रेणीशिरः। अत ऊर्ध्वमुत्कीर्यमाणमेव दलिकं प्राप्यते, न तत्प्रक्षेपाधारभूतमिति न तत् क्वापि प्रक्षिप्यते। चरमे च स्थितिखण्डे उत्कीर्णे सत्यसौ क्षपकः कृतकरण इत्युच्यते, तदुक्तं कर्म्मप्रकृतिचूर्णौ—"सम्मत्तदुचरिमखंडगतो चरिमखंडगं संखेज्जगुणं, चरिमखंडगं आगा(घा)तिज्जमाणं गुणसेढीए संखेज्जतिभागो, अत्थ य उवरि संखेज्जगुणाओ ठितीतो आगा(घा)तिज्जंति। सम्मत्तस्स चरिमे ठितिखंडगे पढमसमये आगा(घा)तिए वट्टिज्जमाणासु ठितीसु जं पदेसग्गं उदये दिज्जति तं थोवं, से काले असंखेज्जगुणं असंखेज्जगुणं जाव ठितीखंडगस्स पढम (चरम) समयं पत्तोति। सा चेव ठिती गुणसेढीसीसगं जातं। ठावणाए समए समए उक्किरिज्जमाणं दलियं चरिमसमते उक्कड्ढमाणो उदए पएसग्गं थोवं देति से काले असंखेज्जगुणं जाव गुणसेढीसीसगं। चरिमठितिखंडगे निठिए कयकज्जोत्ति भण्णति, कयकरणाद्धा य पच्छिमे होति" इति। कृतकरणाद्धायां वर्तमानः कश्चित्कालमपि कृत्वा चतसृणां गतीनामन्यतमस्यामुत्पद्यते। पूर्वं शुक्ललेश्यायामासीत् सम्प्रति त्वन्यतमस्यां भवति। ततः क्षीणसम्यक्त्वशेषः क्षायिकसम्यग्दृष्टिर्भवति।

## ॥ दर्शनमोहक्षपणानुक्रमः ॥

**प्रस्थापकः**

सर्वज्ञकालसंभवी संज्ञिपर्याप्तनरो जघन्यतः ८ वार्षिकः उत्कृष्टतः पूर्वकोट्यायुः प्रथमसंहननी ।

**निष्ठापकाः**

देवा नारका युगलिकतिर्यञ्चो युगलिकनराश्चैवं चातुर्गतिकाः ।

—० स्थितिघातसहस्राणि सूचनार्थं रेखाः, बिन्दवस्तु
—० तदावारककर्मोदयसूचका इति संकेतार्थः ।

**क्रियाक्रमः**

| | |
|---|---|
| विशुद्धिः (अन्तर्मु०) | अत्र प्रथमसमयादन्यस्थितिबन्धः । |
| यथाप्रवृत्तम् (अन्तर्मु०) | अत्रापि प्रथमसमयादन्यस्थितिबन्धः । |
| अपूर्वकरणम् (अन्तर्मु०) | अत्र प्रथमसमयादेव स्थितिघातः–रसघातः–गुणश्रेणिः–उद्वलनानुविद्धगुणसंक्रमः–अन्यस्थितिबन्धश्च युगपत् प्रवर्तन्ते । |
| | अत्र चरमसमये प्रथमसमयापेक्षया संख्येयगुणहीनसत्ता बन्धश्चजायतः । |
| अ- स्थि ता घा त स ह स्र ण ↓ | अत्र प्रथमसमयतः पूर्ववत् पञ्चापि पदार्था युगपत् प्रवर्तन्ते । |
| | अत्र दर्शनत्रिकस्य स्थितिसत्ता असंज्ञिपञ्चेन्द्रियतुल्या । |
| | अत्र चतुरिन्द्रियतुल्या । |
| | अत्र त्रीन्द्रियतुल्या । |

अत्र द्वीन्द्रियतुल्या ।

अत्रैकेन्द्रियतुल्या ।

अत्र पल्योपमतुल्या ( 'पल्यसंख्येयभागतुल्या'- इति पंचसं० षष्ठकर्मग्रन्थे च )

अत्र पल्यस्य लघुसंख्येयभागतुल्या ।

एकं संख्येयतमभागं मुक्त्वा शेषाः संख्येया भागाः प्रतिस्थितिघातं घातिताः। एवं सहस्राः स्थितिघाताः

मिथ्यात्वस्यासंख्येयभागान् खण्डयत्येवं प्रभूतेषु स्थितिखण्डेषु गतेषूदयावलिका शेषीभूता तिष्ठति

उदयावलिकां स्तिबुकेन संक्रमयति

अत्र पल्यासंख्येयभागतुल्या मिश्र-सम्यक्त्वयोः स्थितिः ।

प्रतिस्थितिघातं संख्येया भागा घातिताः। एवं सहस्राः स्थितिघाताः

मिश्रस्यासंख्येयभागान् खण्डयत्येवं प्रभूतेषु स्थितिखण्डेषु गतेषूदयावलिका शेषीभूता तिष्ठति

उदयावलिकां स्तिबुकेन संक्रमयति

अत्र सम्यक्त्वस्य स्थितिः ८ वार्षिकी (निश्चयेनात्र दर्शनक्षपक उच्यते)

तदेवं प्रस्थापको मनुष्यो निष्ठापकश्चतुर्ष्वपि गतिषु प्राप्यते, तदुक्तम्—"पट्ठवगो उ मणुस्सो निट्ठवगो होइ चउसु वि गईसु" इति । यदि पुनः बद्धायुष्कस्तदा श्रेणिमकृत्वा तिष्ठति, उत्कृष्टतश्च तृतीये चतुर्थे भवे सिद्ध्यति । कश्चित्तु पञ्चमभवेऽपि कृष्णदुष्प्रसहादिवदिति । अबद्धायुष्कश्चेत् चारित्रमोहनीयक्षपणाय प्रयतते । यथाप्रवृत्त्यादीनि च त्रीणि करणानि करोति । यथाप्रवृत्तकरणमप्रमत्तगुणस्थाने, अपूर्वकरणमपूर्वकरणगुणस्थाने, अनिवृत्तिकरणमनिवृत्तिकरणगुणस्थाने भवति । तत्रापूर्वकरणे स्थितिघातादिभिः मध्यमकषायाष्टकं तथा क्षपयति यथाऽनिवृत्तिकरणाद्धायाः प्रथमसमये पल्योपमासंख्येयभागमात्रस्थितिकं भवति । ततोऽनिवृत्तिकरणाद्धायाः संख्येयेषु भागेषु गतेषु स्त्यानर्द्धित्रिकनरकद्विकतिर्यग्द्विकजातिचतुष्कस्थावरसूक्ष्मसाधारणातपोद्योतलक्षणानां षोडशप्रकृतीनामप्युद्वलनासंक्रमेणोद्वल्यमानानां पल्योपमासंख्येयभागमात्रा स्थितिर्जायते । ततो यत् कषायाष्टकं क्षपयितुमारब्धमस्ति तन्नाद्यापि क्षीणं, केवलमन्तराल एव ताः षोडशप्रकृतीर्बध्यमानासु प्रकृतिषु गुणसंक्रमेण प्रतिसमयं प्रक्षिप्य प्रक्षिप्य निःशेषतः क्षपयति । ततः पश्चात् कषायाष्टकमप्यन्तर्मुहूर्त्तेन क्षपयति । ननु षोडशान्तर्भूतयोरातपोद्योतयोः शुभत्वेन कथं गुणसंक्रमो भवति, बध्यमानास्वबध्यमानाशुभप्रकृतीनां गुणसंक्रमस्य प्रतिपादनादिति चेत्? सत्यं, गुणसंक्रमानुविद्धोद्वलनासंक्रमः संभाव्यते, यथा पुंवेदसंज्वलनक्रोधमानमायानां गुणसंक्रमप्रकृतिषु मध्येऽनुक्तत्वेऽपि क्षपणकाले गुणसंक्रम उक्त इति । तत्त्वं पुनस्तद्विदो विदन्ति । अन्ये पुनराहुः षोडश कर्म्माणि पूर्वं क्षपयितुमारभ्यान्तराले कषायाष्टकं क्षपयित्वा पश्चात् षोडशप्रकृतीः क्षपयति, तदुक्तं चूर्णौ—"अन्ने आयरिया भणंति-सोलसकम्माणि खविउमाढविज्जंति, तं तु अंतरे पुव्वं अट्ठ कसाया खीयंति पच्छा सोलसकम्माणि एस सुत्तादेसो" इति । ततो मोहनीयत्रयो-

अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० | अन्तर्मु० (उपान्त्यं) | गुणश्रेणिविभागः । १ संख्येयभागो गुणश्रेण्या घातितः | गुणश्रेण्युपरितनविभागः संख्येया भागा गुणश्रेण्यां प्रक्षेपेण घातिताः

घात्यमानान्यान्तर्मुहूर्त्तिकानि सहस्राणि स्थितिखण्डानि क्रमेणासंख्येयगुणानि

क　र　ण　म्

क्षायिकसम्यक्त्वप्राप्तिः

दशप्रकृतीनामन्तरकरणं करोति। अन्तरकरणादुपरितनस्थितिगतं नपुंसकवेदस्य दलिकमुद्वलनविधिना तथोद्वलयति यथाऽन्तर्मुहूर्त्तेन पल्योपमासंख्येयभागमात्रस्थितिकं जायते। ततः प्रभृति तद्दलिकं गुणसंक्रमेण बध्यमानासु प्रकृतिषु प्रक्षिप्य प्रक्षिप्यान्तर्मुहूर्त्तेन समस्तं क्षपयति। अधस्तनस्थितिगतं तु दलिकं यदि नपुंसकवेदेन क्षपकश्रेणिमारूढस्तदा तदनुभवतः क्षपयति। अन्यथा त्वावलिकामात्रं तत्स्यात्। तच्च वेद्यमानासु परप्रकृतिषु स्तिबुकसंक्रमेण संक्रमति। तदेवं क्षीणो नपुंसकवेदः । एवं नपुंसकवेदोक्तप्रकारेणान्तर्मुहूर्त्तमात्रेण कालेन स्त्रीवेदं क्षपयित्वा हास्यादिषट्कं युगपद्धन्तुमारभते, केवलमुपरितनस्थितिगतं दलिकं पुंवेदे न संक्रमयति, किन्तु संज्वलनक्रोधे। तदुक्तं सप्ततिकायाम्—"तो नोकसायछक्कं छुभई संजलनकोहम्मि" इति। एवं चान्तर्मुहूर्त्तेन हास्यादिषट्कस्योपरितनस्थितिगतं दलिकं निःशेषतः परिक्षीणं तत्समय एव च पुरुषवेदस्य बन्धोदयोदीरणाव्यवच्छेदश्च भवति। समयोनावलिकाद्विकबद्धं मुक्त्वा शेषं सर्वं क्षीणमिदं पुरुषवेदेन श्रेणिं प्रतिपन्नस्य वाच्यम्। यस्तु नपुंसकवेदेन श्रेणिं प्रतिपद्यते स पूर्वं स्त्रीवेदनपुंसकवेदौ युगपद्धन्ति, तत्क्षयसमकालमेव पुरुषवेदस्य बन्धव्यवच्छेदः। तदनन्तरं चावेदकः सन् पुरुषवेदहास्यादिषट्के युगपद्धन्ति। यश्च स्त्रीवेदेन श्रेणिं प्रतिपद्यते स पूर्वं नपुंसकवेदं ततः स्त्रीवेदं क्षपयति। स्त्रीवेदक्षयसमय एव च पुरुषवेदबन्धव्यवच्छेदः। ततोऽवेदकः पुंवेदहास्यादिषट्के युगपत् क्षपयति। अथ पुंवेदेन श्रेणिमारूढमाश्रित्य प्रकृतमुच्यते—अवेदकः सन् संज्वलनक्रोधं वेदयते। तद्वेदनाद्धायाश्च भागत्रयं भवेत्—अश्वकर्णकरणाद्धा किट्टीकरणाद्धा किट्टिवेदनाद्धा च। तत्राश्वकर्णकरणाद्धायां वर्तमानश्चतुर्णां संज्वलनानामन्तरकरणोपरितनस्थितावपूर्वस्पर्द्धकानि कुरुते। पुंवेदमपि समयोनावलिकाद्विकेन कालेन क्रोधे गुणसंक्रमेण संक्रमयन् चरमसमये सर्वसंक्रमेण संक्रमयतीति क्षपितः पुरुषवेदः। अथाश्वकर्णाद्धायां पूर्णायां किट्टीकरणाद्धायां प्रविश्य संज्वलनचतुष्कस्योपरितनस्थितिगतदलिकस्य किट्टीः करोति। ताश्च परमार्थतोऽनन्ता अपि स्थूरजातिभेदापेक्षया द्वादश कल्प्यन्ते। एकैकस्य कषायस्य तिस्रस्तिस्रः, तद्यथा—प्रथमा द्वितीया तृतीया चेति। क्रोधेन क्षपकश्रेणिं प्रतिपन्नस्येदं द्रष्टव्यम्। मानेन प्रतिपन्नस्तूद्वलनविधिना क्रोधे क्षपिते शेषसंज्वलनत्रिकस्य नव किट्टीः करोति। मायया प्रतिपन्नस्तु मानमपि प्रागुक्तोद्वलनविधिना क्षपयति। शेषद्विकस्य षट् किट्टीः करोति। लोभेन क्षपकश्रेणिं प्रतिपन्नस्तु मायामप्युद्वलनविधिना क्षपयति, लोभस्य किट्टित्रिकं करोति। एष किट्टीकरणविधिः।

तदेवं किट्टीकरणाद्धायां निष्ठितायां किट्टिवेदनाद्धायां प्रविष्टः सन् यः क्रोधेन श्रेणिं प्रतिपन्नः स क्रोधस्योपरितनस्थितिगतमाद्यकिट्टिदलिकं समाकृष्यान्तरकरणाधस्तनस्थितिं करोति। अत्राधस्तनस्थितिः प्रथमस्थितिरिति चैकार्थे। एवमुपरितनस्थितिर्द्वितीया स्थितिरिति। तां च तावत् वेदयति यावत्समयाधिकावलिकामात्रं शेषः। तदनन्तरसमये द्वितीयकिट्टिगतं दलिकं समाकृष्य प्रथमां स्थितिं कुरुते वेदयति च तावद्यावत्समयाधिकावलिकाशेषः। ततोऽनन्तरसमये तृतीयकिट्टिगतं दलिकमाकृष्य प्रथमां स्थितिं

करोति वेदयति च तावद्यावत्समयाधिकावलिकामात्रं शेषः । तिसृष्वपि चैतासु किट्टिवेदनाद्धासूपरितनस्थितिगतं दलिकं प्रतिसमयमसंख्येयगुणवृद्धिलक्षणेन गुणसंक्रमेणापि संज्वलनमाने प्रक्षिपति । तिसृष्वपि किट्टिवेदनाद्धासु संज्वलनक्रोधस्य बध्यमानत्वेऽपि तद्दलिकं बध्यमानसंज्वलनमाने गुणसंक्रमेण प्रक्षेपणं पूर्वमहर्षिभिरुक्तमतोऽस्माभिरप्युक्तम् । एवमग्रेऽपीति । तृतीयकिट्टिवेदनाद्धाचरमसमये संज्वलनक्रोधस्य बन्धोदयोदीरणानां समकं व्यवच्छेदः । सत्कर्मापि च समयोनावलिकाद्विकबद्धं मुक्त्वा शेषं सर्वं क्षीणं संज्वलनमाने प्रक्षिप्तत्वात् । ततोऽनन्तरसमये संज्वलनमानस्य प्रथमकिट्टिगतं दलिकं समाकृष्य प्रथमां स्थितिं कुरुते वेदयति च तावद्यावदन्तर्मुहूर्त्तं, संज्वलनक्रोधस्य च बन्धादिव्यवच्छेदानन्तरं समयोनावलिकाद्विकबद्धं शेषं गुणसंक्रमेण तावता कालेन संज्वलनमाने संक्रमयन् चरमसमये सर्वं संक्रमयति । संज्वलनमानस्यापि प्रथमकिट्टिदलिकं प्रथमस्थितिकृतं वेद्यमानं समयाधिकावलिकाशेषं जातम् । ततोऽनन्तरसमये द्वितीयकिट्टिगतं दलिकमाकृष्य प्रथमां स्थितिं करोति, तावच्च वेदयति यावत्समयाधिकावलिकामात्रं शेषः । ततोऽनन्तरसमये तृतीयकिट्टिगतं दलिकमाकृष्य प्रथमां स्थितिं करोति वेदयति च तावद्यावत्समयाधिकावलिकामात्रं शेषः । तस्मिँश्च समये संज्वलनमानस्य बन्धोदयोदीरणाव्यवच्छेदः । सत्कर्मापि च समयोनावलिकाद्विकबद्धमेव, शेषस्य मायायां प्रक्षिप्तत्वात् । ततो मायायाः प्रथमकिट्टिगतं दलिकमाकृष्याधस्तनीं स्थितिं करोति तावच्च वेदयति यावदन्तर्मुहूर्त्तं, मानस्यापि बन्धादौ व्यवच्छिन्ने सति तस्य दलिकं समयोनावलिकाद्विकबद्धं गुणसंक्रमेण समयोनावलिकाद्विकेन कालेन संज्वलनमायायां प्रक्षिपति । मायाया अपि प्रथमस्थितिकृतमाद्यकिट्टिगतं दलिकं वेद्यमानं समयाधिकावलिकामात्रं जातम् । ततोऽनन्तरसमये द्वितीयकिट्टिगतं दलिकमाकृष्य प्रथमां स्थितिं करोति, वेदयति च तावद्यावत्समयाधिकावलिकामात्रं शेषः । ततोऽनन्तरसमये तृतीयकिट्टिगतं दलिकमाकृष्य प्रथमां स्थितिं करोति, वेदयति च तावद्यावत्समयाधिकावलिकामात्रं शेषः । तस्मिँश्च समये संज्वलनमायाया बन्धोदयोदीरणानां युगपद्व्यवच्छेदः । सत्कर्माऽपि च समयोनावलिकाद्विकबद्धमेव, शेषस्य गुणसंक्रमेण लोभे प्रक्षिप्तत्वात् । ततोऽनन्तरसमये लोभस्य प्रथमकिट्टिगतं दलिकमाकृष्याधस्तनीं स्थितिं करोति, वेदयति च तावद्यावदन्तर्मुहूर्त्तः। संज्वलनमायाया बन्धादौ व्यवच्छिन्ने तद्दलिकं समयोनावलिकाद्विकेन कालेन गुणसंक्रमेण सर्वं लोभे संक्रमयति । संज्वलनलोभस्य प्रथमकिट्टिगतं प्रथमस्थितिकृतं समयाधिकावलिकामात्रं जातम् । ततोऽनन्तरसमये लोभस्य द्वितीयकिट्टिगतं दलिकमाकृष्य प्रथमां स्थितिं करोति वेदयते च । तां च वेदयन् तृतीयकिट्टिगतं दलिकं गृहीत्वा सूक्ष्मकिट्टीः करोति तावद्यावत् द्वितीयकिट्टिदलिकस्य वेद्यमानस्य समयाधिकावलिकामात्रं शेषः । तस्मिन्नेव समये संज्वलनलोभस्य बन्धव्यवच्छेदो बादरलोभोदयोदीरणाव्यवच्छेदश्च । नवमगुणस्थानं च परिसमाप्तम् । ततोऽनन्तरसमये सूक्ष्मकिट्टिदलिकं द्वितीयस्थितिगतमाकृष्य प्रथमां स्थितिं करोति वेदयते च, तदानीमसौ सूक्ष्म-

सम्पराय उच्यते। प्रागुक्ताश्चावलिकास्तृतीयस्थितिगताः शेषीभूताः सर्वा अपि वेद्यमानासु परप्रकृतिषु स्तिबुकसंक्रमेण संक्रमयति। प्रथमकिट्टिगताश्चावलिका द्वितीयकिट्ट्यन्तर्भूता वेद्यन्ते, द्वितीयकिट्टिगताश्चावलिकास्तृतीयकिट्ट्यन्तर्गता वेद्यन्ते। सूक्ष्मसम्परायगुणस्थाने वर्तमानो लोभस्य सूक्ष्मकिट्टीर्वेदयमानः सूक्ष्मकिट्टिदलिकं समयोनावलिकाद्विकबद्धं च प्रतिसमयं स्थितिघातादिभिस्तावत्क्षपयति यावत्सूक्ष्मसम्परायाद्धायाः संख्येयभागा गता भवन्ति, एकोऽवशिष्यते ततस्तस्मिँश्च संख्येयभागे संज्वलनलोभं सर्वापवर्तनयाऽपवर्त्य सूक्ष्मसम्परायाद्धासमं करोति। सूक्ष्मसम्परायाद्धा चाद्याप्यन्तर्मुहूर्त्तप्रमाणा विद्यते। ततः प्रभृति मोहस्य स्थितिघातादयो निवृत्ताः, शेषकर्म्मणां प्रवर्तन्त एव। लोभस्यापवर्त्तितां स्थितिमुदयोदीरणाभ्यां तावत् वेद्यते यावत्समयाधिकावलिकामात्रं शेषः। ततोऽनन्तरसमये उदीरणा स्थिता, शेषीभूतं चावलिकागतं दलिकं केवलेनोदयेनैव वेद्यते। सूक्ष्मसम्परायचरमसमये च ज्ञानावरणपञ्चकदर्शनावरणचतुष्कान्तरायपञ्चकयशःकीर्त्युच्चैर्गोत्रान्तरायपञ्चकरूपाणां षोडशप्रकृतीनां बन्धव्यवच्छेदः मोहनीयस्योदयसत्ताव्यवच्छेदश्च भवति। ततोऽनन्तरसमये क्षीणकषायो भवति। तत्रापि शेषकर्मणां स्थितिघातादयः प्राग्वत्तावत्प्रवर्त्तन्ते यावत् क्षीणकषायाद्धायाः संख्येया भागा गता भवन्ति, एकः संख्येयभागोऽवतिष्ठते। तस्मिँश्च संख्येयभागे वर्तमानो ज्ञानावरणपञ्चकदर्शनावरणषट्कान्तरायपञ्चकरूपाणां षोडशप्रकृतीनां स्थितिसत्कर्म सर्वापवर्त्तनयाऽपवर्त्त्य क्षीणकषायाद्धासमं करोति, केवलं निद्राद्विकस्य स्वरूपापेक्षया समयन्यूनं सामान्यकर्म्मसत्तापेक्षया तु तुल्यम्। ततो द्विचरमसमये निद्राद्विकस्य स्वरूपसत्तापेक्षया क्षयश्चतुर्दशप्रकृतीनां च चरमसमये क्षयः। ततोऽनन्तरसमये व्यवहारनयापेक्षया केवली भवति, निश्चयनयापेक्षया च क्षीणकषायचरमसमये केवली भवतीति कर्मप्रकृतिपञ्चसंग्रहवृत्त्याद्यनुसारेण लिखितम्। आवश्यकचूर्णौ तु—"अह अबद्धाउगो ताहे तह पवत्तो चेव अवसेसाइं खवेति। तत्थ तहेव संजलणवज्जे अट्ठवि कसाए एगट्ठे चेव खवेति। जाहे तेसिं अट्ठण्हं कसायाणं संखेज्जत्तिभागं खवेमाणो गतो भवति ताहे नामस्स कम्मस्स इमाओ तेरस पयडीओ खवेइ, तंजहा—निरयगइनामं तिरियगइनामं एगिंदियजातिनामं बेइंदिय० तेइंदिय० चउरिंदियजातिनामं निरयाणुपुव्वीनामं तिरिक्खजोणियाणुपुव्वीनामं अपसत्थविहायगतिनामं थावरनामं सुहुमनामं साहारणनामं अपज्जत्तं, तहा दरिसणावरणीयस्स इमाओ तिन्नि पयडीओ, तंजहा—निद्दानिद्दा पयलापयला थीणगिद्धी य। तासिं अट्ठण्हं जं सेसं तंपि। एत्थ 'गाथा—गतिआणुपुव्वी दो दो जातिनामं च जाव चउरिंदी। अपसत्था विहगगती थावरणामं च सुहुमं च ॥ १ ॥ ४३ ॥ साहारणमपज्जत्तं निद्दानिद्दं च पयलपयलं च। थीणं खवेति ताहे अवसेसं जं च अट्ठण्हं ॥ २ ॥ ४४ ॥' ताहे णपुंसगवेदं, ताहे इत्थिवेदं, ताहे छक्कं हासरतिअरति भयसोगदुगुंछाओ, ताहे पुंवेदं तिन्नि भागे करेति, दो जुगवं, एगं संजलणकोहे छुभति, ताहे संजलणकोहं तिन्नि भागे करेति, दो भागे जुगवं खवेति, एगं भागं संजलणे माणे छुभइ, ताहे तं पि तिन्नि भागे करेति, दो भागे जुगवं खवेति, एगं संजलणमायाए छुहइ, ताहे तं पि

तिन्नि खंडाइं करेति, दो भागे जुगवं खवेति, एगं संजलणे लोभे छुहति, ताहे तं पि तिन्नि भागे करेति, दो भागे जुगवं खवेति, एगं भागं संखेज्जाइं खंडाइं करेति, एत्थ बादरसम्पराओ। ताहे (एगं संखिज्जइमं भागं मोत्तूण सव्वं) खवेति, जं संखेज्जतिमं खंडं तं असंखेज्जे भागे करेति, ते वि कमेण खवेति, तत्थ खवओ सुहुमसंपराओ। जाहे तं पि खवितं भवति ताहे खवगणियण्ठो लब्भति। एत्थंतरा विसमति अणाभोगणिव्वत्तिएणं करणोवाएणं, जहा कोइ महासमुदं तरिऊण जाहे अ णेय वाहो लद्धो भवति ताहे मुहुत्तं अच्छिऊण सेसं तरति, एवं सो अणेगभवसंचितं कम्मं खविऊण ताहे मुहुत्तमंतरं आसत्थो, एत्थंतरा जाव अच्छति ताव नियंठो लब्भति। जाव दोहिं समएहिं सेसेहिं केवलणाणमुप्पज्जिति त्ति, ताहे जो एगो समतो तत्थ निद्दं पयलं च खवेति, जो चरिमसमवो तत्थ पंचविहं णाणावरणिज्जं चउव्विहं दंसणावरणिज्जं, पंचविहं अंतराइयं, एयाओ चोद्दस य कम्मपयडीओ जुगवं खवेत्ता अणंतं केवलणाणदंसणं उप्पादेति। अन्ने भणंति,—जत्थ निद्दं पयलं च खवेति, तत्थ नामस्स इमाओ पगडीओ खवेति, तं जहा—देवगति, देवाणुपुव्वी, विउव्विदुगं, पढमवज्जाइं पंच संघयणाइं, अन्नतरवज्जाइं पंच संठाणाइं, आहारगं, तित्थगरनामं जदि अतित्थगरो; एत्थ गाहा—"वीसमिऊण० ॥ २–४५ ॥" "चरिमे णाण० ॥ २–४६ ॥" (मुद्रितावश्यके–'वीसमि० ॥ १२४ ॥' 'देवगति० ॥ १२५ ॥' 'चरिमे० ॥ १२६ ॥') इति, एतास्तिस्रोऽपि गाथा निर्युक्तिकारकृता इति हरिभद्रसूरिपादाः। अत्रार्थे मलयगिरिपादाः—"वीसमिऊण नियंठो दोहि उ समएहिं केवले सेसे। पढमं निद्दं पयलं नामस्स इमाउ पयडीओ ॥ १ ॥ देवगइआणुपुव्वी वेउव्विसंघयणपढमवज्जाइं। अन्नयरं संठाणं तित्थयराहारनामं च ॥ २ ॥ चरमे नाणावरणं पंचविहं दंसणं चउविगप्पं। पंचविहमंतरायं खवइत्ता केवली होइ ॥ ३ ॥" एतच्च मतमसमीचीनं चूर्णिकृतो भाष्यकृतः सर्वेषां च कर्मग्रन्थकाराणामसम्मतत्वात्, केवलं वृत्तिकृता केनाप्यभिप्रायेण लिखितमिति। सूत्रेऽप्येता गाथा प्रवाहपतिताः, निर्युक्तिकारकृतास्त्वेता न भवन्ति, चूर्णौ भाष्ये चासंग्रहादिति"। प्रस्तुते पुनः बृहत्कल्पवृत्तावपि—"अबद्धायुष्कः पुनरनुपरत एव समस्तां श्रेणिं समापयति। स च खल्पसम्यग्दर्शनावशेष एवाप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकं क्षपयितुं युगपदारभते। एतेषां च संख्येयतमं भागं क्षपयन्नेताः षोडशप्रकृतीः क्षपयति, तद्यथा—नैरयिकगतिनाम, तिर्यग्गतिनाम, एकेन्द्रियजातिनाम, द्वीन्द्रियजातिनाम, त्रीन्द्रियजातिनाम, चतुरिन्द्रियजातिनाम, नरकानुपूर्वीनाम, तिर्यगानुपूर्वीनाम, अप्रशस्तविहायोगतिनाम, स्थावरनाम, सूक्ष्मनाम, अपर्याप्तनाम, साधारणनाम, निद्रानिद्राप्रचलाप्रचलास्त्यानगृद्धिमिति। ततोऽष्टानां कषायाणामवशेषं क्षपयति, ततो नपुंसकवेदं, ततः स्त्रीवेदं, ततो हास्यादिषट्कं, ततः पुरुषवेदं त्रिधा कृत्वा खण्डद्वयं युगपत् क्षपयति, तृतीयं तु खण्डं संज्वलनक्रोधे क्षपयति। पुरुषे प्रतिपत्तर्ययं क्रमः। ×××× छद्मस्थवीतरागत्वसम्बन्धिनि समयद्वयेऽवशिष्यमाणे प्रथमे समये निद्रां, प्रचलां, देवगतिं, देवानुपूर्वी, वैक्रियशरीरनामकर्म, वज्रर्षभनाराचसंहननं मुक्त्वा शेषाणि संहननानि, षण्णां संस्थानानां मध्ये यस्मिन् व्यवस्थितस्तदेकं मुक्त्वा शेषाणि संस्थानानि, आहारकशरीरनाम, यदि तीर्थकरः प्रतिपत्ता ततस्तीर्थकरनाम कर्मापीत्येवं सप्तदशप्रकृतीः क्षपयति। ततो द्वितीयसमये पञ्चप्रकारं ज्ञानावरणं, चतुर्विधं दर्शनावरणं, पञ्चविधमन्तरायं क्षपयित्वा केवलविमलश्रियमवाप्नोति" इति।

योगो वीर्यं शक्तिरुत्साहः पराक्रमश्चेष्टा सामर्थ्यमिति पर्यायाः । स च मनोवाक्कायलक्षणकरणभेदात् तिस्रः संज्ञा लभते, मनोयोगो, वाग्योगः, काययोगश्च, तदुक्तं कर्मप्रकृतौ—"परिणामालंबणगहणसाहणं तेण लद्धनामतिगं । कज्जब्भासन्नोन्नप्पवेसविसमीकयपएसं ॥१॥" इति । तत्र भगवतो मनोयोगो मनःपर्यवज्ञानिभिरनुत्तरादिभिर्वा मनसा पृष्टस्य सतो मनसैव देशनात्, ते हि भगवत्प्रयुक्तानि मनोद्रव्याणि मनःपर्यवज्ञानेनावधिज्ञानेन वा पश्यन्ति, दृष्ट्वा च ते विवक्षिताकारमन्यथानुपपत्त्या लोकस्वरूपादिबाह्यार्थमवगच्छन्ति । वाग्योगो धर्मदेशनादौ । काययोगो निमेषोन्मेषचङ्क्रमणादौ । अनेन योगत्रिकेण सह वर्तत इति सयोगी । केवलं-केवलज्ञानं केवलदर्शनं च विद्यते यस्य स केवली, सयोगी चासौ केवली च सयोगिकेवली तस्य गुणस्थानं सयोगिकेवलिगुणस्थानम् । ते हि भगवन्तो जघन्यतोऽन्तर्मुहूर्त्तमुत्कर्षतश्च देशोनपूर्वकोटीं यावत् विहृत्य सर्वेऽपि समुद्घातादर्वागावर्जिकाकरणमारभन्ते । तत्र आ मर्यादया केवलिदृष्ट्या योजनमतिशुभयोगानामित्यायोजिका तस्य करणमायोजिकाकरणम् । केचिदावर्जितकरणमिति वर्णयन्ति, तेषामप्यावर्जितशब्दस्याभिमुखपर्यायवाचित्वात्, आवर्जितोऽभिमुखीकृत इति व्युत्पत्तेः, लोकेऽपि वक्तारो भवन्ति—आवर्जितोऽयं जनो मयेति । तथा च सिद्ध्यतः सिद्धत्वपर्यायपरिणामाभिमुखीकरणं यत्तदावर्जितकरणं, येन करणेन परिणत आत्मा नियमात् सिद्धत्वपर्यायपरिणामाभिमुखो भवतीत्यर्थः, यद्वा तथाभव्यत्वस्वभावेन सिद्धिगमनं प्रत्यावर्जितस्याभिमुखीकृतस्य करणमुदयावलिकायां कर्मप्रक्षेपणरूपं शुभयोगव्यापारणमावर्जितकरणम् । आवश्यकचूर्णौ त्ववश्यकरणमित्यभिधीयते, तत्रायं शब्दार्थः—"स्वोपात्तमनुष्यायुषोऽन्ते प्रक्षयवशात्—भुक्तस्यान्तर्मुहूर्तशेषे सिध्यत्पर्यायाभिमुखा अवश्यकरणं कुर्वन्तीति । कथमिदमवश्यकरणमिति प्रश्ने प्रदर्श्यते, अन्वर्थत्वादवश्यकरणसंज्ञाया भास्करवत्, अवश्यकरणीयत्वादवश्यकरणम् । कथमियमन्वर्थेति दर्श्यते, अर्थमनुगता या संज्ञा सान्वर्था अर्थमङ्गीकृत्य प्रवर्तत इत्यर्थः । कथम् ?, इह यथा भास्करसंज्ञा अन्वर्था । कथमन्वर्था ?, भासं करोतीति भास्कर इति यो भासनार्थस्तमङ्गीकृत्य प्रवर्तत इत्यन्वर्था, तथाऽवश्यकरणमिति इयं संज्ञा अन्वर्था । ××× अथवा अवश्यंभाव आवश्यकं 'द्वन्द्वमनोज्ञादिभ्यश्चे'ति मनोज्ञादेरधिकृतत्वात् घञि सत्यावश्यकसिद्धिः, आवश्यकं करणं आवश्यककरणं । कुतः ?, लोके दृष्टत्वात्, मल्लस्य कक्षाबन्धकरणवत् । यथा मल्लो युयुत्सुर्नाबद्ध्वा साटकं युध्यते, स हि प्रथममेव साटकेन कक्षां बद्ध्वा अतः परं कृतावश्यककक्षाबन्धकरणो योद्धुमारभते, तथाऽन्तर्मुहूर्तायुःशेषेण केवलिना सिद्ध्यता प्रथममेवेदं करणं अवश्यकर्तव्यमित्यावश्यककरणमिति" । इदं त्वावश्यककरणं सर्वेऽपि भगवन्तः केवलिनस्तीर्थकराश्च सिध्यन्तः नियमात् कुर्वन्ति । समुद्घातं तु केचित् कुर्वन्ति केचिन्नेति, तदुक्तं गुणस्थानक्रमारोहे—"यः षण्मासाधिकायुष्को लभते केवलोद्गमम् । करोत्यसौ समुद्घातमन्ये कुर्वन्ति वा न वा ॥ १ ॥" गुणस्थानक्रमारोहवृत्तौ त्वेवं दृश्यते—"छम्मासाऊसेसे उप्पन्नं जेसि केवलं नाणम् । ते नियमा समुग्घाया सेसा समुग्घायभइयव्वा ॥ १ ॥" इति । आवश्यकचूर्णौ त्वेवम्—"येऽन्तर्मुहूर्त्तमादिकृत्वोत्कर्षेण आ मासेभ्यः षड्भ्यः आयुषोऽवशिष्टेभ्यः

अभ्यन्तर आविर्भूतकेवलज्ञानपर्यायास्ते नियमात् समुद्घातं कुर्वन्ति, ये तु षण्मासेभ्य उपरिष्टादाविर्भूतकेवलज्ञानाः शेषास्ते समुद्घाताद् बाह्याः, ते समुद्घातं न कुर्वन्तीत्यर्थः, शेषाः समुद्घातं प्रतिभाज्याः । कस्माद्, यस्मात् षण्मासिकावशिष्टे आयुषि आविर्भूतकेवलज्ञानपर्यायेभ्यः सकाशात् षड्भ्यो मासेभ्यो ये उपरि समयोत्तरवृद्ध्याऽवशिष्टे आयुषि शेषे आविर्भूतकेवलज्ञानाः केवलिनः ते(भ्यश्च) शेषाः समुद्घातं प्रति भाज्याः, केचित्समुद्घातं कुर्वन्ति केचिन्नेति । अतः केचित् समुद्घातं कृत्वा केचिदकृत्वैव समवाप्नुवन्ति सिद्धिं, अथवा येषां बहु संवेद्यमस्ति आयुश्चाल्पमवतिष्ठते ते नियमात्समुद्घातं कुर्वन्ति नेतरे"। तथा प्रज्ञापनासूत्रमपि–"सव्वे वि णं भंते ! केवलीसमुग्घायं गच्छन्ति ? गोयमा ! णो इणट्ठे समट्ठे–"जस्साऊएण तुल्लाइँ बन्धणेहिं ठितीहि य । भवोवग्गहकम्माइं समुग्घायं से ण गच्छइ ॥ १ ॥ अगंतूणं समुग्घातं अणंता केवली जिणा । जरमरणविप्पमुक्का सिद्धिं वरगइं गया ॥ २ ॥" इति । ननु कुतोऽयं नियमो यद्वेदनीयाद्येवायुषः सकाशादधिकस्थितिकं भवति, न कदाचिदपि वेदनीयादेरायुरिति चेत् ? उच्यते, तथारूपजीवपरिणामस्वाभाव्यात् । इत्थंभूत एव ह्यात्मनः परिणामो येनास्यायुर्वेदनीयादेः समं न्यूनं वा भवति, न कदाचनाप्यधिकम् । यथायुषोऽध्रुवबन्धित्वं शेषकर्म्मणां ध्रुवबन्धित्वमायुषां स्वभवत्रिभागादिके प्रतिनियतकाले च बन्धः, न चेदृग्बन्धवैचित्र्ये स्वभावमन्तरेण अपरो हेतुः कश्चिदस्ति, एवमायुषो वेदनीयादेराधिक्याभावेऽपि स्वभावविशेष एव नियामको द्रष्टव्यः ।

ननु समुद्घातशब्दस्य कोऽर्थः ? इति चेत्, सम्यगपुनर्भावेन उत्प्राबल्येन घातो वेदनीयादिकर्म्मणां नाशो यस्मिन् क्रियाविशेषे स समुद्घात इत्यर्थः । तं च कुर्वन् प्रथमे समये औदारिककाययोगे वर्तमानः केवली, बाहल्यतः स्वशरीरप्रमाणमूर्ध्वमधश्च लोकान्तं यावदात्मप्रदेशानां दण्डमारचयति, एवं सर्वं समुद्घातस्वरूपमावश्यकचूर्णितो लिख्यते–"तत्र प्रथमे औदारिकयोगस्था दण्डकं कुर्वन्ति । अथ दण्डक इति कोऽर्थः ? दण्डक इव दण्डकः । क उपमार्थः ? यथा मूलमध्याग्रे ऊर्ध्वाधःसमप्रदेशः परिवृत्तपर्यायः स दण्डकः, तथा समुद्घातकरणवशान्निर्गतानामात्मप्रदेशानां दण्डकसंस्थानेनावस्थानाद्दण्डकत्वसिद्धिः । अथ दण्डककरणे को विधिरिति प्रश्ने ब्रूमहे–इह व्यावहारिकनयवशात् ये असंख्येया जीवप्रदेशास्ते सर्वेऽपि बुद्ध्या असंख्येया भागा निर्गच्छन्ति, असंख्येयो भागोऽवतिष्ठते, ततस्तैरेव असंख्येयैर्जीवप्रदेशभागैः स्वशरीरान्निर्गतैर्हि दण्डकमभिनिर्वर्तयन्तोऽष्टौ जीवमध्यप्रदेशान् सान्ततिकपरस्परावियोगिनो रुचकसंस्थितान् चक्री वैडूर्यपटलयोरुभयो रत्नाद्यवस्थायिषु रुचकसंस्थितलोकमध्यप्रविष्टाष्टाकाशप्रदेशेषु संस्थाप्य चतुर्दशरज्ज्वायतं दण्डकं कुर्वन्तीति । ततो द्वितीयसमये कपाटं कुर्वन्ति, तत्समय एव चौदारिकमिश्रकाययोगो भवति । कपाटकमिति कोऽर्थः ? कपाटकमिव कपाटकं । क उपमार्थः ? यथोभयोः प्राक्प्रत्यग्दिशोस्तिर्यग्विस्तीर्य अपागुदग्दिशयोर्ह्रस्वमूर्ध्वाधोदिशयोरुच्छ्रितं कपाटमिति शब्द्यते तथा समुद्घातकरणवशान्निर्गतानामात्मप्रदेशानां पूर्वापरदक्षिणोत्तरासु दिक्षु कपाटस्थानेनावस्थानात् कपाटकत्वसिद्धिः । अथ कपाटकरणे को विधिरिति प्रश्ने ब्रूमहे–अतः प्रथमसमयनिर्गतात्मप्रदेशसकाशात् योऽसंख्येयो भागोऽवशिष्टोऽवतिष्ठत इत्युक्तं स बुद्ध्या पुनरपि असंख्येयान् भागान् गतस्ततो द्वितीयसमये कपाटकारकाणां असं-

ख्येया भागा निष्कामन्ति, असंख्येयभागोऽवतिष्ठतेऽनेकैरसंख्येयैर्भागैरेतैः कपाटकं कुर्वन्ति। तत्र ये निर्गतास्ते प्रथमसमयनिर्गतात्मप्रदेशसकाशात् असंख्येयगुणहीना असंख्येयभागा इत्यर्थः। अथ तृतीयसमये प्रतरं कुर्वन्ति तत्सामयिकश्च कार्मणकाययोगो भवति। अथ प्रतरमिति कोऽर्थः ? प्रतरमिव प्रतरं। क उपमानार्थः ? यथा घननिचितनिरन्तरप्रचितावयवसंस्थितापरिवृत्तं स्थालकं फलकं वा लोके प्रतरमित्युच्यते, तथाकारमपरमपि परस्परप्रदेशसंसर्गाविच्छेदपरिवृत्तपर्यायेणावस्थितं प्रतरमिति प्रसिद्धम्। अथ तृतीयसमये प्रतरपूरकाणां को विधिरिति प्रश्ने प्रतिब्रूमहे—ततो द्वितीयसमये निर्गतात्मप्रदेशसकाशात् योऽसंख्येयो भागोऽवशिष्टोऽवतिष्ठत इत्युक्तमसावपि बुद्ध्या पुनरसंख्येयभागाः कृतस्तत-स्तृतीयसमये प्रतरकारकाणामसंख्येयभागा निष्कामन्ति, असंख्येयभागोऽवतिष्ठते, तैरसंख्येयैर्भागैर्निर्गतैरेतैः प्रतरं पूरयन्ति, तत्र ये निष्क्रान्तास्ते द्वितीयसमयनिष्क्रान्तात्मप्रदेशसकाशादसंख्येयगुणहीनाः। ततश्चतुर्थसमये कार्मणकाययोगस्थान एव आकाशप्रदेशान् निष्कुटसंस्थानसंस्थितान् लोकव्यपदेशभाजोऽपूरितान् पूरयन्तीति लोकपूरकाः। तथा तेषां को विधिरिति प्रश्नेऽभिदध्महे—ततस्तृतीयसमयनिर्गतात्मप्रदेशसकाशात् योऽसंख्येयभागोऽवतिष्ठत इत्युक्तमसावपि बुद्ध्या पुनरप्यसंख्येया भागाः क्रियते, ततश्चतुर्थसमये लोकपूरकाणामसंख्येयभागा निष्कामन्ति, असंख्येयभागोऽवतिष्ठते। ततस्तैरसंख्येयभागैर्निष्क्रान्तैरेतैर्लोकनिष्कुटान् पूरयन्ति, तत्र ये निष्क्रान्तास्ते तृतीयसमयनिष्क्रान्तात्मप्रदेशसकाशादसंख्येयगुणहीनाः, यश्चाधुना असंख्येयभागोऽवतिष्ठतेऽसौ स्वशरीरावगाह्यावकाशप्रमाण इति।

"तस्येदानीं मनुष्यावस्थायां या पल्योपमासंख्येयभागमात्रा कर्मत्रयसत्कर्मस्थितिरवतिष्ठते सा बुद्ध्या असंख्येयभागाः क्रियते। ततः प्रथमसमये दण्डककारकसत्कर्मस्थितेरसंख्येयान् भागान् हन्ति, असंख्येयभागोऽवतिष्ठते। यश्चामुष्यामवस्थायां कर्मत्रयानुभवः स बुद्ध्या अनन्तभागाः क्रियते, ततोऽसातवेद्यन्यग्रोधसातिकुब्जकवामनहुण्डसंस्थानवज्रनाराचार्धनाराचकीलिकासंप्राप्तसृपाटिकासंहननाप्रशस्तवर्णगन्धरसस्पर्शोपघाता[प्रशस्तविहायोगत्यपर्याप्तका]स्थिराशुभदुर्भगदुःस्वरानादेयायशःकीर्तिनीचैर्गोत्रसंज्ञिकानां पञ्च(त्रयो)विंशतेरप्रशस्तानां प्रक्रीडनसमये दण्डककारकानुभवस्यानन्तान् भागान् हन्ति, अनन्तभागोऽवतिष्ठते। तत्सामयिकमेव सद्वेद्यमनुष्यदेवगतिपञ्चेन्द्रियजात्यौदारिकवैक्रियाहारकतैजसकार्मणशरीरसमचतुरस्रसंस्थानौदारिकवैक्रियाहारकशरीराङ्गोपाङ्गवज्रर्षभनाराचसंहननप्रशस्तवर्णगन्धरसस्पर्शमनुष्यदेवगतिप्रायोग्यानुपूर्व्यगुरुलघुपराघातातपोद्योतोच्छ्वासप्रशस्तविहायोगतित्रसबादरपर्याप्तप्रत्येकशरीरस्थिरशुभसुभगसुस्वरादेययशःकीर्तिनिर्माणतीर्थकरोच्चैर्गोत्रसंज्ञकानामेकोनचत्वारिंशतः प्रशस्तानामपि प्रकृतीनां योऽनुभवस्तस्याप्रशस्तप्रकृत्यनुभवघातनानुप्रवेशेनैव घातनं ज्ञेयम्। अथ द्वितीयसमये कपाटकारकस्य स्थित्यनुभागघातने को विधिरिति प्रश्नेऽभिदध्महे—प्रथमसमयघातितसत्कर्मस्थितेः सकाशात् योऽसंख्येयभागोऽवतिष्ठते इत्युक्तं असावपि बुद्ध्या पुनरसंख्येयभागाः क्रियते तस्य कपाटकारकोऽप्यसंख्येयान् भागान् हन्ति, असंख्येयभागोऽवतिष्ठते। ततोऽनुभवस्यापि प्रथमसमयघातनानुभवसकाशात् योऽवशिष्टोऽनन्तोऽनुभवोऽवतिष्ठत इत्युक्तं असावपि बुद्ध्या पुनरनन्तभागाः क्रियते, तस्य कपाटकारकोऽनन्तान् भागान् हन्ति, अनन्तभागोऽवतिष्ठते, अयमपि चाप्रशस्तप्रकृत्यनुभवघातनानुप्रवेशनेनैव प्रशस्तप्रकृत्यनुभवघातं करोतीति ज्ञेयम्। अथ तृतीयसमये प्रतरपूरकस्य स्थित्यनुभवघातने को विधिरिति

प्रश्नेऽभिसंवादीयते—ततो द्वितीयसमयघातितसत्कर्मस्थितेः सकाशात् योऽसंख्येयभागोऽवशिष्टोऽवतिष्ठत इत्युक्तं असावपि बुद्ध्या पुनरसंख्येयभागाः क्रियते, तस्य प्रतरपूरकोऽसंख्येयान् भागान् हन्ति, असंख्येयभागोऽवतिष्ठते, ततोऽनुभवस्यापि तृतीयसमयघातितानुभवसकाशात् योऽवशिष्टोऽनन्तोऽनुभवोऽवतिष्ठत इत्युक्तं असावपि बुद्ध्या पुनरनन्तभागाः क्रियते, तस्य लोकपूरकोऽनन्तान् भागान् हन्ति, अनन्तभागोऽवतिष्ठते, अयमपि च अप्रशस्तप्रकृत्यनुभवघातनानुप्रवेशनेनैव प्रशस्तप्रकृत्यनुभवघातनं करोतीति ज्ञेयम् । एवं पूर्णलोकस्य कर्मत्रयसत्कर्म आयुषः सकाशात् संख्येयगुणं जातं, अनुभवोऽनन्तः । एवं चत्वारः समया भवन्ति । अतः परं प्रतिनिवृत्तः पञ्चमे समये प्रतरे तिष्ठति कार्मणकाययोगस्थः । अथास्यामवस्थायां स्थित्यनुभवघातने को विधिरिति प्रश्ने निगद्यते—अतश्चतुर्थसमयघातितस्थितिसत्कर्मणः सकाशात् या असंख्येयभागप्रमाणावशिष्टा स्थितिरवतिष्ठत इत्युक्तं सा बुद्ध्या संख्येया भागाः क्रियते, पञ्चमसमये प्रतरस्थः संख्येयान् भागान् हन्ति, संख्येयभागोऽवतिष्ठते । यश्चतुर्थसमयघातितानुभवसकाशात् अनन्तोऽवशिष्टोऽनुभवोऽवतिष्ठत इत्युक्तं असावपि बुद्ध्या अनन्ता भागाः क्रियते, तस्य पञ्चमसमये प्रतरस्थोऽनन्तान् भागान् हन्ति, अनन्तभागोऽवतिष्ठते । एषु दण्डकादिषु पञ्चसु समयेषु सामयिकं कण्डकमुत्कीर्णमिति कृत्वा समये समये स्थित्यनुभवघातो ज्ञेयः । अथ किमिदं कण्डकमिति प्रश्ने ब्रूमहे—कण्डकमिव कण्डकं । क उपमार्थः ? यथा लोके तरोः खण्डभागः अंशः कण्डकमित्यभिधीयते, तथा कर्मतरोरपि खण्डं कण्डकमिति सिद्धं । अतः परं षष्ठसमयादारभ्य स्थितिकण्डकमनुभागकण्डकं वा आन्तर्मौहूर्त्तिकमुत्किरति, कण्डकं यतः क्षिपति विनाशयतीत्यर्थः । एवं षष्ठे कपाटसमये औदारिकमिश्रकाययोगस्थः, सप्तमे औदारिकमिश्रकाययोगस्थः, अष्टमे च स्वशरीरप्रवेशसमये स्थितिकण्डकमनुभागकण्डकं च नाशनार्थं स्पृष्टं सत् अनन्तरसमये एव नंष्टुमारब्धं न तावत्कात्स्न्र्येन नश्यति, किन्तु षष्ठादिषु समयेषु कर्मतरुकण्डकं स्पृष्टं सकलसमयेष्वेति । एवं तावत्समयेषु दलमुपैति यावदन्तर्मुहूर्त्तः पूर्ण इति । तदनेन विधिनाऽन्तर्मुहूर्त्तपूरणचरमसमयानन्तरमेव कृत्स्नकण्डकमुत्कीर्णमित्यवसेयं, उत्कीर्णं नष्टमित्यर्थः । एवं प्रतिसमयमान्तर्मौहूर्तिकः स्थित्यनुभवकण्डकघातको ज्ञेयस्तावद्यावत्सयोगिनोऽन्त्यसमय इति । एवमेतानि सर्वाण्यपि संख्येयानि स्थित्यनुभवकण्डकानि ज्ञेयानि, ततः स्वशरीरं प्रविष्टोन्तर्मुहूर्तमास्त" इति । 'सर्वाण्यपि चामूनि स्थित्यनुभागकण्डकान्यसंख्येयान्यवगन्तव्यानी'ति न्यायाचार्याः कर्मप्रकृतिवृत्ताविति । अन्यत्र तु प्रथमसमये बाहल्यतः स्वशरीरप्रमाणमूर्ध्वमधश्च लोकान्तपर्यन्तमात्मप्रदेशानां दण्डमारचयति, द्वितीये समये पूर्वापरं दक्षिणोत्तरं वा कपाटं, तृतीये मन्थानं, चतुर्थेऽवकाशान्तरपूरणं, पञ्चमेऽवकाशान्तराणां, षष्ठे मथः, सप्तमे कपाटस्य संहरणं, अष्टमे स्वशरीरस्थो भवतीति । उत्कृष्टतोऽप्यन्तर्मुहूर्त्तावशेषायुष्येव समुद्घातं कुर्वन्ति, न षण्मासावशेषायुष्के, पीठफलकादीनां प्रत्यर्पणस्येव ग्रहणस्याप्यभिधानप्रसङ्गात्, तदुक्तं लोकप्रकाशे—"कैश्चिदित्युच्यते यत्तु शेषषण्मासजीवितः । जिनः कुर्यात् समुद्घातं तदसद्यत्तथा सति ॥१॥ प्रातिहारिकपीठादेरादानमपि सम्भवेत् । श्रुते तु केवलं प्रोक्तं तत्प्रत्यर्पणमेव हि ॥ २ ॥" इति । अधिकं प्रज्ञापनान्तिमपदवृत्तितोऽवसेयम् । ततो लेश्यानिरोधार्थं योगनिमित्तबन्धनिरोधार्थं च योगनिरोधमवश्यं कुरुते, तदुक्तम्—"स ततो योगनिरोधं करोति

लेश्यानिरोधमभिकाङ्क्षन् । समयस्थितिं च बन्धं योगनिमित्तं विनिरुत्सन् ॥ १ ॥ समये समये कर्म्मादाने सति सन्ततेर्न मोक्षः स्यात् । यद्यपि हि विमुच्यन्ते स्थितिक्षयात् पूर्वकर्म्माणि ॥ २ ॥ नोकर्मणा हि वीर्यं योगद्रव्येण भवति जीवस्य । तस्यावस्थाने तु सिद्धः समयस्थितिबन्धः ॥ ३ ॥" इति । योगनिरोधं कुर्वन् प्रथमतो बादरकाययोगावष्टम्भादन्तर्मुहूर्त्तमात्रेण बादरवाग्योगं निरुणद्धि । तन्निरोधानन्तरमन्तर्मुहूर्त्तं स्थित्वा बादरकाययोगावष्टम्भेनैव बादरमनोयोगं निरुणद्धि । बादरमनोयोगनिरोधानन्तरं पुनरप्यन्तर्मुहूर्त्तं स्थित्वोच्छ्वासनिश्वासावन्तर्मुहूर्त्तमात्रेण निरुणद्धि । ततः पुनरप्यन्तर्मुहूर्त्तं स्थित्वा सूक्ष्मकाययोगबलात् बादरकाययोगं निरुणद्धि, बादरकाययोगे सति सूक्ष्मस्य निरोद्धुमशक्यत्वात्, तदुक्तं—"बादरतनुमपि निरुणद्धि ततः सूक्ष्मेण काययोगेन । न निरुद्ध्यते हि सूक्ष्मो योगः सति बादरे योगे ॥ १ ॥" इति । आवश्यकचूर्णौ तु 'बादरकाययोगबलात् बादरकाययोगं निरुणद्धि, यथा कारपत्रिकः स्तम्भे स्थितस्तमेव स्तम्भं छिनत्ति', तथा च तद्ग्रन्थः—"ततोऽन्तर्मुहूर्तं स्थित्वोपर्यनन्तरसमय एव बादरकाययोगं निरोद्धुमारब्धः, ततोन्तर्मुहूर्त्तस्यान्त्यसमये बादरकाययोगी निरुध्यमानो निरुद्धः, तत्स्थः तमेव क्षपयतीति । अयुक्तमिति चेत् ? न, दृष्टत्वात्, तद्यथा—कारपत्रिकः क्रकचेन स्तम्भे छिदिक्रियां प्रारभमाणः तत्स्तम्भमेव छिनत्ति तथा काययोगोपष्टम्भात् काये गतिरोधोऽप्यवसेयः" इति, तत्त्वं पुनस्तद्विदो विदन्ति ।

बादरकाययोगं निरुन्धानः पूर्वस्पर्द्धकानामधस्तादपूर्वस्पर्द्धकानि करोति । तत्र यानि तस्मिन् भवे पर्याप्तिपर्यायपरिणतेन सता जीवेन पूर्वं कायादिव्यापारनिष्पादनार्थं कृतानि तानि पूर्वस्पर्द्धकानीत्युच्यन्ते, तानि च स्थूलानि । यानि पुनरधुना कर्तुमारभते तानि सूक्ष्माणि । न चैवंभूतान्यनादौ संसारे कदाचिदपि कृतानीत्यपूर्वाण्युच्यन्ते । तत्र पूर्वस्पर्द्धकानां मध्ये याः प्रथमादिका वर्गणास्तासां ये वीर्याविभागास्तेषामसंख्येयान् भागानाकर्षति, एकमसंख्येयं भागं मुञ्चति, जीवप्रदेशानामप्येकमसंख्येयभागमाकर्षति, शेषं सर्वं स्थापयति । एष बादरकाययोगनिरोधप्रथमव्यापारः, तदुक्तं कर्मप्रकृतिप्राभृते—"पढमसमए अपुव्वफड्डगाणि करेइ, पुव्वफड्डगाणं हेट्ठा आइवग्गणाण अविभागपरिच्छेदाणमसंखेज्जे भागे ओकड्डइ जीवपएसाणं च असंखेज्जइमं भागमोकड्डइ" इति । ततो द्वितीयसमये प्रथमसमयाकृष्टजीवप्रदेशासंख्येयभागादसंख्येयगुणं भागं जीवप्रदेशानामाकर्षति, वीर्याविभागपलिच्छेदानामपि प्रथमसमयाकृष्टादसंख्येयगुणहीनं भागमाकर्षति । एवं प्रतिसमयं समाकृष्य समाकृष्य तावदपूर्वस्पर्द्धकानि करोति यावदन्तर्मुहूर्त्तचरमसमयः । तानि श्रेणिवर्गमूलासंख्येयभागमात्राणि पूर्वस्पर्द्धकानामसंख्येयभागमात्राणि च भवन्ति, तथा चावश्यकचूर्णौ—"अत्र काययोगं निरुन्धन् पूर्वस्पर्द्धकानामधस्तादपूर्वस्पर्द्धकानि करोति । अथ किमिदं स्पर्द्धकमिति प्रश्ने व्याचक्ष्महे—स्पर्द्धकमिव स्पर्द्धकं । क उपमार्थः ? यथा लोके शालिफलकणकाणशानां समुदायात् मुष्टिर्भवति या स्पर्द्धकमिति शब्द्यते । कथमिति तद्विवृण्महे—'स्पर्द्ध संघर्षे' इति शब्दात् भवति स्पर्द्धकं संघर्षः, समुदायः, पिण्ड इत्यनर्थान्तरम् । अथ केषां संघर्ष इति व्याचक्ष्महे—इह यथा बहूनां समुदायः क्षणे ( कण्डकं )

संभवति, बहूनां च काण्डस्थकणकाणशानां समुदायात् मुष्टिरिति भवति, एवम् शालिफलकणतुल्यानामसंख्येयानां लोकानां ये प्रदेशास्तत्प्रमाणप्रमितानामविभागपरिच्छेदानां भावपरमाणुसञ्जितानां समुदायात् काणशतुल्या वर्गणा भवति, एवमसंख्येया वर्गणा श्रेण्या असंख्येयभागप्रमाणा एकजीवे भवन्ति, तासां च बहुकाण्डस्थकणकाणशसमुदायोत्पन्नमुष्टितुल्यानामसंख्येयानां वर्गणानां श्रेण्या असंख्येयभागमात्राणां समुदायादेकं स्पर्द्धकं भवति, एवमसंख्येयानि स्पर्द्धकानि श्रेण्या असंख्येयभागमात्राण्येकजीवे सन्ति। अथ किमिदं पूर्वकस्पर्द्धकानि अपूर्वस्पर्द्धकानीति च प्रश्ने व्याचक्ष्महे–यानि पर्याप्तिपर्यायेण परिणतात्मना पूर्वमेव योगनिर्वर्तनार्थमुपात्तानि यानि चानादौ संसारे पुनः पुनः योगनिर्वृत्त्यर्थं पूर्वमुपात्तान्यात्मना तानि पूर्वस्पर्द्धकानि इत्यभिधीयन्ते, तानि स्थूलानि, यान्यधुना क्रियन्ते तानि सूक्ष्माणि, न च तथा लक्षणानि अनादौ संसारे परिभ्रमता आत्मना कदाचिदप्युपात्तानि इत्यतोऽपूर्वस्पर्द्धकानि व्याख्यायन्ते। अथ अपूर्वस्पर्द्धककरणे को विधिरिति प्रश्नेऽभिदध्महे–अधस्तात्पूर्वस्पर्द्धकानामादिवर्गणा यास्तासां अविभागपरिच्छेदा ये तेषामयं यौगजधर्मानुग्रहादसंख्येयान् भागानाकर्षति, असंख्येयभागं स्थापयति, जीवप्रदेशानामपि च असंख्येयभागमाकर्षति, असंख्येयान् भागान् स्थापयति, एवं प्रथमसमये। द्वितीयसमये प्रथमसमयाकृष्टाविभागपरिच्छेदानां असंख्येयेभ्यो भागेभ्यः सकाशादसंख्येयगुणहीनं भागमाकर्षति, असंख्येयभागमाकर्षतीत्यर्थः, जीवप्रदेशानामपि च प्रथमसमयाकृष्टजीवप्रदेशासंख्येयभागसकाशादसंख्येयगुणभागमाकर्षति, असंख्येयभागानाकर्षतीत्यर्थः। एतेन विधिनाऽऽकृष्य योगजधर्म्मानुग्रहादपूर्वस्पर्द्धकानि करोति, एवं समये समये भागं करोति यावत्पूर्णोऽन्तर्मुहूर्त्त इति। कियन्ति पुनः स्पर्द्धकानि करोतीति प्रश्ने ब्रूमहे–श्रेण्या असंख्येयभागमात्राणि, श्रेणिवर्गमूलस्याप्यसंख्येयभागमात्राणि, पूर्वस्पर्द्धकानामप्यसंख्येयभागमात्राणि" इति। अपूर्वस्पर्द्धककरणपरिसमाप्त्यनन्तरसमय एव किट्टीः कर्तुमारभते। अन्तर्मुहूर्त्तेन च सर्वा अपि करोति, तदुक्तं–"नाशयति काययोगं स्थूलं सोऽपूर्वफड्डकीकृत्य। शेषस्य काययोगस्य तथा किट्टीश्च स करोति॥ १॥" इति। ननु किट्टिरिति कः पदार्थः? उच्यते, एकोत्तरवृद्धिं च्यावयित्वाऽनन्तगुणहीनैकैकवर्गणास्थापनेन योगस्याल्पीकरणम्। तत्र पूर्वस्पर्द्धकानामपूर्वस्पर्द्धकानां चाधस्तात् या आदिवर्गणास्तासामविभागपरिच्छेदा ये तेषामयं योगजधर्मानुग्रहादसंख्येयान् भागानाकर्षति, असंख्येयभागं चैकं स्थापयति, एकं चासंख्येयभागं जीवप्रदेशानामाकर्षति, शेषं च सर्वं स्थापयति, तदुक्तं कर्मप्रकृतिवृत्तौ–"जीवप्रदेशानामपि चैकमसंख्येयभागमाकर्षति शेषं सर्वं स्थापयति" इति, एष किट्टीकरणप्रथमसमयव्यापारः। ततो द्वितीयसमये प्रथमसमयाकृष्टवीर्याविभागपलिच्छेदभागादसंख्येयगुणहीनं वीर्याविभागभागमाकर्षति, जीवप्रदेशानां तु प्रथमसमयाकृष्टजीवप्रदेशासंख्येयभागादसंख्येयगुणं भागमाकर्षति, असंख्येयान् भागानाकर्षतीत्यर्थः। एवं किट्टीस्तावत् करोति, यावदन्तर्मुहूर्त्तचरमसमयः। प्रथमसमयकृताभ्यः किट्टिभ्यो द्वितीयसमयकृताः किट्टयोऽसंख्येयगुणहीनाः, गुणकारश्च पल्योपमासंख्येयभागः। एवं शेषेष्वपि समयेषु भावनीयम्, तदुक्तं कम्मप्रकृतिप्राभृते–"इत्थं अंतोमुहुत्तं किट्टीओ करेइ, असंखेज्जगुणहीणाए सेढीए जीवपएसे य

असंखेज्जगुणाए सेढीए ओकड्डइ, किट्टीगुणकारो पलिओवमस्स असंखेज्जइभागो" इति। मुद्रितावश्यकचूर्णौ तु 'किट्टिस्थाने कर्म्मणां कृष्टि'रुक्ता, तथा च तद्ग्रन्थः—"अथ किमिदं कृष्टिरिति प्रश्नेऽभिधीयते—कर्मणः कर्षणं कृष्टिरल्पीकरणमित्यर्थः। अथ कृष्टेः करणे को विधिरिति प्रश्ने व्याचक्ष्महे—पूर्वस्पर्द्धकानामपूर्वस्पर्द्धकानां चाधस्तात् या आदिवर्गणास्तासामविभागपरिच्छेदा ये तेषामयं योगजधर्मानुग्रहात् असंख्येयान् भागान् कर्षति, असंख्येयं भागं स्थापयति, जीवप्रदेशानामप्यसंख्येयान्(यं) भागान्(गं) कर्षति, असंख्येयं(यान्) भागं(गान्) स्थापयति, एवमादिकृष्ट्या प्रथमसमये कृष्टीः करोति। अथ द्वितीयसमये प्रथमसमयाकृष्टानामविभागपरिच्छेदानामसंख्येयेभ्यो भागेभ्यः सकाशादसंख्येयगुणहीनं भागमाकर्षति, असंख्येयभागमाकर्षतीत्यर्थः, जीवप्रदेशानामपि प्रथमसमयाकृष्टजीवप्रदेशासंख्येयभागसकाशादसंख्येयगुणं भागमाकर्षति, असंख्येयान् भागानाकर्षतीत्यर्थः। एवमनेन विधिनाऽऽकृष्याकृष्य कृष्टीः करोति, एवं समये समये कृष्टयः क्रियमाणाः क्रियन्ते तावद्यावच्चरमसमयकृष्टिरिति। तत्र प्रथमसमये याः कृष्टय कृता असंख्येयगुणास्ततो द्वितीयसमये असंख्येयगुणहीनाः, एवं समये समये असंख्येयगुणहीनाः श्रेण्या कृतास्तावद्यावदन्तर्मुहूर्त्तमिति, तत्र याः कृष्टयः प्रथमसमयकृतास्ता असंख्येयगुणाः कृता द्वितीयसमयकृताभ्यः सकाशात्। अथ या द्वितीयसमयकृतास्ताः प्रथमसमयकृतकृष्टिप्रमाणाः कथं भवन्तीति प्रश्नेऽभिधीयते—पल्योपमस्य(स्या) संख्येयभागेन गुणिताः। प्रथमसमयकृताः कृष्टयः श्रेण्या असंख्येयभागप्रमाणाः, एवं द्वितीयादिष्वपि समयेषु श्रेण्यां असंख्येयभागप्रमाणाः तावद्यावत्कृष्टिकरणस्यान्तश्चाशेषो युगपन्नष्टः। अधुनायुषः समानि जातानि कर्माणि" इति। प्रथमसमयकृताश्च किट्टयः श्रेण्यसंख्येयभागप्रमाणाः, एवं द्वितीयादिसमयेष्वपि प्रत्येकमवगन्तव्यम्। सर्वा अपि च किट्टयः श्रेण्यसंख्येयभागप्रमाणाः पूर्वस्पर्द्धकानामपूर्वस्पर्द्धकानां चासंख्येयभागमात्राः। किट्टीकरणावसानानन्तरं पूर्वस्पर्द्धकान्यपूर्वस्पर्द्धकानि च नाशयति। तत्समयादारभ्य चान्तर्मुहूर्त्तं यावत् किट्टिगतयोगो भवति, तदुक्तं—"किट्टिकरणे णिट्ठिए तओ से काले पुव्वफड्डगाणि (अपुव्वफड्डगाणि) च नासेइ अंतोमुहुत्तं किट्टिगयजोगो भवति त्ति"। न चात्र किञ्चिदपि करोति। ततोऽनन्तरसमये सूक्ष्मकाययोगावष्टम्भादन्तर्मुहूर्त्तमात्रेण सूक्ष्मवाग्योगं निरुणद्धि। ततो निरुद्धवाग्योगोऽन्तर्मुहूर्त्तं स्थित्वा ततोऽनन्तरसमये सूक्ष्मकाययोगबलेनैव सूक्ष्ममनोयोगं निरुणद्धि। तं च निरुन्धानः सूक्ष्मक्रियाप्रतिपाति शुक्लध्यानतृतीयपादमारोहति, तत्सामर्थ्याच्च वदनोदरादिविवरपूरणेन संकुचितदेहत्रिभागवर्त्तिप्रदेशो भवति, तदुक्तम्—"सूक्ष्मेण काययोगेन ततो निरुणद्धि सूक्ष्मवाङ्मनसे। भवति ततोऽसौ सूक्ष्मक्रियस्तदा किट्टिगतयोगः ॥ १ ॥ तमपि स योगं सूक्ष्मं निरुरुत्सन् सर्वपर्यायानुगतम्। सूक्ष्मक्रियमप्रतिपात्युपयाति ध्यानममनस्कम् ॥ २ ॥" इति। सूक्ष्मकाययोगं निरुन्धन् प्रथमसमये किट्टीनामेकमसंख्येयभागं मुक्त्वा शेषान् भागान् विनाशयति। द्वितीयसमये तस्यैव मुक्तस्यासंख्येयभागस्यासंख्येयान् भागान् कृत्वा मुक्त्वा चैकमसंख्येयभागं शेषान् भागान् विनाशयति। एवं समये समये तावत् किट्टीः विनाशयति यावत्सयोगिचरमसमय इति कर्मप्रकृतिवृत्त्यनुसारेण लिखितम्। आवश्यकचूर्णौ तु योगनिरोध एवमुक्तः, तथा च तद्ग्रन्थः—"ततो भगवं अचि-

न्त्येण ऐश्वर्येण योगनिरोधं करोति, से पुव्विं संणिस्स पढमसमयपज्जत्तगस्स हेट्ठा जाणि मणपायोग्गाणि दव्वाणि, यं वा मण्णेति [तेसिं] तासंखेज्जाणि ठाणाणि पुव्विं अविसुद्धाणि थूलाणि य पच्छा विसुज्झमाणस्स सण्हतरगाणि विसुद्धतरगाणि य ततो सेढी आवलिगाओ ओसरंति, जहा विसपरिगयस्स पदेसपदेसेणं विसं ओसरइ । एवं सो निरुंभमाणाणि २ ताव ओसरति जाव एगाए आवलियाए ठितो, जथा तलाए पढमं बिंदु ठितं वड्ढमाणे भरियं । एवं सो ओसरणाओ ताव आणेति जाव जो से पढमसमए पज्जत्तगस्स मणो आसी ततो पि ओसरइ पच्छा अमणो भवइ । एवं बिंदियस्स वि पज्जत्तगस्स वइजोगट्ठाणेसु, (वइजोगठाणं) णिरुंभित्ता जा वइअजोगी भवति । पच्छा सुहुमस्स पणगजीवस्स पढमसमयोववण्णस्स जावतिया सरीरोगाहणा तावतियाए अप्पगं हासंते २ निरुंभति । अण्णे पुण भणंति—तस्स पढमसमये चेव पणगस्स हेट्ठा असंखेज्जगुणं कायजोगं णिरुंभंतो णिरुंभए । तस्स किल वीरियावरणोदएणं मंदो जोगपरिप्फंदो तेण अप्पो काययोगो भवति, केवलिस्स पुण अंतराइयपरिक्खएणं अणुत्तरं निरावरणं जोगवीरियं । तेण अचिंतेण जोगसामत्थेणं जा सा केवलिस्स वीरीयसदव्वयाए अणुवरतं पएसपरिफुरणा तं एगिंदियजोगपफंदा ओसत्तिऊण निरंतरं णिरुंभति । जाइं च से सरीरे कम्मणिवत्तियाइं मुहसवणसिरोदरादिच्छिद्दाइं ताणि वियोएमाणो २ तिभागूणं पएसोगाहणं करोति । ताहे आणपाणुणिरोहं काउं अजोगी भवति । एवं सो योगत्रयनिरोहा सुक्कज्झाणस्स ततियभेयं सुहुमकिरियं अणियट्टिं अणुपविट्ठो करेति" इति । तथा श्रीजिनभद्रगणिक्षमाश्रमणपादाः—

"पज्जत्तगमित्तसन्निस्स जत्तियाइं जहन्नजोगिस्स । होंति मणोदव्वाइं तव्वावारो य जं मत्तो ॥ १ ॥ तदसंखगुणविहीणं समए समए निरुंभमाणो सो । मणसो सव्वनिरोहं करेइ असंखिज्जसमएहिं ॥ २ ॥ पज्जत्तमित्तबिंदियजहन्नवइजोगपज्जत्ता जे तु । तदसंखगुणविहीणे समए समए निरुंभंतो ॥ ३ ॥ सव्व वइजोगरोहं संखाईएहि कुणइ समएहिं । तत्तो य सुहुमपणयस्स पढमसमओववन्नस्स ॥ ४ ॥ जो किर जहन्न जोगो तदसंखिज्जगुणहीणमिक्किक्के । समए निरुंभमाणो देहतिभागं च मुंचन्तो ॥ ५ ॥ रुंभइ स कायजोगं संखाईएहि चेव समएहिं । तो कयजोगनिरोहो सेलेसीभावणामेइ ॥ ६ ॥" इति भणन्ति । तस्मिंश्च सयोगिकेवलिचरमसमये सप्तपदार्था युगपद् व्यवच्छिद्यन्ते, तद्यथा—सूक्ष्मकिट्टयः, सूक्ष्मक्रियाप्रतिपातिध्यानं, सातवेदनीयस्य बन्धो, नामगोत्रयोरुदीरणा, योगो, लेश्या, स्थित्यनुभागघातश्चेत्युक्तं सयोगिगुणस्थानम् ।

ततोऽनन्तरसमयेऽयोगिकेवली भवति । स च कर्मक्षपणाय व्युपरतक्रियमनिवृत्तिध्यानं ध्यायन् मध्यमप्रतिपत्त्या ह्रस्वपञ्चाक्षरोद्गिरणमात्रं कालं शैलेशीकरणं प्रविशति । तत्र शैलेशो मेरुस्तद्वत् निष्प्रकम्पत्वात् स्थिरता साम्यावस्था शैलेशी, यद्वाशीलं सर्वसंवरः तस्येशः शीलेशः तस्येयं योगनिरोधावस्था शैलेशी, यद्वा 'शील समाधौ' 'ईश ऐश्वर्ये' शीले ईशस्तद्भावः शैलेशः, तस्य करणं नाम पूर्वविरचितशैलेशीसमयसमानगुणश्रेणिकस्य वेदनीयनामगोत्राख्याघातिकर्मणोऽसंख्येयगुणया श्रेण्या आयुःशेषस्य च यथास्वरूपस्थितया श्रेण्या निर्जरणं शैलेशीकरणम् तत्र चासौ प्रविष्टोऽयोगी । स चासौ केवली चायोगिकेवली । स्थितिरसघातादिरहितः सो यान्युदयवर्त्तीनि कर्माणि तानि स्थितिक्षयेणा-

नुभवन् क्षपयति, यानि तु तदानीमनुदयवन्ति तानि वेद्यमानासु स्तिबुकसंक्रमेण संक्रमयन् वेद्यमानप्रकृतिरूपतया चानुभवंस्तावद्याति यावदयोग्यवस्थाद्विचरमसमयः। तस्मिंश्च द्विचरमसमये देवद्विकशरीरपञ्चकाङ्गोपाङ्गत्रिकबन्धनपञ्चकसंघातनपञ्चकसंस्थानषट्कसंहननषट्कवर्णादिविंशतिविहायोगतिद्विकागुरुलघूपघातपराघातोच्छ्वासनिर्माणापर्याप्तास्थिरषट्कप्रत्येकस्थिरशुभसुस्वरनीचैःसातासातान्यतरानुदितवेदनीयरूपाणि द्विसप्ततिः कर्माणि स्वरूपसत्तामधिकृत्य क्षयमुपगच्छन्ति, चरमसमये स्तिबुकसंक्रमेणोदयवतीषु संक्रम्यमाणत्वात्। चरमसमये चान्यतरवेदनीयोच्चैर्गोत्रमनुजत्रिकपञ्चेन्द्रियजातित्रसत्रिकसुभगादेययशःकीर्त्तितीर्थकररूपास्त्रयोदश प्रकृतयः क्षयमुपगच्छन्ति। अन्ये तु 'मनुजानुपूर्वी द्विचरमसमय एव क्षीयते, उदयवत्त्वाभावेन वेद्यमानासु स्तिबुकसंक्रमेण संक्रम्यमाणत्वात्। उदयवतीनां तु दलिकं चरमसमये स्वरूपेण प्राप्यत एव, आनुपूर्वीणां च क्षेत्रविपाकित्वेनापान्तरालगतावेवोदयः' इति। अत एतन्मते द्विचरमसमये त्रिसप्ततेश्चरमसमये च द्वादशानां सत्ताव्यवच्छेदः। शैलेशीकरणचरमसमयानन्तरमुच्छिन्नचतुर्विधकर्मबन्धनत्वादेरण्डफलवत् तथाविधालाबुवद्वोर्ध्वलोकान्ते गच्छति, न परतोऽपि धर्मास्तिकायाभावात्। स चोर्ध्वं गच्छन्नृजुश्रेण्या यावत्स्वाकाशप्रदेशेष्विहावगाढस्तावत एव प्रदेशानूर्ध्वमप्यवगाहमानो विवक्षितसमयात् समयान्तरमस्पृशन् गच्छति, तदुक्तमावश्यकचूर्णौ—"जत्तिए जीवो अवगाहे तावतियाए अवगाहणाए उड्ढं उज्जुगं गच्छति ण वंकं, अफुसमाणगती बितियं समयं ण फुसति" इत्युक्तमयोगिगुणस्थानम्। तदेवमुक्तानि गुणस्थानानि॥

॥ पुंवेदिनः सं० क्रोधेन क्षपकश्रेणिक्रमः॥

प्रस्थापकः-अबद्धायुः क्षीणसप्तकोऽप्रमत्तः।

क्रियाक्रमः

विशुद्धिः

यथाप्रवृत्तकं

अपूर्वकरणम् — अतो मध्यकषायाष्टकक्षपणा (स्थि० घातादिना)

अतः ९ मं गुणस्थानकप्र...

अत्र मध्य ८ कषायाणां स्थितिः प० असं० भा० ।

अत्र स्त्यान० ३–नरक २–तिर्य० २–कुजाति ४– स्था०–आत०–उद्यो०–सू०–साधा० इति १६ नाम् स्थि० प० असं० भा० ( उद्वलनया ) तथा एतासामेव गु० संक्रमः प्रादुर्भवति ।

अत्र क्षीणाः १६ प्रकृतयः ( पूर्वोक्ताः )

अत्र क्षीणं मध्यकषायाष्टकं ।१३ प्रकृतीनामन्तरकरणकरणं च ।

अत्रोद्वलनया नपुं०स्य द्वितीयास्थितिः प० असं० भा० जाता, तस्या एव गुणसंक्रमश्च प्रादुर्भूतः ।

अत्र नपुं० वेदः क्षीणः । स्त्रीवेदद्वितीयस्थित्युद्वलना च ।

अत्र स्त्रीवेदद्वि०स्थि०प०असं०भा०जाता, तस्या एव गुणसंक्रमश्च ।

क्षीणः स्त्रीवेदः । नोकषाय६कस्य च द्वि० स्थि० क्षपणाप्रारम्भः । ततस्तेषां दलिकप्रक्षेपः सं० क्रोधे ।

अश्वकर्णकरणाद्धा

अत्र क्षीणं नोक०६कं । पुं० स्य बन्धोदयोदीरणाविच्छेदः, समयोनावलिकाद्विकबद्धं च मुक्त्वा शेषं सर्वं क्षीणं, सं–४ कस्योपरि स्थितौ अपू०स्पर्द्धककरणारम्भः । अस्यामद्धायां वर्त्तमानः समयोनावलिकाद्विकेन कालेन पुंवेदं क्षपयति ।

किट्टीकरणाद्धा ( अन्तर्मु० )

अत्र सं०४कयोपरिस्थितौ अपू०स्प०करणं समाप्तं, अनन्तरतस्तत्रैव किट्टीकरणप्रारम्भः । ( ताश्च कल्पनया १२ )

अन्तर्मु०

१मा किट्टिः ( क्रोधस्य )

अत्र जाता १२ किट्टयः । अतः क्रोधस्य प्रथमकिट्टिवेदनं, माने गुणसंक्रमणं च ।

अतः द्वितीयकिट्टेरपि वेदनं, माने गु० सं० च ।

अत्र प्रथमकिट्टेश्चरमावलिका द्वि०किट्टयन्तर्गतत्वेन वेदिता।

अतः ३यकिट्टेरपि वेदनं, माने गु० सं० च।

अत्र २ यकिट्टेश्चरमावलिका तृ० किट्टयन्तर्गतत्वेन वेदिता।

अत्र क्रोधबन्धोदयोदीरणाविच्छेदः। सत्ता च शेषमात्रा एव तस्याश्च गु० सं०। अनन्तरतः मानस्य प्रथमकिट्टिवेदनं, मायायां गु० सं० च।

अत्र क्रोधतृतीयकिट्टेश्चरमावलिका स्तिबुकेन गता।

अत्र क्रोधशेषस्य गु० संक्रमः समाप्तः। अनन्तरं सर्वसंक्रमः। क्षीणः सं० क्रोधः।

अतः मानस्य २यकि० वे०, गु० सं० च।

अत्र मानस्य प्रथमकिट्टेश्चरमावलिका द्वि०किट्टयन्तर्गतत्वेन वेदिता।

अतः मानस्य ३यकि० वे०, गु० सं० च।

अत्र द्वि० किट्टेश्चरमावलिका तृ० किट्यन्तर्गतत्वेन वेदिता।

अत्र मानबन्धोदयोदीरणाविच्छेदः। सत्ता च शेषमात्रा। तस्याश्च गु० सं०।

अनन्तरतो मायायाः प्र० कि० वेदनं, लोभे गु० सं० च।

अत्र मानतृतीयाकिट्टेश्चरमावलिका स्तिबुकेन गता।

अत्र मानशेषस्य गु० सं० समाप्तिः । अनन्तरं सर्वसंक्रमेण क्षीणो मानः ।

अतः मायाद्वि० कि० वे० । गु० सं० च ।

अत्र प्र० किट्टिचरमाव० द्वि० किट्ट्यन्तर्ग० वेदिता ।

अतः मायातृ० कि० वे०, गु० सं० च ।

अत्र २ यकिट्टेश्चरमाव० तृ० किट्ट्यन्तर्ग० वेदिता ।

अत्र मायाबन्धोदयोदीरणाविच्छेदः । सत्ता च शेषमात्रा तस्याश्च गु० सं० ।

अनन्तरतः लोभप्रथमकिट्टिवेदनम् ।

अत्र मायातृ० किट्टेश्चरमाव० स्तिबुकेन गता ।

अत्र मायाशेषस्य गु० सं० समाप्तिः । अनन्तरं सर्वसंक्रमेण क्षीणा माया ।

अतः लोभ २ यकि० वे० । तृतीयकिट्टिसूक्ष्मकरणं च ।

अत्र प्र० किट्टेश्चरमाव० द्वि० किट्ट्यन्तर्ग० वेदिता ।

अत्र तृतीयकिट्टिः सूक्ष्मा जाता । सं० लोभबन्धघा० कषायोदयोदीरणाविच्छेदः ।

अनन्तरतः सू० किट्टेः शेषस्य च वेदनं क्षपणं च ।

अत्र २ यकिट्टेश्चरमाव० तृ० किट्ट्यन्तर्गतत्वेन वेदिता ।

अथ पूर्वं कस्मिन् गुणस्थानके कियन्त्यः प्रकृतयः संक्रामन्तीति निरूप्यते-तत्र सामान्यतः संक्रमे आयुश्चतुष्टयवर्जं चतुष्पञ्चाशच्छतं प्राप्यते। मिथ्यादृष्टौ आयुश्चतुष्टयमिथ्यात्ववर्जं त्रिपञ्चाशदधिकं शतं नानाजीवापेक्षया प्राप्यते, आयुषः सङ्क्रमाभावात् मिथ्यात्वस्य सम्यग्दृष्टेरेव संक्रमात् तद्वर्जनं कृतम्। एकजीवापेक्षया तूत्कृष्टतः प्रकृतीनां सार्धशतं सङ्क्रमे प्राप्यते, सातासातयोरन्यतरस्य, अन्यतरगोत्रस्य, आहारकजिननामोभयस्य मिथ्यादृष्टौ सत्ताभावेन जिनस्य मिथ्यात्वायुषां च वर्जनात्; एवमग्रेऽप्येकजीवापेक्षया स्वयं भावनीयम्। सास्वादनगुणस्थाने च सार्धशतं भवति, आयुश्चतुष्कमिथ्यात्वमिश्रसम्यक्त्वजिननाम्नां सङ्क्रमाभावात्, तत्रायुषः सर्वत्र प्रागुक्तहेतोर्वर्जनम्, "दुइयतइयवज्जा न दंसणतिगमपि" इति वचनात् दर्शनत्रिकवर्जनम्, जिननाम्नश्च सत्ताभावेन वर्जनं कृतमिति। मिश्रे एकोनपञ्चाशच्छतं सङ्क्रमे भवति, नीचैर्गोत्रस्य बन्धाभावेनोच्चैर्गोत्रस्य संक्रमो न भवति, शेषं पूर्ववत्। अविरतसम्यग्दृष्टिदेशविरतप्रमत्तसंयतानामायुश्चतुष्टयसम्यक्त्वमोहनीयोच्चैर्गोत्रवर्जद्विपञ्चाशदधिकं शतं संक्रमे भवति, सम्यक्त्वस्य मिथ्यादृष्टेरेव स्वामित्वेन तद्वर्जनं, आयुश्चतुष्टयस्योच्चैर्गोत्रस्य च प्रागुक्तहेतोः। अप्रमत्ते सातवेदनीयवर्जैकपञ्चाशदधिकं शतं संक्रामति, असातस्य बन्धाभावेन प्रतिग्रहाभावात् सातस्य संक्रमाभावः। अपूर्वकरणेऽनन्तानुबन्धिवर्जं सप्तचत्वारिंशदधिकं शतं भवति, उद्वलितत्वेन वोपशान्तत्वेन च तद्वर्जनम्। अनिवृत्तिकरणे यशःकीर्तिवर्जं षट्चत्वारिंशदधिकं शतं भवति, केवलाया यशःकीर्तेः प्रतिग्रहत्वेन तदन्यप्रतिग्रहाभावात् तद्वर्जनमिति। सूक्ष्मसम्परायगुणस्थाने सपादशतं संक्रामति, चारित्रमोहनीयस्योपशान्तत्वाद् बन्धाभावेन तस्य संक्रमो न भवति, शेषाणामपि प्रागुक्तमेव कारणं संक्रमाऽभावे द्रष्टव्यम्, तथा च—"उवसन्तं जं कम्मं न त वोकड्ढइ न देइ उदए वि। न य गमयइ परपगइं न चेव उक्कड्ढए तं तु॥१॥" अस्या अक्षरगमनिका—सर्वोपशमेनोपशान्तं यत्कर्म न तदपकर्षति, स्थितिरसाभ्यां अपवर्तनाकरणेन न हीनं करोतीत्यर्थः, "सव्वोवसमो मोहस्सेव" इति वचनेन तन्मोहनीयमेव भवति नान्यत्, अन्यस्य सर्वोपशमाभावात्, अपिशब्दस्य भिन्नक्रमत्वात्, नापि उदयं ददाति, न वेदयतीत्यर्थः, उपलक्षणात् उदयाविनाभाविन्यामुदीरणायामपि न ददातीत्यपि वाच्यम्, न च गमयति, परप्रकृतिं बध्यमानसजातीयरूपां न नयति, संक्रमकरणेन न संक्रमयतीत्यर्थः, न चोपशान्तं स्थितिरसं उत्कर्षति, उद्वर्तनाकरणेन वृद्धिं न नयतीत्यर्थः" इति। निधत्तिनिकाचनाकरणयोस्तु अपूर्वकरणान्तसमये निवृत्तत्वेन न निषेधः कृतः, एतत्सर्वं च दर्शनत्रिकं मुक्त्वाऽवसेयं, तेनोपशान्तमोहे मिथ्यात्वमिश्ररूपे द्वे प्रकृती संक्रमतः, शेषाणां साम्परायिकबन्धाभावेन संक्रमो न भवति। क्षीणमोहादौ तु तयोरपि न संक्रमः, सत्त्वाभावात्। या याः प्रकृतयो यस्मिन् यस्मिन् गुणस्थाने संक्रामन्ति तासां तासां तत्तद्गुणस्थानवर्तिनो जीवाः प्रकृतिसंक्रमस्वामिनो ज्ञातव्या इति। उक्तो गुणस्थानेषु प्रकृतिसंक्रमः॥

## ॥ गुणस्थानेषु प्रकृतिसंक्रमयन्त्रकम् ॥

| गुणस्थानकानि | सर्वसं० | ज्ञानाव० | दर्शना० | वेदनीय | मोहनीय | आयुः | नाम | गोत्र | अन्तराय |
|---|---|---|---|---|---|---|---|---|---|
| ओघे | १५४ | ५ | ९ | २ | २८ | ० | १०३ | २ | ५ |
| १ मिथ्यात्वे | १५३ | ५ | ९ | २ | २७ | ० | १०३ | २ | ५ |
| २ सास्वादने | १५० | ५ | ९ | २ | २५ | ० | १०२ | २ | ५ |
| ३ मिश्रे | १४९ | ५ | ९ | २ | २५ | ० | १०२ | १ | ५ |
| ४ अविरते | १५२ | ५ | ९ | २ | २७ | ० | १०३ | १ | ५ |
| ५ देशविरते | १५२ | ५ | ९ | २ | २७ | ० | १०३ | १ | ५ |
| ६ प्रमत्ते | १५२ | ५ | ९ | २ | २७ | ० | १०३ | १ | ५ |
| ७ अप्रमत्ते | १५१ | ५ | ९ | १ | २७ | ० | १०३ | १ | ५ |
| ८ अपूर्वकरणे | १४७ | ५ | ९ | १ | २३ | ० | १०३ | १ | ५ |
| ९ अनिवृत्तिकरणे | १४६ | ५ | ९ | १ | २३ | ० | १०२ | १ | ५ |
| १० सूक्ष्मसम्पराये | १२५ | ५ | ९ | १ | २ | ० | १०२ | १ | ५ |
| ११ उपशान्तमोहे | २ | ० | ० | ० | २ | ० | ० | ० | ० |

अथ कस्मिन् गुणस्थाने कियन्त्यः प्रकृतयः प्रतिग्रहत्वेन प्राप्यन्त इति निरूप्यते—तत्र या याः प्रकृतयो बन्धे भवन्ति तास्ताः प्रतिग्रहत्वेनापि भवन्ति, केवलं सम्यक्त्वमिश्रयोर्बन्धाभावेऽपि प्रतिग्रहता भवति, आयुषो बन्धसद्भावेऽपि संक्रमाभावेन प्रतिग्रहता न भवति, वर्णादिविंशतेर्बन्धसद्भावेऽपि सामान्येन चतस्रो ग्राह्याः, सङ्घातनबन्धनयोः शरीरेऽन्तर्भावेन पृथक्त्वेन न गणनीयौ इति सामान्येनाष्टादशाधिकशतं प्रतिग्रहे भवति । मिथ्यात्वे ज्ञानावरणपञ्चकं, दर्शनावरणनवकं, वेदनीयद्वयं, मोहनीयस्य सम्यक्त्वमिश्रवर्जषड्विंशतिः, सम्यक्त्वमिश्रयोः सम्यग्दृष्ट्यादावेव प्रतिग्रहत्वेन प्राप्यमाणत्वात्, नाम्नः जिनाहारकद्विकवर्जनतश्चतुःषष्टिः, जिनस्य सम्यक्त्वप्रत्ययत्वेन, आहारकद्विकस्य च विशुद्धचारित्रप्रत्ययत्वेन बन्धाभावात् तद्वर्जनम्, गोत्रद्वयमन्तरायपञ्चकमिति त्रयोदशाधिकशतं प्रतिग्रहत्वेन प्राप्यते । सास्वादने ज्ञानावरणपञ्चकं, दर्शनावरणनवकं, वेदनीयद्विकं, नपुंसकवेदमिथ्यात्वसम्यक्त्वमिश्रवर्जमोहचतुर्विंशतिः, नपुंसकवेदमिथ्यात्वयोः मिथ्यात्वप्रत्ययत्वेन बन्धाभावाद्वर्जनं, मिश्रसम्यक्त्वयोः प्रागुक्तहेतोर्वर्जनं, जिनाहारकद्विकनरकद्विकजातिचतुष्टयस्थावरचतुष्कातपहुण्डसेवार्त्तवर्जैकपञ्चाशत् नाम्नः, गोत्रद्वयमन्तरायपञ्चकमित्यष्टानवतिः प्रतिग्रहे लभ्यते, आहारकजिनवर्जनकारणं प्रागुक्तं, शेषाणां नरकैकेन्द्रियादिप्रायोग्यत्वेन, मिथ्यात्वप्रत्ययत्वेन च बन्धाभावात् वर्जनम् । मिश्रगुणस्थाने ज्ञानावरणपञ्चकं, स्त्यानर्द्धित्रिकवर्जदर्शनावरणषट्कं, वेदनीयद्वयं, मोहस्य प्रागुक्तचतुर्विंशतेर्मध्यादनन्तानुबन्धिस्त्रीवेदवर्जमोहनीयैकोनविंशतिः, नाम्नः प्रागुक्तैकपञ्चाशन्मध्यात् मध्यमसंस्थानसंहनननाष्टकोद्योतदौर्भा-

ग्यदुःस्वरानादेयतिर्यग्द्विकाशुभविहायोगतिवर्जषट्त्रिंशत् नामप्रकृतयः, उच्चैर्गोत्रमन्तराय-पञ्चकमिति चतुःसप्ततिः प्रतिग्रहे लभ्यते, शेषाणां बन्धाभावेन प्रतिग्रहाभावात् वर्जनं कृतं द्रष्टव्यमिति । अविरतसम्यग्दृष्टौ जिननाम्नः बन्धहेतुसद्भावेन प्रतिग्रहस्यापि सद्भावात्, औपशमिकसम्यग्दृष्टेरावलिकाया ऊर्ध्वं वेदकसम्यग्दृष्टेर्वा मिश्रसम्यक्त्वयोरपि प्रतिग्रहता-सम्भवेन सप्तसप्ततिः प्रकृतयः प्रतिग्रहे संभवन्ति । देशविरते प्रागुक्तात् सप्तसप्ततेर्मध्यात् अप्रत्याख्यानचतुष्टयवज्रर्षभनाराचसंहननौदारिकद्विकमनुष्यद्विकवर्जाष्टषष्टिः प्रकृतयः प्रतिग्रहे भवन्ति । प्रमत्तसंयते सा एवाष्टषष्टिः प्रत्याख्यानचतुष्टयविहीना चतुःषष्टिः प्राप्यते । सा एव चतुःषष्टिः अप्रमत्तसंयतेऽरतिशोकास्थिराशुभायशःकीर्त्त्यसातवेदनीय-विहीना, आहारकद्विकयुता च षष्टिर्भवति । अपूर्वकरणप्रथमभागेऽपि सैव षष्टिः, द्विती-यादिभागपञ्चके सैव निद्राद्विकविहीना अष्टपञ्चाशद् भवति, अपूर्वकरणचरमभागे च ज्ञानावरणपञ्चकं, दर्शनावरणचतुष्टयं, सातवेदनीयं, हास्यरतिभयजुगुप्सापुंवेदसंज्वलन-चतुष्टयमिश्रसम्यक्त्वरूपा एकादशमोहनीयप्रकृतयो, यशःकीर्तिरूपा एका नाम्नः, उच्चै-र्गोत्रं, अन्तरायपञ्चकमित्यष्टाविंशतिः प्रकृतयः प्रतिग्रहे भवन्ति । अनिवृत्तिप्रथमभागे अष्टाविंशतिरेव हास्यरतिभयजुगुप्साविहीना चतुर्विंशतिः प्रकृतयः प्रतिग्रहे भवन्ति, ततः पुंवेदस्याप्रतिग्रहत्वे तद्विहीना त्रयोविंशतिः, संज्वलनक्रोधस्याप्रतिग्रहत्वे तद्विहीना द्वाविं-शतिः, संज्वलनमानस्याप्रतिग्रहत्वे तद्विहीना एकविंशतिः, संज्वलनमायाया अप्रतिग्रहत्वे तद्विहीना विंशतिरनुक्रमेण द्वितीये, तृतीये, चतुर्थे, पञ्चमे भागे च भवन्ति । संज्वलनलोभ-विहीना सूक्ष्मसम्परायगुणस्थाने एकोनविंशतिः प्रकृतयः प्रतिग्रहे भवन्ति । उपशान्तमोहे मिश्रसम्यक्त्वरूपे द्वे प्रकृती प्रतिग्रहे भवतः । क्षीणमोहादौ तयोरसत्त्वात्, अन्येषामपि बन्धाभावात्, सातवेदनीयस्य च बन्धसत्त्वेऽपि साम्परायिकबन्धाभावात् प्रतिग्रहे एकापि प्रकृतिः न प्राप्यते । या याः प्रकृतयो यस्मिन् यस्मिन् गुणस्थाने प्राप्यन्ते तासां तासां प्रकृतीनां तत्तद्गुणस्थानवर्तिनो जीवाः प्रकृतिप्रतिग्रहस्वामिनो वेदितव्या इति । उक्ता गुणस्थानेषु प्रकृतिपतद्ग्राहकता ॥

॥ गुणस्थानेषु प्रतिग्रहयन्त्रम् ॥

| गुणस्था० | सर्वसंख्या | ज्ञाना० | दर्शना० | वेदनीय | मोहनीय | आयुः | नाम | गोत्र | अन्तराय |
|---|---|---|---|---|---|---|---|---|---|
| ओघे | ११८ | ५ | ९ | २ | २८ | ० | ६७ | २ | ५ |
| मिथ्यात्वे | ११३ | ५ | ९ | २ | २६ | ० | ६४ | २ | ५ |
| सास्वादने | ९८ | ५ | ९ | २ | २४ | ० | ५१ | २ | ५ |
| मिश्रे | ७४ | ५ | ६ | २ | १९ | ० | ३६ | १ | ५ |
| अविरते | ७७ | ५ | ६ | २ | २१ | ० | ३७ | १ | ५ |
| देशविरते | ६८ | ५ | ६ | २ | १७ | ० | ३२ | १ | ५ |
| प्रमत्ते | ६४ | ५ | ६ | २ | १३ | ० | ३२ | १ | ५ |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| अप्रमत्ते | ६० | ५ | ६ | १ | ११ | ० | ३१ | १ | ५ |
| अपूर्व० प्रथमभागे | ६० | ५ | ६ | १ | ११ | ० | ३१ | १ | ५ |
| अपू० मध्यचतुर्भा. | ५८ | ५ | ४ | १ | ११ | ० | ३१ | १ | ५ |
| अपू० चरमभागे | २८ | ५ | ४ | १ | ११ | ० | १ | १ | ५ |
| अनि० प्र० | २४ | ५ | ४ | १ | ७ | ० | १ | १ | ५ |
| अनि० द्वि० | २३ | ५ | ४ | १ | ६ | ० | १ | १ | ५ |
| अनि० तृ० | २२ | ५ | ४ | १ | ५ | ० | १ | १ | ५ |
| अनि० च० | २१ | ५ | ४ | १ | ४ | ० | १ | १ | ५ |
| अनि० प० | २० | ५ | ४ | १ | ३ | ० | १ | १ | ५ |
| सूक्ष्मसम्पराये | १९ | ५ | ४ | १ | २ | ० | १ | १ | ५ |
| उपशान्ते | २ | ० | ० | ० | २ | ० | ० | ० | ० |

अथ संक्रमसम्बन्धित्वेन गुणस्थानेषु सामान्यतः सत्ताप्रकृतयः प्रोच्यन्ते—तत्र केषाञ्चिन्मते द्वितीयतृतीयगुणस्थानवर्जोपशान्तमोहगुणस्थानं यावत्सर्वाः प्रकृतयः सत्त्वे विद्यन्ते, किन्तु द्वितीये तृतीये च जिननामविहीना इति। अन्येषां च मते विसंयोजितानन्तानुबन्धिन एवोपशमश्रेणिप्रारम्भका भवन्ति, बद्धनरकतिर्यङ्नरायुष्का अपि श्रेणिं नारभन्ते, केवलमप्रमत्तभावं प्रतिपद्यन्ते, तेषां मतेऽपूर्वकरणादिचतुर्षु द्विचत्वारिंशच्छतं सत्त्वे प्राप्यते। क्षायिकसम्यग्दृष्टेरुपशमश्रेणिं प्रतिपद्यमानस्य देवमनुजायुष्कद्वयसद्भावस्वीकर्तृत्वेन एकोनचत्वारिंशदधिकं शतमपूर्वकरणादिषु चतुर्षु प्राप्यते। अविरतादिषु चतुर्षु प्राग्बद्धायुष्कस्य क्षायिकसम्यग्दृष्टेरेकचत्वारिंशच्छतं। चरमशरीरिणां तु प्रथमगुणस्थाने पञ्चचत्वारिंशदधिकं शतं, द्वितीयतृतीयगुणस्थाने जिनवर्जं चतुश्चत्वारिंशदधिकं शतं, अविरतसम्यग्दृष्ट्यादिषु चतुर्षु पञ्चचत्वारिंशच्छतं, प्राप्तक्षायिकसम्यक्त्वस्यास्य पुनरष्टात्रिंशदधिकं शतमविरतसम्यग्दृष्ट्यादिषु चतुर्षु प्राप्यते। अपूर्वकरणेऽनिवृत्तिकरणप्रथमभागे च क्षपकश्रेण्यामष्टात्रिंशदधिकं शतं प्राप्यते, ततः स्त्यानर्द्धित्रिकनरकतिर्यग्द्विकाद्यजातिचतुष्टयस्थावरसूक्ष्मसाधारणातपोद्योतलक्षणासु षोडशप्रकृतिषु क्षीणासु अनिवृत्तिद्वितीयभागे द्वाविंशत्यधिकं शतं, अप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टकक्षीणेषु तृतीयभागे चतुर्दशाधिकं शतं, नपुंसकवेदे क्षपिते चतुर्थभागे त्रयोदशाधिकं शतं, स्त्रीवेदे च क्षीणे पञ्चमभागे द्वादशाधिकं शतं, हास्यादिषट्के क्षीणे षष्ठभागे षडधिकं शतं, पुंवेदे क्षपिते सप्तमभागे पञ्चाधिकं शतं, संज्वलनक्रोधे क्षपिते अष्टमभागे चतुरधिकं शतं, माने क्षपिते नवमभागे त्रिभिरधिकं शतं सत्तायां प्राप्यते। संज्वलनमायायां क्षीणायां द्व्युत्तरं शतं सूक्ष्मसम्परायगुणस्थाने प्राप्यते। लोभे क्षीणे क्षीणमोहोपान्तसमयं यावदेकोत्तरशतं प्राप्यते, निद्राद्विके च क्षीणे क्षीणमोहचरमसमये नवनवतिः प्रकृतयः सत्तायां प्राप्यन्ते। ज्ञानावरणान्तरायदशकं, दर्शनावरणच-

तुष्टयमिति चतुर्दशप्रकृतिषु क्षीणासु अयोग्युपान्तसमयं यावत् पञ्चाशीतिः प्रकृतयः सत्तायां भवन्ति, चरमसमये द्वासप्तत्यां, त्रिसप्तत्यां वा क्षीणायां त्रसबादरपर्याप्तसुभगादेययशः-कीर्तिपञ्चेन्द्रियजातिमनुष्यगतिमनुष्यायुःसातासातान्यतरवेदनीयोच्चैर्गोत्रजिननामरूपा द्वादश प्रकृतयः, केषाञ्चिन्मते मनुजानुपूर्वीयुताः त्रयोदश सत्तायां प्राप्यन्ते। येषां मते पञ्चैव बन्धनानि तन्मतेनात्र सत्ताप्रकृतय उक्ताः, येषां च मते पञ्चदश बन्धनानि अभिमतानि तत्र दश प्रकृतयः प्रागुक्तेषु सर्वत्र योजयितव्याः सुप्ताः सत्ताप्रकृतयः।

॥ गुणस्थानेषु सत्तायन्त्रकम् ॥

| गुणस्था० | ज्ञा० अं० | दर्शना० | वे० गो० | मोहनीय | आयुः | नाम | सर्वाः |
|---|---|---|---|---|---|---|---|
| ओघे | ५–५ | ९-९ | २–२ | २८ | ४ | ९३ | १४८ |
| मिथ्यात्वे | ,, | ,, | ,, | २८ | ४–१ | ९३ | १४८–१४५ |
| सास्वादने | ,, | ,, | ,, | २८ | ४–१ | ९२ | १४७–१४४ |
| मिश्रे | ,, | ,, | ,, | २८ | ४–१ | ९२ | १४७–१४४ |
| अविरते उ० क्षा० | ,, | ,, | ,, | २८–२१ | ४–१ | ९३ | १४८–१४१–१४५–१३८ |
| देशविरते ,, | ,, | ,, | ,, | २८–२१ | ४–१ | ९३ | १४८–१४१–१४५–१३८ |
| प्रमत्ते ,, | ,, | ,, | ,, | २८–२१ | ४–१ | ९३ | १४८–१४१–१४५–१३८ |
| अप्रमत्ते ,, | ,, | ,, | ,, | २८–२१ | ४–१ | ९३ | १४८–१४१–१४५–१३८ |
| अपूर्वकरणे ,, | ,, | ,, | ,, | २८–२४–२१ | ४–२–१ | ९३ | १४८–१४२–१३९–१३८ |
| अनिवृत्तावु० क्ष० श्रे० | ,, | ,, | ,, | २८–२४–२१ | ४–२–१ | ९३ | १४८–१४२–१३९–१३८ |
| अनि० प्र० भा० क्ष० श्रे. | ,, | ,, | ,, | २१ | १ | ९३ | १३८ |
| अनि० द्वि० ,, | ,, | ,, | ,, | २१ | १ | ८० | १२२ |
| अनि० तृ० ,, | ,, | ६ | ,, | १३ | १ | ८० | ११४ |
| अनि० चतु० ,, | ,, | ,, | ,, | १२ | १ | ८० | ११३ |
| अनि० पं० क्ष० श्रे० | ,, | ,, | ,, | ११ | १ | ८० | ११२ |
| अनि० ष० ,, | ,, | ,, | ,, | ५ | १ | ८० | ११३ |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| अनि० स० ,, | ५–५ | ६ | २–२ | ४ | १ | ८० | १०५ |
| अनि० अष्ट० ,, | ,, | ,, | ,, | ३ | १ | ८० | १०४ |
| अनि० नवम० ,, | ,, | ,, | ,, | २ | १ | ८० | १०३ |
| सूक्ष्मसम्पराय<br>उ० क्ष० श्रेण्यां च | ,, | ९<br>६ | ,,<br>,, | २८–२४–२१<br>१ | ४–२–१ | ९३<br>८० | उप० { १४८–१४२<br>१३९–१३८<br>क्ष० १०१ |
| उपशान्तमोहे | ,, | ९ | ,, | २८–२४–२१ | ४–२–१ | ९३ | १४८–१४९<br>१३९–१३८ |
| क्षी० मोहोपान्त्य-<br>समयं यावत् | ,, | ६ | ,, | ० | १ | ८० | १०१ |
| क्षीणमोहचरमसमये | ,, | ४ | ,, | ० | १ | ८० | ९९ |
| सयोगिनि | ० | ० | ,, | ० | १ | ८० | ८५ |
| अयोग्योपान्त्य-<br>मयं यावत् | ० | ० | ,, | ० | १ | ८० | ८५ |
| अयोगिचरमसमये | ० | ० | १–१ | ० | १ | १०–९ | १३–१२ |

अथ प्रतिग्रहसम्बन्धित्वेन सामान्यतो बन्धप्रकृतयोऽपि गुणस्थानेषूच्यन्ते–तत्रौघेन बन्धे विंशत्युत्तरशतं लभ्यते, तद्यथा–ज्ञानावरणपञ्चकं, दर्शनावरणनवकं, वेदनीयद्विकं, मोहनीयषड्विंशतिः, आयुश्चत्वारि, नाम्नः सप्तषष्टिः, गोत्रद्वयम्, अन्तरायपञ्चकमिति । मिथ्यात्वे ज्ञानावरणपञ्चकं, दर्शनावरणनवकं, वेदनीयद्वयं, मोहनीयषड्विंशतिः, आयुषश्चतस्रो, नाम्न आहारकद्विकजिननामवर्जचतुःषष्टिः, गोत्रद्वयम्, अन्तरायपञ्चकमिति सप्तदशोत्तरशतं बन्धे प्राप्नोति । सास्वादने ज्ञानावरणपञ्चकं, दर्शनावरणनवकं, वेदनीयद्विकं, मिथ्यात्वनपुंसकवेदवर्जमोहनीयस्य चतुर्विंशतिः, नरकायुर्वर्जं आयुस्त्रिकं, नाम्नो नरकद्विकजातिचतुष्टयस्थावचतुष्कहुण्डसेवार्तसंहननातपनामवर्जैकपञ्चाशत्, गोत्रद्वयम्, अन्तरायपञ्चकमिति एकोत्तरशतं बन्धेऽवाप्यते । मिश्रे ज्ञानावरणपञ्चकं, स्त्यानर्द्धित्रिकवर्जदर्शनावरणषट्कं, वेदनीयद्विकं, मोहनीयस्याद्यकषायचतुष्टयमिथ्यात्वनपुंसकवेदस्त्रीवेदवर्जैकोनविंशतिः, नाम्नस्तिर्यग्द्विकदौर्भाग्यत्रिकमध्यमसंस्थानसंहननाष्टकोद्योताशुभविहायोगतिरूपपञ्चदशनरकत्रिकादित्रयोदशाहारकद्विकजिननामवर्जाः षट्त्रिंशत्प्रकृतयः, उच्चैर्गोत्रम्, अन्तरायपञ्चकमिति चतुःसप्ततिः प्रकृत्यो बन्धे प्राप्यन्ते । अविरतसम्यग्दृष्टेरेताश्चतुस्सप्ततिर्मनुजदेवायुःजिननामयुताःसप्तसप्ततिः प्रकृतयो बन्धे प्राप्यन्ते । देशविरते ज्ञानावरणपञ्चकं, दर्शनावरणषट्कं, वेदनीयद्विकं, मिथ्यात्वनपुंसकवेदस्त्रीवेदानन्तानुबन्ध्यप्रत्याख्यानकषायाष्टकवर्जमोहनीयस्य पञ्चदश प्रकृतयः, देवा-

युः, नाम्न आहारकद्विकनरकादित्रयोदशतिर्यगादिपञ्चदशमनुजद्विकौदारिकद्विकप्रथमसंहनन-वर्जा द्वात्रिंशत्प्रकृतयः, उच्चैर्गोत्रम्, अन्तरायपञ्चकमिति सप्तषष्टिः प्रकृतयो बन्धे भवन्ति। प्रमत्तसंयते ज्ञानावरणपञ्चकं, दर्शनावरणषट्कं, वेदनीयद्विकं, मिथ्यात्वनपुंसकस्त्रीवेदानन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानकषायद्वादशवर्जा मोहनीयस्यैकादशप्रकृतयः, देवायुः, देशविरतोक्ता नाम्नो द्वात्रिंशत्प्रकृतयः, उच्चैर्गोत्रम्, अन्तरायपञ्चकमिति त्रिषष्टिः प्रकृतयो बन्धे लभ्यन्ते। अप्रमत्ते ज्ञानावरणपञ्चकं, दर्शनावरणषट्कं, सातवेदनीयं, हास्यरतिभयजुगुप्सापुंवेदसंज्वलनचतुष्टयरूपा नव प्रकृतयो मोहनीयस्य, देवायुः प्रमत्तेन प्रारब्धं चेदत्र निष्ठां नयति, नात्र नूतनबन्धमारभते, नाम्नो देवद्विकपञ्चेन्द्रियजातिवैक्रियाहारकद्विकतैजसकार्मणसमचतुरस्रसंस्थानवर्णगन्धरसस्पर्शशुभविहायोगतित्रसदशकागुरुलघूपघातपराघातोच्छ्वासनिर्माणतीर्थकररूपा एकत्रिंशत्प्रकृतयः, उच्चैर्गोत्रम्, अन्तरायपञ्चकमिति एकोनषष्टिः अष्टपञ्चाशद्वा प्रकृतयो बन्धे भवन्ति। अपूर्वकरणप्रथमभागे अष्टपञ्चाशदेव, ततः पञ्चसु भागेषु निद्राद्विकविहीना षट्पञ्चाशत्प्रकृतयो भवन्ति, सप्तमभागे च ज्ञानावरणपञ्चकं, दर्शनावरणचतुष्कं, सातवेदनीयं, हास्यरतिभयजुगुप्सापुंवेदसंज्वलनचतुष्टयरूपा नव प्रकृतयो मोहनीयस्य, नाम्नो यशःकीर्तिरूपैका प्रकृतिः, उच्चैर्गोत्रम्, अन्तरायपञ्चकमिति षड्विंशतिः प्रकृतयो बन्धे भवन्ति। अनिवृत्तिकरणप्रथमभागे हास्यरतिभयजुगुप्सावर्जा द्वाविंशतिः प्रकृतयो, द्वितीयभागे पुंवेदवर्जा एकविंशतिः प्रकृतयः, तृतीयभागे संज्वलनक्रोधवर्जा विंशतिः प्रकृतयः, चतुर्थभागे संज्वलनमानवर्जा एकोनविंशतिः प्रकृतयः, पञ्चमभागे संज्वलनमायावर्जा अष्टादश प्रकृतयो बन्धे भवन्ति। सूक्ष्मसम्पराये संज्वलनलोभवर्जाः सप्तदशप्रकृतयो बन्धे भवन्ति। उपशान्तमोहादिषु त्रिषु सातवेदनीयरूपा एका प्रकृतिर्बन्धे भवति। अयोगिनि बन्धाभाव इत्युक्तः प्रकृतिबन्धः॥

॥ गुणस्थानेषु बन्धयन्त्रकम् ॥

| गुणस्था० | ज्ञाना० | दर्शना० | वेदनीय | मोहनीय | आयुः | नाम | गोत्र | अन्त० | सर्वाग्रम् |
|---|---|---|---|---|---|---|---|---|---|
| ओघे | ५ | ९ | २ | २६ | ४ | ६७ | २ | ५ | १२० |
| मिथ्यात्वे | ५ | ९ | २ | २६ | ४ | ६४ | २ | ५ | ११७ |
| सास्वादने | ५ | ९ | २ | २४ | ३ | ५१ | २ | ५ | १०१ |
| मिश्रे | ५ | ६ | २ | १९ | ० | ३६ | १ | ५ | ७४ |
| अविरते | ५ | ६ | २ | १९ | २ | ३७ | १ | ५ | ७७ |
| देशविरते | ५ | ६ | २ | १५ | १ | ३२ | १ | ५ | ६७ |
| प्रमत्ते | ५ | ६ | २ | ११ | १ | ३२ | १ | ५ | ६३ |
| अप्रमत्ते | ५ | ६ | १ | ९ | १–० | ३१ | १ | ५ | ५९–५८ |
| अपूर्व-प्रथम भा० | ५ | ६ | १ | ९ | ० | ३१ | १ | ५ | ५८ |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| अपू०२याद्दिषष्ठभा० | ५ | ४ | १ | ९ | ० | २१ | १ | ५ | ५६ |
| अपू० सप्तमभा० | ५ | ४ | १ | ९ | ० | १ | १ | ५ | २६ |
| अनि० प्रथमे | ५ | ४ | १ | ५ | ० | १ | १ | ५ | २२ |
| अनि० द्वितीये | ५ | ४ | १ | ४ | ० | १ | १ | ५ | २१ |
| अनि० तृतीये | ५ | ४ | १ | ३ | ० | १ | १ | ५ | २० |
| अनि० चतुर्थे | ५ | ४ | १ | २ | ० | १ | १ | ५ | १९ |
| अनि० पञ्चमे | ५ | ४ | १ | १ | ० | १ | १ | ५ | १८ |
| सूक्ष्म० | ५ | ४ | १ | ० | ० | १ | १ | ५ | १७ |
| उप०क्षी०सयो० च | ० | ० | १ | ० | ० | ० | ० | ० | १ |

अथ गुणस्थानद्वारेण प्रकृतिस्थानसंक्रमस्वामिन उच्यन्ते। अत्र यस्मिन् गुणस्थाने यानि संक्रमस्थानानि प्रतिग्रहस्थानानि चोक्तानि तेषां तत्तद्गुणस्थानवर्त्तिनः स्वामिनो ज्ञातव्याः। तत्र सत्त्वस्थानानि एव संक्रामन्ति, अतः पूर्वं गुणस्थानेषु सत्त्वस्थानानि प्रतिपाद्यन्ते–तत्र मिथ्यादृष्टेरारभ्य क्षीणमोहं यावत् ज्ञानावरणान्तराययोः पञ्चप्रकृत्यात्मकं सत्स्थानं भवति, परतो न भवति, क्षीणत्वात्। तथा वेदनीयगोत्रयोस्तु यद्यपि स्थानसंक्रमो न भवत्येव, यतोऽत्र द्व्यादिप्रकृतिसंक्रमसमुदायः प्रकृतिस्थानसंक्रमो विवक्षितः, तदुक्तं न्यायाचार्यैः श्रीमद्यशोविजयवाचकपुङ्गवैः कर्म्मप्रकृतिवृत्तौ प्रकृतिसंक्रमाधिकारे–"द्वित्र्यादीनां प्रकृतीनां समुदायः प्रकृतिस्थानम्" इति, एवं वक्ष्यमाणप्रतिग्रहत्वेऽपि वाच्यम्, तथापि वेदनीयगोत्रयोः पूर्वपुरुषैः संक्रमस्थानं प्रतिग्रहस्थानं च विवक्षितं, तथा चोक्तं–"वेदनीये गोत्रे चान्यतरस्यां प्रकृतौ बध्यमानायामन्यतराऽबध्यमाना प्रकृतिः संक्रामति तेन या यत्र संक्रामति सा तस्याः पतद्ग्रहस्थानमितरा च संक्रमस्थानम्" इत्यस्माभिरपि संक्रमस्थानं प्रतिग्रहस्थानं च प्रतिपाद्यमानत्वेन तयोः सत्त्वादिस्थानानि प्रतिपाद्यन्त इति। तत्र वेदनीयस्यायोगिगुणस्थानोपान्त्यसमयं यावत् द्विप्रकृत्यात्मकं सत्स्थानमन्यतरस्यां प्रकृतौ क्षीणायमयोगिचरमसमये एकप्रकृत्यात्मकम्। गोत्रकर्मणि सास्वादनादारभ्यायोगिगुणस्थानोपान्त्यसमयं यावत् द्विप्रकृत्यात्मकं सत्स्थानमन्त्यसमये उच्चैर्गोत्ररूपमेकप्रकृत्यात्मकं सत्स्थानम्, मिथ्यादृष्टौ तु अनुद्वलिते उच्चैर्गोत्रे द्विप्रकृत्यात्मकं, उच्चैर्गोत्रे उद्वलिते तु तेजोवायूनां तेजोवायुभवादागतानां चैकेन्द्रियादिषूत्पन्नानां यावदुच्चैर्गोत्रं न बध्यते तावदेकप्रकृत्यात्मकं सत्त्वस्थानं भवति। आयुःकर्मणि स्वागामिभवसत्कं यावदायुष्कं न बध्यते तावदेकप्रकृत्यात्मकं सत्स्थानम्, पारभविकायुर्बन्धे तूपशान्तमोहं यावत् द्विप्रकृत्यात्मकं सत्स्थानम्, चरमशरीरिणां तु मनुष्यायुष्करूपमेकमेव सत्स्थानमिति। दर्शनावरणाख्ये द्वितीयकर्मणि त्रीणि सत्स्थानानि, तद्यथा–नवप्रकृत्यात्मकं, षट्प्रकृत्यात्मकं, चतुष्प्रकृत्यात्मकं चेति। तत्र मिथ्यादृष्टेरारभ्य यावदुपशान्तमोहं नवप्रकृत्यात्मकमेकमेव सत्स्थानम्, अनिवृत्तिद्वितीयभागात्परतः क्षपकश्रेणिमाश्रित्य क्षीणमोहोपान्त्यसमयं यावत् षट्प्रकृत्यात्मकं सत्त्वस्थानम्, उपशामकस्य नवप्रकृत्यात्मकं

सत्त्वस्थानं दशमगुणस्थानान्त्यसमयं यावद् भवतीति नवमगुणे दशमगुणे चोभयश्रेणीमाश्रित्य सत्त्वस्थानद्वयं भवति, क्षीणमोहान्तसमये च चतुष्प्रकृत्यात्मकं सत्त्वस्थानमेकमेव भवति, सयोगिकेवलिनि अयोगिकेवलिनि च दर्शनावरणीयस्य सत्त्वस्थानं न भवति, क्षीणत्वादिति। मोहनीयकर्मणो मिथ्यादृष्टौ त्रीणि सत्त्वस्थानानि, तद्यथा—अष्टाविंशतिः, सप्तविंशतिः, षड्विंशतिः, तत्राष्टाविंशतिर्वमितसम्यक्त्वस्य मिथ्यादृष्टेर्भवति, उद्वलिते सम्यक्त्वमोहनीये तु सप्तविंशतिः, ततोऽपि मिश्रमोहनीये उद्वलिते षड्विंशतिः, अनादिमिथ्यादृष्टेर्वा षड्विंशतिः। सास्वादनगुणस्थाने चैकमेवाष्टाविंशतिप्रकृत्यात्मकं सत्त्वस्थानं भवति, यतः सास्वादनत्वमौपशमिकसम्यक्त्वात् प्रपतन्नेव प्राप्नोति, औपशमिकसम्यक्त्वे तु मिथ्यात्वं त्रिधा कृतमेवेति। मिश्रदृष्टौ त्रीणि सत्त्वस्थानानि भवन्ति, तद्यथा—अष्टाविंशतिः, सप्तविंशतिः, चतुर्विंशतिः, तत्र योऽष्टाविंशतिसत्कर्मा सन् मिश्रत्वं प्राप्तः तस्याष्टाविंशतिसत्त्वस्थानं भवति, येन पुनः मिथ्यादृष्टिना सता सम्यक्त्वमोहनीयमुद्वलितं,सम्यग्मिथ्यात्वं चाद्यापि नोद्वलितुमारब्धमत्रान्तरे परिणामपरावर्तनेन मिथ्यात्वतो निर्गत्य मिश्रत्वं प्राप्तस्तस्य सप्तविंशतिसत्त्वस्थानं भवति, यः पुनः पूर्वं सम्यग्दृष्टिः सन्ननन्तानुबन्धिनो विसंयोज्य पश्चात्परिणामवशतः मिश्रत्वं प्राप्तस्तस्य चतुर्विंशतिप्रकृत्यात्मकं सत्त्वस्थानं भवति, एतत्सत्त्वस्थानं च चतसृष्वपि गतिषु प्राप्यते, यतः चतुर्गतिका अपि सम्यग्दृष्टयोऽनन्तानुबन्धिनो विसंयोजयित्वा मिश्रभावं गच्छन्ति। अविरतसम्यग्दृष्टिदेशविरतप्रमत्ताप्रमत्तरूपेषु प्रत्येकं पञ्च पञ्च सत्त्वस्थानानि भवन्ति, तद्यथा-अष्टाविंशतिश्चतुर्विंशतिस्त्रयोविंशतिर्द्वाविंशतिरेकविंशतिश्चेति। तत्र प्रथमौपशमिकसम्यक्त्वोत्पादकालेऽष्टाविंशतिरेव, यद्वोपशान्तानन्तानुबन्धिनां श्रेणितः प्रतिपाते सति, वेदकसम्यग्दृष्टीनां वाष्टाविंशतिः। उद्वलितानन्तानुबन्धिनामुपशमसम्यक्दृष्टीनां श्रेणितः प्रतिपाते सति, उद्वलितानन्तानुबन्धिनां वेदकसम्यग्दृष्टीनां च चतुर्विंशतिसत्त्वस्थानं भवति। त्रयोविंशतिसत्त्वस्थानं द्वाविंशतिसत्त्वस्थानं च वेदकसम्यग्दृष्टीनामेव भवति, तथाहि—कश्चिन्मनुष्यः प्रथमजिनकालादारभ्य जम्बूस्वामिपर्यन्तवर्ती वर्षाष्टकस्योपरि वर्तमानः प्रथमसंहननी वेदकसम्यग्दृष्टिः क्षपणायाभ्युद्यतोऽनन्तानुबन्धिषु मिथ्यात्वे च क्षपितेषु सत्सु त्रयोविंशतिसत्स्थानं, मिश्रे च क्षपिते द्वाविंशतिसत्स्थानं भवति, द्वाविंशतिसत्कर्मा कश्चित् पूर्वमबद्धायुष्कः सम्यक्त्वमोहनीयं क्षपयन् तच्चरमग्रासे वर्तमानः कालमपि करोति, कालं च कृत्वा चतसृषु गतिष्वन्यतमस्यां गतावुत्पद्यते, तदुक्तं—"पट्ठवगो उ मणुस्सो निट्ठवगो चउसु वि गईसु" इति, ततो द्वाविंशतिसत्त्वस्थानं चतसृष्वपि गतिषु प्राप्यते, एकविंशतिसत्त्वस्थानं तु क्षीणसप्तकस्यैव भवतीति। अपूर्वकरणे त्रीणि सत्त्वस्थानानि, तद्यथा—अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिश्च। तत्राद्ये द्वे उपशमश्रेण्यामुपशमसम्यग्दृष्टेरेकविंशतिप्रकृत्यात्मकं क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां क्षपकश्रेण्यां वा भवति। अनिवृत्तिबादरे एकादश सत्त्वस्थानानि भवन्ति, तद्यथा—अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिस्त्रयोदश द्वादशैकादश पञ्च चतस्रस्तिस्रो द्वे एकं च, तत्राद्ये द्वे सत्त्वस्थाने उपशमश्रेण्यामुपशमसम्य-

दृष्टेर्भवतः, एकविंशतिसत्त्वस्थानं क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां क्षपकश्रेण्यां च कषायाष्टकं यावन्न क्षीयते तावद्भवति, क्षपिते तु कषायाष्टके त्रयोदश, नपुंसकवेदे क्षीणे द्वादश, स्त्रीवेदे क्षपिते एकादश, षट्सु नोकषायेषु क्षीणेषु पञ्च, पुंवेदे क्षपिते चतस्रः, संज्वलनक्रोधे क्षपिते तिस्रः, संज्वलनमाने क्षपिते द्वे, ततः संज्वलनमायायां क्षीणायामेकप्रकृत्यात्मकं सत्त्वस्थानं भवति । सूक्ष्मसम्पराये चत्वारि सत्त्वस्थानानि, तद्यथा—अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिरेकं च, तत्राद्ये द्वे उपशमश्रेण्यामौपशमिकसम्यग्दृष्टेः, तृतीयमुपशमश्रेण्यां क्षायिकसम्यग्दृष्टेः, चतुर्थं क्षपकश्रेण्यामिति । उपशान्तमोहे त्रीणि सत्त्वस्थानानि, तद्यथा—अष्टाविंशतिश्चतुर्विंशतिरेकविंशतिश्च, तत्राद्ये द्वे औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां, तृतीयं क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यामिति ।

नामकर्मणो मिथ्यादृष्टौ षट् सत्त्वस्थानानि भवन्ति, तद्यथा—द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिश्च । तत्र चतुर्गतिकानां मिथ्यादृष्टीनां जिनवर्जं द्व्युत्तरशतं सत्त्वस्थानं भवति, बद्धनरकायुष्कस्य वेदकसम्यग्दृष्टेर्जिननामकर्म बद्ध्वा परिणामपरावर्तनेन मिथ्यात्वं गतस्य नरकेषु च समुत्पद्यमानस्य षण्णवतिसत्त्वस्थानमन्तर्मुहूर्तं कालं यावत् प्राप्यते, उत्पत्तेरूर्ध्वमन्तर्मुहूर्तानन्तरं तु सोऽपि सम्यक्त्वं प्रतिपद्यते, पञ्चनवतिसत्त्वस्थानं चतुर्गतिकानां भवति, त्रिनवतिसत्त्वस्थानं चतुरशीतिसत्त्वस्थानं च यथायोगं देवद्विके, नरकद्विके, वैक्रियसप्तके चोद्वलिते सति प्राप्यते, ततश्चैकेन्द्रियभवादुद्धृत्य विकलेन्द्रियेषु, तिर्यक्पञ्चेन्द्रियेषु, मनुष्येषु वा मध्ये समुत्पन्नानां सर्वपर्याप्तिभवनादूर्ध्वमप्यन्तर्मुहूर्तं कालं यावत् लभ्यते, परतोऽवश्यं पञ्चेन्द्रियेषु वैक्रियशरीरादिबन्धसम्भवात् न लभ्यते, द्व्यशीतिसत्त्वस्थानं तेजोवायूनां मनुजद्विकस्योद्वलिते सति भवति, तेजोवायुभवादुद्धृत्य विकलेन्द्रियेषु तिर्यक्पञ्चेन्द्रियेषु वा समुत्पन्नानामप्यन्तर्मुहूर्तं कालं यावदेतत् प्राप्यते, परतस्तु मनुष्यद्विकस्यावश्यं बन्धसम्भवादिति । सास्वादनगुणस्थाने द्व्युत्तरशतं, पञ्चनवतिश्चेति सत्त्वस्थानद्वयं भवति, तत्र द्व्युत्तरशतमाहारकं बद्ध्वा उपशमश्रेणितः प्रपतन् सास्वादनभावं यः प्राप्तस्तस्य लभ्यते, पञ्चनवतिसत्त्वस्थानं चतुर्गतिकानामपि लभ्यत इति । मिश्रेऽपि सास्वादनवत् द्व्युत्तरशतं, पञ्चनवतिश्चेति सत्त्वस्थानद्वयं प्राप्यते । अविरतसम्यग्दृष्टौ चत्वारि सत्त्वस्थानानि, तद्यथा—त्र्युत्तरशतं, द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिश्चेति । तत्र त्र्युत्तरशतमप्रमत्तोऽपूर्वकरणो वा जिननामाहारकयुतमेकत्रिंशद्बन्धस्थानं बद्ध्वा परिणामपरावर्तनेन योऽविरतिं गतस्तस्य, यद्वा यः पश्चाद्देवो जातस्तमधिकृत्य देवगतौ, ततश्च्युतस्य वा मनुजगतौ प्राप्यते । तथा य आहारकं बद्ध्वा परिणामपरावर्तनेन मिथ्यात्वमधिगम्यान्यतमस्यां गतौ समुत्पन्नः स तत्र तत्र गतौ भूयोऽपि सम्यक्त्वं प्राप्तः सन् द्व्युत्तरशतप्रकृत्यात्मकसत्त्वस्थानवान् भवति, यद्वाऽवमितसम्यक्त्वस्यापि चतुर्षु गतिषु द्व्युत्तरशतं भवति । षण्णवतिस्तिर्यग्वर्जासु तिसृषु गतिषु प्राप्यते, तेषु जिननामबन्धसद्भावात्, तिर्यक्षु जिननामसत्कर्मा नोत्पद्यन्तेऽतस्तद्वर्जनं कृतं । पञ्चनवतिसत्त्वस्थानं चतुर्गतिकानामपि

सम्यग्दृष्टीनां सम्भवतीति । देशविरतिगुणस्थानेऽपि चत्वारि सत्त्वस्थानानि भवन्ति, तद्यथा—त्र्युत्तरशतं, द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिश्च, तत्र त्र्युत्तरशतमप्रमत्तोऽपूर्वकरणो वा जिनाहारकं बद्ध्वा परिणामपरावर्तनेन देशविरतिं प्राप्तस्तस्य भवति, शेषसत्त्वस्थानानां भावनाऽविरतसम्यग्दृष्टेरिव कर्तव्येति । एतान्येव चत्वारि सत्तास्थानानि प्रमत्तसंयताऽप्रमत्तसंयतापूर्वकरणेषु चोपशमश्रेण्यामनिवृत्तिकरणे, सूक्ष्मसम्पराये, उपशान्तमोहे च, क्षपकस्य पुनस्त्रयोदशकं यावत् न क्षीयते तावदनिवृत्तिकरणस्याप भवन्ति । क्षीणे च त्रयोदशके नवतिरेकोननवतिस्त्र्यशीतिर्द्व्यशीतिश्चेति चत्वारि सत्त्वस्थानान्यधिकानि भवन्ति, ततोऽनिवृत्तिकरणे सूक्ष्मसम्परायगुणस्थाने च सर्वमिलने अष्टावष्टौ भवन्ति । क्षीणमोहे सयोगिकेवलिनि च चत्वारि चत्वारि सत्तास्थानानि भवन्ति, तद्यथा—नवतिरेकोननवतिस्त्र्यशीतिर्द्व्यशीतिरिति । अयोगिकेवलिनि च षट् सत्त्वस्थानानि भवन्ति—नवतिरेकोननवतिस्त्र्यशीतिर्द्व्यशीतिर्नवाष्टौ च, अन्तिमे द्वे स्थाने चरमसमये द्रष्टव्ये इत्युक्तानि सत्तास्थानानि ।

॥ गुणस्थानेषु सत्त्वस्थानस्य यन्त्रकम् ॥

| गुणस्था० | ज्ञाना० | दर्शना० | वेदनीयस्य | मोहस्य | आयुषः | नाम्नः | गोत्रस्य | अन्तरायस्य |
|---|---|---|---|---|---|---|---|---|
| मिथ्यादृष्टौ | १ | १ | १ | ३ | २ | ६ | २ | १ |
| सास्वादने | १ | १ | १ | १ | २ | २ | १ | १ |
| मिश्रे | १ | १ | १ | ३ | २ | २ | १ | १ |
| अविरते | १ | १ | १ | ५ | २ | ४ | १ | १ |
| देशविरते | १ | १ | १ | ५ | २ | ४ | १ | १ |
| प्रमत्ते | १ | १ | १ | ५ | २ | ४ | १ | १ |
| अप्रमत्ते | १ | १ | १ | ५ | २ | ४ | १ | १ |
| अपूर्वकरणे | १ | १ | १ | ३ | २ | ४ | १ | १ |
| अनिवृत्तिकरणे | १ | २ | १ | ११ | २ | ८ | १ | १ |
| सूक्ष्मसम्पराये | १ | २ | १ | ४ | २ | ८ | १ | १ |
| उपशान्तमोहे | १ | १ | १ | ३ | २ | ४ | १ | १ |
| क्षीणमोहे | १ | २ | १ | ० | १ | ४ | १ | १ |
| सयोगिनि | ० | ० | १ | ० | १ | ४ | १ | ० |
| अयोगिनि | ० | ० | २ | ० | १ | ६ | २ | ० |

अथ गुणस्थानद्वारेण संक्रमस्थानस्वामित्वं प्रतिपाद्यते—तत्र ज्ञानावरणान्तराययोः पञ्चप्रकृत्यात्मकं संक्रमस्थानं सूक्ष्मसम्परायं यावत् संक्रामति, न परतः, प्रतिग्रहाभावात् । वेदनीयस्य प्रमत्तं यावद् द्वे संक्रमस्थाने भवतः, तद्यथा—सातरूपमसातरूपं च, तत्र प्रमत्त

सातवेदनीयं बध्नाति तदाऽसातरूपं संक्रमस्थानं, यदाऽसातवेदनीयं बध्नाति तदा सातवेदनीयं संक्रमस्थानं भवति । अप्रमत्तसंयतेरारभ्य सूक्ष्मसम्परायं यावदसातवेदनीयरूपमेकमेव संक्रमस्थानं भवति, न सातवेदनीयं, तस्य प्रतिग्राहकत्वात् । उपशान्तादावेकमपि संक्रमस्थानं न भवति, सातवेदनीयस्य बन्धसद्भावेऽपि साम्परायिकबन्धाभावेनाप्रतिग्रहत्वात्, असातवेदनीयं न संक्रामतीत्यर्थः । गोत्रकर्मणो मिथ्यादृष्टौ, सास्वादने च द्वे संक्रमस्थाने भवतः, उच्चैर्गोत्ररूपं, नीचैर्गोत्ररूपं च । तत्र यदा नीचैर्गोत्रं बध्नाति तदा उच्चैर्गोत्रं संक्रमस्थानं, यदोच्चैर्गोत्रं बध्नाति तदा नीचैर्गोत्रं संक्रमस्थानं भवति । मिश्रादारभ्य सूक्ष्मसम्परायं यावत् नीचैर्गोत्ररूपमेकमेव संक्रमस्थानं भवति, उच्चैर्गोत्रस्य बध्यमानत्वेन प्रतिग्राहकत्वात्तस्य संक्रमो नास्ति । उपशान्तादौ संक्रमस्थानमेव न भवति, बन्धाभावेन कस्यापि प्रतिग्रहाभावादिति । दर्शनावरणीयस्य द्वे संक्रमस्थाने भवतः, तद्यथा–नवकं, षट्कं च, तत्र नवकं सूक्ष्मसम्परायगुणस्थानं यावत् संक्रामति । षट्कं क्षपकस्य स्त्यानर्द्धित्रिके क्षपिते अनिवृत्तिकरणे, सूक्ष्मसम्पराये च संक्रामति, उपशान्तादौ तु न किमपि संक्रामति, प्रतिग्रहाभावात् । मोहनीयस्य पञ्चदशषोडशसप्तदशचतुर्विंशत्यष्टाविंशतिवर्जानि एकादीनि सप्तविंशतिपर्यन्तानि प्रागुक्तानि त्रयोविंशतिः संक्रमस्थानानि । तत्र मिथ्यादृष्टौ चत्वारि संक्रमस्थानानि, तद्यथा–सप्तविंशतिः, षड्विंशतिः, पञ्चविंशतिः, त्रयोविंशतिरिति । तत्राष्टाविंशतिसत्ताकस्य मिथ्यात्वं प्रतिग्रहत्वे कृतमपनीय शेषाः सप्तविंशतिः संक्रामन्ति, ताश्च पल्योपमासंख्येयभागं यावत्, सम्यक्त्व उद्वलिते सति सप्तविंशतिसत्ताकस्य मिथ्यात्वस्य प्रतिग्रहत्वेन तद्व्यतिरिक्ताः षड्विंशतिः संक्रामन्ति, ता अपि पल्योपमासंख्येयभागं यावत्, मिश्रे चोद्वलिते सति षड्विंशतिसत्ताकस्य जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टतोऽपार्धपुद्गलपरावर्तं यावत् पञ्चविंशतिः प्रकृतयः संक्रामन्ति । यद्वा अनाद्यनन्तकालमभव्यमाश्रित्य भव्यमाश्रित्य चानादिसान्तं पञ्चविंशतिः प्रकृतयः संक्रामन्ति । उद्वलितानन्तानुबन्धिनो वेदकसम्यग्दृष्टेः परिणामपरावर्त्तनेन प्राप्तमिथ्यात्वस्याष्टाविंशतिसत्ताकस्यावलिकामात्रं यावत् त्रयोविंशतिः प्रकृतयः संक्रामन्ति । सास्वादनेऽष्टाविंशतिसत्ताकस्य पञ्चविंशतिरेव प्रकृतयो जघन्यतः समयमुत्कृष्टत आवलिकाषट्कं यावत् संक्रामन्ति । केषाञ्चिन्मतेन विसंयोजितानन्तानुबन्धिनोऽप्यत्रागच्छन्ति, तन्मते एकविंशतिः प्रकृतयोऽप्युक्तकालं यावत् संक्रामन्ति । मिश्रगुणस्थाने द्वे संक्रमस्थाने भवतः, तद्यथा–पञ्चविंशतिरेकविंशतिश्च । तत्राष्टाविंशतिसत्ताकस्योद्वलितसम्यक्त्वस्य वा परिणामवशेन मिथ्यात्वं परित्यज्य प्राप्तमिश्रस्य सप्तविंशतिसत्ताकस्यान्तर्मुहूर्तं यावत् पञ्चविंशतिः प्रकृतयः संक्रामन्ति, चतुर्विंशतिसत्ताकस्यान्तर्मुहूर्त्तं यावदेकविंशतिः प्रकृतयः संक्रामन्ति । अविरतसम्यग्दृष्टौ, देशविरते, प्रमत्तसंयते, अप्रमत्तसंयते च पञ्च पञ्च संक्रमस्थानानि भवन्ति, तद्यथा–सप्तविंशतिः, षड्विंशतिः, त्रयोविंशतिः,

विंशतिः, एकविंशतिश्चेति । तत्र औपशमिकसम्यग्दृष्टेरावलिकाया ऊर्ध्वं वर्तमानस्याष्टाविंशतिसत्ताकस्य स्वकालं यावत्, वेदकसम्यग्दृष्टेश्च साधिकषट्षष्टिसागरोपमं यावत् सम्यक्त्वं प्रतिग्रहत्वे कृतमपनीय शेषाः सप्तविंशतिः प्रकृतयः संक्रामन्ति । औपशमिकसम्यग्दृष्टेरावलिकाया अभ्यन्तरे वर्तमानस्याष्टाविंशतिसत्ताकस्य सम्यक्त्वं प्रतिग्रहत्वे कृतमपनीय, मिश्रं च संक्रमावलिकान्तर्गतमिति कृत्वा तदप्यपनीय, शेषाः षड्विंशतिः प्रकृतय आवलिकामात्रं यावत् संक्रामन्ति । विसंयोजितानन्तानुबन्धिनो वेदकसम्यग्दृष्टेश्चतुर्विंशतिसत्ताकस्य साधिकषट्षष्टिसागरोपमं यावत्प्रतिग्रहत्वे कृतं सम्यक्त्वं परित्यज्य शेषास्त्रयोविंशतिः प्रकृतयः संक्रामन्ति । तस्यैव वेदकसम्यग्दृष्टेर्मिथ्यात्वे क्षपिते त्रयोविंशतिसत्ताकस्यान्तर्मुहूर्तं यावत् द्वाविंशतेः सङ्क्रमो भवति । मिश्रे क्षपिते द्वाविंशतिसत्ताकस्यान्तर्मुहूर्त्तं यावच्चारित्रमोहनीयस्यैकविंशतिः प्रकृतयः संक्रामन्ति, यद्वा क्षायिकसम्यग्दृष्टेरेकविंशतिसत्ताकस्य साधिकत्रयस्त्रिंशत्सागरोपमं यावदेकविंशतिः प्रकृतयः संक्रामन्ति । अपूर्वकरणगुणस्थाने द्वे संक्रमस्थाने भवतः, तद्यथा—त्रयोविंशतिः, एकविंशतिश्च । तत्रोद्वलितानन्तानुबन्धिनश्चतुर्विंशतिसत्ताकस्योपशमितानन्तानुबन्धिनो वा अष्टाविंशतिसत्ताकस्य त्रयोविंशतिः प्रकृतयः संक्रामन्ति, ताश्चान्तर्मुहूर्तं यावत् । क्षायिकसम्यग्दृष्टेरुभयश्रेण्यामन्तर्मुहूर्तं यावदेकविंशतिः प्रकृतयः संक्रामन्ति । नवमगुणस्थाने विंशतिः संक्रमस्थानानि भवन्ति, तद्यथा—त्रयोविंशतिः, द्वाविंशतिः, एकविंशतिः, विंशतिः, एकोनविंशतिः, अष्टादश, चतुर्दश, त्रयोदश, द्वादश, एकादश, दश, नव, अष्ट, सप्त, षट्, पञ्च, चतस्रः, तिस्रः, द्वे, एकश्चेति । तत्र त्रयोविंशतिरुपशमश्रेण्यामौपशमिकसम्यग्दृष्टेश्चतुर्विंशतिसत्ताकस्याष्टाविंशतिसत्ताकस्य वान्तर्मुहूर्तं यावत् संक्रामति । उपशमश्रेण्यामौपशमिकसम्यग्दृष्टेरन्तरकरणे कृते संज्वलनलोभस्य संक्रमाभावेनान्तर्मुहूर्तं यावत् द्वाविंशतिः प्रकृतयः संक्रामन्ति । औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य नपुंसकवेदे चोपशान्तेऽन्तर्मुहूर्तं यावदेकविंशतिः प्रकृतयः संक्रामन्ति, यद्वोपशमश्रेण्यां वर्तमानस्य क्षायिकसम्यग्दृष्टेरन्तरकरणादर्वाग्, यद्वा क्षपकश्रेण्यां वर्तमानस्य यावत् कषायाष्टकं न क्षीयते तावदेकविंशतिः प्रकृतयः संक्रामन्ति । औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य स्त्रीवेदे चोपशान्तेऽन्तर्मुहूर्तं यावत् विंशतिः प्रकृतयः संक्रामन्ति, यद्वा क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्यान्तरकरणे च कृते संज्वलनलोभस्य संक्रमो न भवतीति तदपनीते शेषा विंशतिः प्रकृतयोऽन्तर्मुहूर्तं यावत्संक्रामन्ति । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य नपुंसकवेद उपशान्तेऽन्तर्मुहूर्तं यावदेकोनविंशतिः प्रकृतयः संक्रामन्ति । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य स्त्रीवेदे चोपशान्तेऽन्तर्मुहूर्तं यावदष्टादश प्रकृतयः संक्रामन्ति । औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य षट्सु नोकषायेषूपशान्तेषु समयोनावलिकाद्विकं यावत् चतुर्दश प्रकृतयः संक्रामन्ति । औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य

पुंवेद उपशान्तेऽन्तर्मुहूर्तं यावत् त्रयोदश प्रकृतयः संक्रामन्ति, यद्वा क्षायिकसम्यग्दृष्टेः क्षपकश्रेण्यां वर्तमानस्य कषायाष्टके क्षीणेऽन्तर्मुहूर्तं यावत् त्रयोदश प्रकृतयः संक्रामन्ति। क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य हास्यादिषट्के चोपशान्ते समयोनावलिकाद्विकं यावत् द्वादश प्रकृतयः संक्रामन्ति, यद्वा क्षायिकसम्यग्दृष्टेः क्षपकश्रेण्यां वर्तमानस्य त्रयोदशप्रकृतीनामन्तरकरणे कृते सति संज्वलनलोभस्य संक्रमाभावेनान्तर्मुहूर्तं यावत् द्वादश प्रकृतयः संक्रामन्ति। औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्याप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विके उपशान्ते समयोनावलिकाद्विकं यावदेकादश प्रकृतयः संक्रामन्ति, यद्वोपशमश्रेण्यां वर्तमानस्य क्षायिकसम्यग्दृष्टेः पुंवेदे उपशान्तेऽन्तर्मुहूर्तं यावदेकादश प्रकृतयः संक्रामन्ति, यद्वा क्षायिकसम्यग्दृष्टेश्च क्षपकश्रेण्यां वर्तमानस्य नपुंसकवेदे क्षीणेऽन्तर्मुहूर्तं यावदेकादश प्रकृतयः संक्रामन्ति । औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य संज्वलनक्रोध उपशान्तेऽन्तर्मुहूर्तं यावत् दश प्रकृतयः संक्रामन्ति, क्षायिकसम्यग्दृष्टेश्च क्षपकश्रेण्यां वर्तमानस्य स्त्रीवेदे क्षपितेऽन्तर्मुहूर्तं यावद्दश प्रकृतयः संक्रामन्ति । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्याप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विके उपशान्ते समयोनावलिकाद्विकं यावन्नव प्रकृतयः संक्रामन्ति। औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्याप्रत्याख्यानप्रत्याख्यानावरणमानद्विके उपशान्ते समयोनावलिकाद्विकं यावदष्टौ प्रकृतयः संक्रामन्ति, क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य वा संज्वलनक्रोधे उपशान्तेऽन्तर्मुहूर्तं यावदष्टौ प्रकृतयः संक्रामन्ति। औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य संज्वलनमाने उपशान्तेऽन्तर्मुहूर्तं यावत् सप्त प्रकृतयः संक्रामन्ति । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्याप्रत्याख्यानप्रत्याख्यानावरणमानद्विके उपशान्ते समयोनावलिकाद्विकं यावत् षट् प्रकृतयः संक्रामन्ति । औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्याप्रत्याख्यानप्रत्याख्यानावरणमायाद्विके उपशान्ते समयोनावलिकाद्विकं यावत् पञ्च प्रकृतयः संक्रामन्ति, क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वा वर्तमानस्य संज्वलनमाने उपशान्तेऽन्तर्मुहूर्तं यावत् पञ्च प्रकृतयः संक्रामन्ति। औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य संज्वलनमायायामुपशान्तायामन्तर्मुहूर्तं यावच्चतस्रः प्रकृतयः संक्रामन्ति, अथवा क्षायिकसम्यग्दृष्टेः क्षपकश्रेण्यां वर्तमानस्य हास्यादिषट्के क्षीणे सति समयोनावलिकाद्विकं यावच्चतस्रः प्रकृतयः संक्रामन्ति। क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्याप्रत्याख्यानप्रत्याख्यानावरणमायाद्विके उपशान्ते समयोनावलिकाद्विकं यावत् तिस्रः प्रकृतयः संक्रामन्ति। क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य संज्वलनमायायामुपशान्तायामन्तर्मुहूर्तं यावत् प्रकृतिद्विकं संक्रामति, यद्वा क्षायिकसम्यग्दृष्टेः क्षपकश्रेण्यां वर्तमानस्य संज्वलनक्रोधे क्षीणे प्रकृतिद्वयमन्तर्मुहूर्तं यावत् संक्रामति, यद्वोपशमश्रेण्यामौपशमिकसम्यग्दृष्टेः संज्वलनलोभेऽप्रतिग्रहे सति प्रकृतिद्वयं संक्रामति। क्षायिकसम्यग्दृष्टेः क्षपकश्रेण्यां वर्तमानस्य संज्वलनमाने क्षीणे

एका प्रकृतिरन्तर्मुहूर्तं यावत् संक्रामति । सूक्ष्मसम्पराये, उपशान्तमोहे च मिथ्यात्व-मिश्ररूपं प्रकृतिद्वयं संक्रामति ।

नामकर्मणि मिथ्यादृष्टौ षट् संक्रमस्थानानि, तद्यथा—द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिरिति । तत्र षण्णवतिस्थानं बद्धजिननामा वेदकसम्यग्दृष्टिः पूर्वबद्धनरकायुष्कश्चरमान्तर्मुहूर्तं परिणामपरावर्त्तनेन मिथ्यात्वं गतस्तस्य मनुजगतौ, नरके प्राप्तेऽपर्याप्तावस्थायामन्तर्मुहूर्तं यावन्नरकगतौ च षण्णवतिसत्त्वस्थानं संक्रामति । द्व्युत्तरशतं, पञ्चनवतिश्चेति स्थानद्वयं चतुर्गतिकाऽपि संक्रामन्ति । त्रिनवतिश्चतुरशीतिश्चेति सत्त्वस्थानद्वयं तिर्यङ्मनुष्याणां संक्रामति । द्व्यशीतिसत्त्वस्थानं तिरश्चामेव संक्रामति । सास्वादनगुणस्थाने द्व्युत्तरशतं, पञ्चनवतिरिति द्वयं संक्रामति । तत्र द्व्युत्तरशतमाहारकं बद्धा उपशमश्रेणीतः प्रतिपतन् यः सास्वादनभावमुपगच्छति तस्य नरस्य संक्रामति । पञ्च-नवतिसत्त्वस्थानं चतुर्गतिकानामपि संक्रमे प्राप्यते । मिश्रगुणस्थाने द्व्युत्तरशतं, पञ्चनवति-रिति सत्त्वस्थानद्वयं चतुर्गतिकानामपि संक्रामति । अविरतसम्यग्दृष्टौ चत्वारि संक्रम-स्थानानि संक्रामन्ति, तद्यथा—त्र्युत्तरशतं, द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिरिति । तत्र त्र्युत्तरशतमप्रमत्तसंयतोऽपूर्वकरणो वाऽऽहारकं, जिननामकर्म च बद्धा परिणामपरावर्त्तने-नाविरतो जातः तस्य मनुजगतौ, तस्यैव च देवत्वं प्राप्तस्य देवगतौ संक्रामति, न नरक-तिर्यग्गत्योः, तत्र तस्याभावात् । द्व्युत्तरशतस्य पञ्चनवतेश्च संक्रमश्चतुर्गतिकानामपि भवति । षण्णवतिसत्त्वस्थानं मनुजदेवनारकाणां संक्रामति । देशविरतगुणस्थानेऽपि अविरतसम्य-ग्दृष्टाविव तान्येव चत्वारि सत्त्वस्थानानि संक्रामन्ति, नवरमप्रमत्तोऽपूर्वकरणो वा तीर्थ-कराहारकं बद्ध्वा परिणामह्रासेन देशविरतो जात इत्यधिकं वक्तव्यमिति । प्रमत्तसंयतेऽप्र-मत्तसंयते च त्र्युत्तरशतं, द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिरिति चत्वारि सत्त्वस्थानानि मनुजस्यैव संक्रामन्ति, शेषगतिकानां सर्वविरतिसत्कगुणस्थानासम्भवात् । अपूर्वकरणे षट् संक्रमस्थानानि, तद्यथा—त्र्युत्तरशतं, षण्णवतिः, द्व्युत्तरशतं, पञ्चनवतिः, एकोत्तरशतं, चतुर्णवतिरिति । आद्यानि चत्वार्यपि देवप्रायोग्यबन्धव्यवच्छेदात्पूर्वं संक्रामन्ति, प्रति-ग्रहत्वेन यशःकीर्तिवर्जानि तान्येव चत्वारि त्रिंशद्बन्धव्यवच्छेदे सति संक्रामन्ति । अनिवृत्तिकरणेऽष्टौ संक्रमस्थानानि, तद्यथा—द्व्युत्तरशतं, एकोत्तरशतं, पञ्चनवतिः, चतु-र्णवतिः, एकोननवतिः, अष्टाशीतिः, द्व्यशीतिः, एकाशीतिश्चेति । तत्राद्यानि चत्वारि नामत्रयोदशक्षपणादर्वाक् क्षपकश्रेण्यामुपशमश्रेण्यां च प्रतिग्रहीकृतयशःकीर्तिवर्जं तत्त-त्सत्ताकस्य संक्रामन्ति । एकोननवत्यादीनि चत्वारि क्षपकाणामेव त्रयोदशक्षपणानन्तरं संक्रामन्ति । एतान्येवाष्टौ सूक्ष्मसम्परायेऽपि वेदितव्यानि । केवलमाद्यानि चत्वारि उपशम-श्रेण्यामेव संक्रामन्ति, उपरितनानि तु क्षपकश्रेण्यामेव संक्रामन्ति । उपशान्तादौ तु प्रति-ग्रहाभावेन न किमपि संक्रामतीत्युक्तानि गुणस्थानेषु संक्रमस्थानानि ।

## ॥ गुणस्थानेषु संक्रमस्थानयन्त्रकम् ॥

| गुणस्था० | ज्ञाना० | दर्शना० | वेदनीय | मोहनीय | आयुः | नाम | गोत्र | अन्तराय |
|---|---|---|---|---|---|---|---|---|
| मिथ्या० | १ | १ | २ | ४ | ० | ६ | २–० | १ |
| सास्वा० | १ | १ | २ | १ | ० | २ | २ | १ |
| मिश्र० | १ | १ | २ | २ | ० | २ | १ | १ |
| अवि० | १ | १ | २ | ५ | ० | ४ | १ | १ |
| देश० | १ | १ | २ | ५ | ० | ४ | १ | १ |
| प्रम० | १ | १ | २ | ५ | ० | ४ | १ | १ |
| अप्रम० | १ | १ | १ | ५ | ० | ४ | १ | १ |
| अपूर्व क० | १ | १ | १ | २ | ० | ६ | १ | १ |
| अनि० ,, | १ | २ | १ | २० | ० | ८ | १ | १ |
| सूक्ष्मसम्प० | १ | २ | १ | मिथ्यात्वमिश्ररूपे द्वे | ० | ८ | १ | १ |
| उपशान्तमो० | ० | ० | ० | ,, | ० | ० | ० | ० |

अथ प्रतिग्रहस्थानस्वामित्वप्रतिपादनावसरः, तत्र प्रायेण यानि बन्धस्थानानि तान्येव प्रतिग्रहस्थानानि भवन्ति, अत एवादौ गुणस्थानेषु बन्धस्थानानि प्रतिपाद्यन्ते–तत्र ज्ञानावरणीयस्यान्तरायस्य च मिथ्यादृष्टेरारभ्य सूक्ष्मसम्परायगुणस्थानं यावत् पञ्च पञ्चप्रकृत्यात्मकं एकैकं बन्धस्थानं भवति, न परतः, बन्धाभावात् । दर्शनावरणीयस्य त्रीणि बन्धस्थानानि, तद्यथा–नवप्रकृत्यात्मकं, षट्प्रकृत्यात्मकं, चतुष्प्रकृत्यात्मकं चेति । तत्र मिथ्यादृष्टौ, सास्वादने च नवप्रकृत्यात्मकं बध्नाति, स्त्यानर्द्धित्रिकस्य च बन्धव्यवच्छेदे सति मिश्रदृष्टेरारभ्यापूर्वकरणप्रथमभागं यावत् षट्कं बध्नाति, ततोऽपि निद्राद्विकबन्धव्यवच्छेदे सति अपूर्वकरणद्वितीयभागादारभ्य सूक्ष्मसम्परायं यावत् चतुष्कं बध्नाति । वेदनीयस्य, गोत्रस्य च द्वे द्वे बन्धस्थाने भवतः । तत्र मिथ्यादृष्टेरारभ्य सूक्ष्मसम्परायगुणस्थानं यावत् सातवेदनीयरूपमुच्चैर्गोत्ररूपं च बन्धस्थानं भवति, असातवेदनीयरूपं मिथ्यादृष्टेरारभ्य प्रमत्तगुणस्थानं यावद्बध्नाति, नीचैर्गोत्ररूपं बन्धस्थानं च मिथ्यादृष्टौ, सास्वादने च बध्नाति । मिथ्यादृष्टौ आयुश्चतुष्कं बध्नाति, सास्वादने नरकवर्जं त्रिकं बध्नाति, मिश्रगुण-

स्थाने आयुर्बन्धप्रायोग्याध्यवसायाभावेन नैकमपि बध्नाति, अविरतसम्यग्दृष्टौ देवनारका मनुष्यायुष्कं बध्नन्ति, तिर्यङ्मनुष्याश्च देवायुष्कं बध्नन्ति, देशविरतौ प्रमत्तेऽप्रमत्ते चैकमेव देवायुष्कं बध्यते, उपरितनेषु गुणस्थानकेषु च तद्बन्धप्रायोग्याध्यवसायाभावेन न किमपि आयुष्कं बध्यते । मोहनीयस्य दश बन्धस्थानानि, तद्यथा–द्वाविंशतिः, एकविंशतिः, सप्तदश, त्रयोदश, नव, पञ्च, चतस्रः, तिस्रः, द्वे, एका चेति । तत्र मिथ्यादृष्टौ द्वाविंशतिः, सास्वादने एकविंशतिः, मिश्रेऽविरतसम्यग्दृष्टौ च प्रत्येकं सप्तदश २, देशविरतौ त्रयोदश, प्रमत्तेऽप्रमत्तेऽपूर्वकरणे च प्रत्येकं नव ३, अनिवृत्तिकरणप्रथमभागे पञ्च, द्वितीयभागे चतस्रः, तृतीयभागे तिस्रः, चतुर्थभागे द्वे, पञ्चमभागे चैका बध्यन्ते । अत्र मिथ्यादृष्टौ भङ्गाः त्रिभिर्वेदैर्हास्यादियुगलाभ्यां षट्, एवं सास्वादने द्वाभ्यां वेदाभ्यां हास्यादियुगलाभ्यां च चत्वारो भङ्गाः, मिश्रादौ तु पुंवेदस्यैव बन्धात् युगलाभ्यां द्वावेव भङ्गौ, अप्रमत्ते अपूर्वकरणे च हास्यरतिभ्यामेक एव भङ्गः, शोकारत्योर्बन्धव्यवच्छेदादिति विज्ञेयम् । सूक्ष्मादौ बादरकषायोदयाभावात् न किमपि मोहनीयं बध्यते ।

नामकर्मण्यष्टौ बन्धस्थानानि, तद्यथा–त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशद्, एकत्रिंशद्, एका चेति । तत्र मिथ्यादृष्टौ षड्बन्धस्थानानि, तद्यथा–त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशदिति । अपर्याप्तैकेन्द्रियप्रायोग्यं बध्नतस्त्रयोविंशतिः, तस्यां च बध्यमानायां बादरसूक्ष्मप्रत्येकसाधारणैर्भङ्गाश्चत्वारः । पर्याप्तैकेन्द्रियप्रायोग्यमपर्याप्तद्वित्रिचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियमनुजप्रायोग्यं च बध्नतः पञ्चविंशतिः, तस्यां च बध्यमानायां पञ्चविंशतिर्भङ्गा भवन्ति, तत्र पर्याप्तैकेन्द्रियप्रायोग्यायां पञ्चविंशतौ बध्यमानायां विंशतिर्भङ्गा भवन्ति, अपर्याप्तद्वित्रिचतुरिन्द्रियतिर्यक्पञ्चेन्द्रियमनुजप्रायोग्यायां पञ्चविंशतौ बध्यमानायां प्रत्येकमेकैको भङ्ग इति सर्वसङ्ख्यया पञ्चविंशतिः । पर्याप्तकैन्द्रियप्रायोग्यं बध्नतः षड्विंशतिबन्धस्थानं भवति, तत्र भङ्गा आतपोद्योताभ्यां षोडश भवन्ति । देवप्रायोग्यं नरकप्रायोग्यं चाष्टाविंशतिबन्धस्थानं भवति तत्र देवप्रायोग्ये बध्यमानेऽष्टौ भङ्गाः, नरकप्रायोग्ये च बध्यमाने एक एव भङ्गः, एवं सर्वसङ्ख्ययाष्टाविंशतिबन्धे नव भङ्गा भवन्ति । एकोनत्रिंशद्बन्धस्थानमपि द्विविधं भवति, तिर्यग्गतिप्रायोग्यं, मनुजगतिप्रायोग्यं च, तत्र पर्याप्तविकलेन्द्रियप्रायोग्यायामेकोनत्रिंशति बध्यमानायां प्रत्येकमष्टावष्टौ भङ्गा भवन्ति, तिर्यक्पञ्चेन्द्रियप्रायोग्यायामेकोनत्रिंशति बध्यमानायामष्टाधिकषट्चत्वारिंशच्छतानि, मनुजगतिप्रायोग्यायामेकोनत्रिंशति बध्यमानायामप्येतावन्त एव भङ्गा भवन्ति, सर्वसङ्ख्यया च चत्वारिंशदधिकद्विनवतिशतानि । जिननामयुता देवगतिप्रायोग्या एकोनत्रिंशत् मिथ्यादृष्टौ न बध्यते, तीर्थकरनाम्नः सम्यक्त्वप्रत्ययत्वात्, मिथ्यादृष्टेश्च तदभावात्, तदुक्तं "सम्मत्तगुणनिमित्तं तित्थयरं" इति । त्रिंशद्बन्धस्थानं तु मिथ्यादृष्टौ तिर्यग्गतिप्रायोग्यमेव भवति, यत्तु मनुजप्रायोग्यं जिनयुतं त्रिंशद्बन्धस्थानमाहारकद्विकयुतं देवगतिप्रायोग्यं वा त्रिंशद्बन्धस्थानं

तन्न भवति, तयोः सम्यक्त्वसंयमप्रत्ययत्वात्, तदुक्तं–"सम्मत्तगुणनिमित्तं तित्थयरं संजमेण आहारं" इति, तत्र पर्याप्तविकलेन्द्रियप्रायोग्यायां त्रिंशति बध्यमानायां प्रत्येकमष्टावष्टौ भङ्गा भवन्ति, तिर्यक्पञ्चेन्द्रियप्रायोग्यायां त्रिंशति बध्यमानायां त्वष्टाधिकानि षट्चत्वारिंशच्छतानि । सर्वसङ्ख्यया त्रिंशद्बन्धस्थाने द्वात्रिंशदधिकानि षट्चत्वारिंशच्छतानि भवन्ति, तदुक्तं "चउ पणवीसा सोलस नव चत्ताला सया य बाणउया । बत्तीसुत्तरच्छायालसया मिच्छस्स बन्धविहा ॥ १ ॥" इति । सास्वादने त्रीणि बन्धस्थानानि, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशदिति । अत्र नरकगतिप्रायोग्याष्टाविंशतिर्बन्धमेव नायाति, देवगतिप्रायोग्याष्टाविंशतिस्तु बध्यते, तस्यां बध्यमानायामष्टौ भङ्गा भवन्ति, तद्बन्धकास्तिर्यक्पञ्चेन्द्रिया मनुजाश्च भवन्ति । एकोनत्रिंशद्बन्धस्थानं च मनुजप्रायोग्यं तिर्यक्पञ्चेन्द्रियप्रायोग्यं वा भवति, न शेषगतिप्रायोग्यं, तच्च चतुर्गतिकाः सास्वादना बध्नन्ति, अत्र भङ्गाश्चतुःषष्टिशतानि, तथाहि–सास्वादनास्तिर्यक्प्रायोग्यं मनुजप्रायोग्यं वा एकोनत्रिंशद्बन्धं बध्नन्तोऽपि हुण्डं सेवार्तसंहननं च तथास्वाभाव्यात् न बध्नन्ति, ततः पञ्चेन्द्रियतिर्यक्प्रायोग्यं बध्नन्तः पञ्चभिः संस्थानैः, पञ्चभिः संहननैः, द्वाभ्यां खगतिभ्यां, स्थिरास्थिराभ्यां, शुभाशुभाभ्यां, सुभगदुर्भगाभ्यां, सुस्वरदुस्वराभ्यां, आदेयानादेयाभ्यां, यशःकीर्त्ययशःकीर्तिभ्यामिति द्वात्रिंशच्छतानि तिर्यक्पञ्चेन्द्रियप्रायोग्याणि भवन्ति, एतावन्त्येव मनुजगतिप्रायोग्याण्यपि, सर्वसंख्यया चतुःषष्टिशतानि । उद्योतयुतं त्रिंशद्बन्धं तु चतुर्गतिका अपि सास्वादनाः पञ्चेन्द्रियतिर्यक्प्रायोग्यमेव बध्नन्ति । अत्रापि भङ्गानां द्वात्रिंशच्छतानि । सर्वसंख्ययाऽष्टाधिकानि षण्णवतिशतानि, तदुक्तं–"अट्ठ सया चोसट्ठि बत्तीससया य सासणे भणिया । अट्ठावीसाईसुं सव्वाणट्ठहियछण्णउई ॥ १ ॥" इति । मिश्रगुणस्थाने द्वे भवतः–अष्टाविंशतिरेकोनत्रिंशदिति । तत्र अष्टाविंशतिबन्धस्थानं देवगतिप्रायोग्यं तिर्यक्पञ्चेन्द्रिया मनुजाश्च बध्नन्ति । देवनैरयिका मनुजगतिप्रायोग्यमेकोनत्रिंशद्बन्धस्थानं बध्नन्ति, तत्र स्थिरास्थिरशुभाशुभ-यशःकीर्त्ययशःकीर्तिपदैः प्रति बन्धस्थानमष्टावष्टौ भङ्गा भवन्ति । अविरतसम्यग्दृष्टौ त्रीणि बन्धस्थानानि, तद्यथा–अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशच्च । तिर्यक्पञ्चेन्द्रिया मनुजा वा देवगतिप्रायोग्यमष्टाविंशतिबन्धं बध्नन्ति, अत्र स्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिभिरष्टौ भङ्गा भवन्ति । एवमेव मनुजा देवप्रायोग्यं जिनयुतमेकोनत्रिंशद्बन्धस्थानं बध्नन्ति, देवनारकाश्च मनुष्यप्रायोग्यमेकोनत्रिंशद्बन्धस्थानं बध्नन्ति । एतदेव जिनयुतं मनुष्यगतिप्रायोग्यं त्रिंशद्बन्धस्थानं देवनारका बध्नन्ति । त्रिष्वपि स्थानेषु प्रत्येकमष्टावष्टौ भङ्गा भवन्ति । सर्वसङ्ख्यया च द्वात्रिंशत् । देशविरतौ द्वे बन्धस्थाने–अष्टाविंशतिरेकोनत्रिंशदिति । तत्राष्टाविंशतिर्मनुजस्य तिर्यक्पञ्चेन्द्रियस्य वा देवगतिप्रायोग्यां बध्नतो भवति, तत्राष्टौ भङ्गाः, मनुजस्य जिननामयुतमेकोनत्रिंशत्प्रकृत्यात्मकं बन्धस्थानं देवप्रायोग्यं बध्नतो भवति । अत्राप्यष्टौ भङ्गा भवन्ति । सर्वसङ्ख्यया षोडश । एवमेव प्रमत्तसंयते बन्धस्थानद्वयं वाच्यं, केवलं मनुजस्यैवेति । अप्रमत्तसंयतस्य चत्वारि

बन्धस्थानानि, तद्यथा–अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशद्, एकत्रिंशच्चेति। तत्राष्टाविंशतिरेकोनत्रिंशच्च देवप्रायोग्ये ये प्रमत्ते उक्ते तेऽत्रापि तथैव द्रष्टव्ये । अष्टाविंशतिरेव चाहारकद्वययुता त्रिंशत् भवति, सैव जिनयुतैकत्रिंशद्भवति। अत्र चतुर्षु बन्धस्थानेषु एकैक एव भङ्गः प्रतिपक्षाणामप्रशस्तप्रकृतीनां बन्धव्यवच्छेदात्। अपूर्वकरणे पञ्च बन्धस्थानानि, तद्यथा–अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशद्, एकत्रिंशद्, एका चेति। तत्राद्यानि चत्वारि अप्रमत्तस्येव, एका च यशःकीर्त्तिरूपा देवगतिप्रायोग्यबन्धव्यवच्छेदे सति भवति। अनिवृत्तिबादरसम्पराये सूक्ष्मसम्पराये च यशःकीर्तिरूपमेकमेव बन्धस्थानं भवतीति उक्तानि गुणस्थानेषु बन्धस्थानानि।

॥ गुणस्थानेषु बन्धस्थानयन्त्रम् ॥

| गुणस्था० | ज्ञाना० | दर्शना० | वेदनीय | मोहनीय | आयुः | नाम | गोत्र | अन्तराय |
|---|---|---|---|---|---|---|---|---|
| मिथ्या० | १ | १ | २ | १ | ४ | ६ | २ | १ |
| सास्वा० | १ | १ | २ | १ | ३ | ३ | २ | १ |
| मिश्र० | १ | १ | २ | १ | ० | २ | १ | १ |
| अविर० | १ | १ | २ | १ | २ | ३ | १ | १ |
| देशवि० | १ | १ | २ | १ | १ | २ | १ | १ |
| प्रमत्त० | १ | १ | २ | १ | १ | २ | १ | १ |
| अप्रम० | १ | १ | १ | १ | १–० | ४ | १ | १ |
| अपू० क० | १ | २ | १ | १ | ० | ५ | १ | १ |
| अनि० ,, | १ | १ | १ | ५ | ० | १ | १ | १ |
| सूक्ष्मसम्प० | १ | १ | १ | ० | ० | १ | १ | १ |
| उप०क्षी०सयो० च | ० | ० | १ | ० | ० | ० | ० | ० |

अथ गुणस्थानद्वारेण प्रतिग्रहस्थानस्वामिनः प्रोच्यन्ते। तत्र ज्ञानावरणान्तराययोः पञ्च प्रकृत्यात्मकमेव प्रतिग्रहस्थानं सूक्ष्मसम्परायं यावत् भवति, परतो बन्धाभावेन प्रतिग्रहाभावात्। दर्शनावरणीयस्य त्रीणि प्रतिग्रहस्थानानि–नवकं, षट्कं, चतुष्कमिति। तत्र नवकं मिथ्यादृष्टौ, सास्वादने च भवति, मिश्रदृष्टेरारभ्यापूर्वकरणप्रथमभागं यावत् षट्प्रकृत्य

त्मकं प्रतिग्रहस्थानं भवति, अपूर्वकरणद्वितीयभागात् सूक्ष्मसम्परायं यावत् चतुष्प्रकृत्यात्मकं प्रतिग्रहस्थानं भवति । वेदनीयस्य प्रमत्तं यावत् सातरूपमसातरूपं वेति प्रतिग्रहस्थानद्वयं भवति, अप्रमत्तात्सूक्ष्मसम्परायं यावत् सातरूपमेकमेव भवति, उपशान्तादौ साम्परायिकबन्धाभावेन न भवति । गोत्रस्य द्वे प्रतिग्रहस्थाने—उच्चैर्गोत्ररूपं नीचैर्गोत्ररूपं चेति, तत्र मिथ्यादृष्टौ द्वे अपि भवतः, उच्चैर्गोत्रे चोद्वलिते तेजोवायूनामेकमपि न भवति, सास्वादनेऽपि प्रतिग्रहस्थानद्वयं भवति, मिश्रादारभ्य सूक्ष्मसम्परायं यावदुच्चैर्गोत्ररूपमेकमेवेति । मोहनीयस्याष्टादश प्रतिग्रहस्थानानि, तद्यथा—[1]द्वाविंशतिप्रकृत्यात्मकम्, [2]एकविंशतिप्रकृत्यात्मकम्, [3]एकोनविंशतिप्रकृत्यात्मकम्, [4]अष्टादशप्रकृत्यात्मकम्, [5]सप्तदशप्रकृत्यात्मकम्, [6]पञ्चदशप्रकृत्यात्मकम्, [7]चतुर्दशप्रकृत्यात्मकम्, [8]त्रयोदशप्रकृत्यात्मकम्, [9]एकादशप्रकृत्यात्मकम्, [10]दशप्रकृत्यात्मकम्, [11]नवप्रकृत्यात्मकम्, [12]सप्तप्रकृत्यात्मकम्, [13]षट्प्रकृत्यात्मकम्, [14]पञ्चप्रकृत्यात्मकम्, [15]चतुष्प्रकृत्यात्मकम्, [16]त्रिप्रकृत्यात्मकम्, [17]द्विप्रकृत्यात्मकम्, [18]एकप्रकृत्यात्मकञ्चेति । तत्राद्यमष्टाविंशतिसत्ताकस्य, सम्यक्त्वे उद्वलिते सप्तविंशतिसत्ताकस्य वा मिथ्यादृष्टौ भवति । द्वितीयं सास्वादने मिथ्यादृष्टौ च, तत्र मिथ्यादृष्टौ मिश्रमोहनीये उद्वलितेऽनादिमिथ्यादृष्टौ वा षड्विंशतिसत्ताकस्यैकविंशतिप्रकृत्यात्मकं प्रतिग्रहस्थानं भवति, मिथ्यात्वस्य प्रतिग्राह्याभावेन प्रतिग्रहत्वाभावात्, औपशमिकसम्यक्त्वात् प्रतिपततः सास्वादनभावं प्राप्तस्याप्येतदेव प्रतिग्रहस्थानं भवति । मिश्रदृष्टौ सप्तदशप्रकृत्यात्मकमेकमेव पतद्ग्रहस्थानं भवति । अविरतसम्यग्दृष्टौ त्रीणि प्रतिग्रहस्थानानि, तद्यथा—एकोनविंशतिः, अष्टादश, सप्तदशेति, तत्र वेदकसम्यग्दृष्टेरौपशमिकसम्यग्दृष्टेश्च सम्यक्त्वमिश्रयुतं सप्तदशप्रकृत्यात्मकं बन्धस्थानमेव एकोनविंशतिप्रकृत्यात्मकं प्रतिग्रहस्थानं भवति । वेदकसम्यग्दृष्टेर्मिथ्यात्वे क्षपिते मिश्रस्य प्रतिग्रहाभावेनाष्टादशप्रकृत्यात्मकं त्रयोविंशतिसत्ताकस्य प्रतिग्रहस्थानं भवति, मिश्रे क्षपिते द्वाविंशतिसत्ताकस्य क्षायिकसम्यग्दृष्टेर्वा सप्तदशप्रकृत्यात्मकं प्रतिग्रहस्थानं भवति । देशविरतौ एकोनविंशत्यष्टादशसप्तदशप्रकृत्यात्मकान्यप्रत्याख्यानावरणचतुष्टयविहीनानि पञ्चदशचतुर्दशत्रयोदशप्रकृत्यात्मकानि त्रीणि भवन्ति । प्रमत्तसंयते पञ्चदशचतुर्दशत्रयोदशप्रकृत्यात्मकान्येव प्रत्याख्यानावरणचतुष्टयविहीनान्येकादशदशनवप्रकृत्यात्मकानि त्रीणि भवन्ति । अप्रमत्तसंयतेऽप्येतान्येव, नवरं हास्यरतिरूपं युगलं बोध्यमिति । अपूर्वकरणे औपशमिकसम्यग्दृष्टेरेकादशप्रकृत्यात्मकं, क्षायिकसम्यग्दृष्टेर्नवप्रकृत्यात्मकञ्च प्रतिग्रहस्थानं भवति । अनिवृत्तिकरणे सप्त प्रतिग्रहस्थानानि; तद्यथा—सप्त, षट्, पञ्च, चतस्रः, तिस्रः, द्वे, एका चेति । तत्रौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य सप्तषट्पञ्चचतुःत्रिद्विप्रकृत्यात्मकानि षट् प्रतिग्रहस्थानानि भवन्ति, क्षायिकसम्यग्दृष्टेरुभयश्रेण्यां वर्तमानस्य पञ्चचतुःत्रिद्व्येकप्रकृत्यात्मकानि पञ्च प्रतिग्रहस्थानानि भवन्ति । सूक्ष्मसम्पराये उपशान्तमोहे च द्विप्रकृत्यात्मकमेकमेव प्रतिग्रहस्थानं भवति । क्षीणमोहादौ तु न भवति,

क्षीणत्वादेवेति । नामकर्मणि तु यथा गुणस्थानेषु बन्धस्थानानि चिन्तितानि तथैव गुणस्थानेषु प्रतिग्रहस्थानान्यपि वाच्यानि ।

॥ गुणस्थानेषु प्रतिग्रहस्थानयन्त्रकम् ॥

| गुणस्था० | ज्ञाना० | दर्शना० | वेदनीय | मोहनीय | आयुः | नाम | गोत्र | अन्तराय |
|---|---|---|---|---|---|---|---|---|
| मिथ्या० | १ | १ | २ | २ | ० | ६ | २-० | १ |
| सास्वा० | १ | १ | २ | १ | ० | ३ | २ | १ |
| मिश्रे | १ | १ | २ | १ | ० | २ | १ | १ |
| अविरत० | १ | १ | २ | ३ | ० | ३ | १ | १ |
| देशविरतौ | १ | १ | २ | ३ | ० | २ | १ | १ |
| प्रमत्ते | १ | १ | २ | ३ | ० | २ | १ | १ |
| अप्रमत्ते | १ | १ | १ | ३ | ० | ४ | १ | १ |
| अपूर्वक० | १ | २ | १ | २ | ० | ५ | १ | १ |
| अनिवृ० | १ | १ | १ | ७ | ० | १ | १ | १ |
| सूक्ष्मसं० | १ | १ | १ | १ | ० | १ | १ | १ |
| उपशान्त० | ० | ० | ० | १ | ० | ० | ० | ० |

अथ संवेधद्वारेण गुणस्थानेषु स्वामित्वं चिन्त्यते—तत्र ज्ञानावरणीयस्य सामान्येन पञ्चप्रकृत्यात्मकं संक्रमस्थानं पञ्चप्रकृत्यात्मके प्रतिग्रहे सूक्ष्मसम्परायं यावत् संक्रामति । मत्यादिज्ञानावरणानां पृथक्प्रकृतिसंक्रमविवक्षायां तु मतिज्ञानावरणीयं स्वभिन्नचतुष्प्रकृत्यात्मके प्रतिग्रहस्थाने संक्रामति, एवं श्रुतज्ञानावरणीयं स्वभिन्नचतुष्के प्रतिग्रहस्थाने, एवमवधिमनःपर्यवकेवलज्ञानावरणान्यपि बोध्यानि, एवं ज्ञानावरणस्य पृथक् प्रकृत्यापेक्षया चतुष्प्रकृत्यात्मकानि पञ्च प्रतिग्रहस्थानानि । एवं मतिज्ञानावरणादिपृथक्प्रकृतिप्रतिग्रहविवक्षायां मतिज्ञानावरणे स्वभिन्नचतुष्प्रकृत्यात्मकं संक्रमस्थानं संक्रामति, एवमेव श्रुतावधिमनःपर्यवकेवलज्ञानावरणेष्वपि ज्ञेयमिति ज्ञानावरणीयस्यचतुष्प्रकृत्यात्मकानि पञ्च संक्रमस्थानानि । एवमेवान्तरायपञ्चकस्यापि बोध्यमिति ।

## ॥ गुणस्थानेषु प्रथमान्तिमयोः प्रतिग्रहे संक्रमस्थानयन्त्रकम् ॥

| गुणस्थानानि | ज्ञानावरणप्रतिग्र० | ज्ञानावरणसंक्रम० | अन्तरायप्रतिग्रह० | अन्तरायसंक्रमस्था० |
|---|---|---|---|---|
| मिथ्या० सूक्ष्मसं० यावत् | ५ | ५ | ५ | ५ |

## ज्ञानावरणस्य पृथक्प्रकृतिविवक्षया

| संक्रमप्रकृतिः– | मतिज्ञानावरणम् | श्रुतज्ञानावरणम् | अवधिज्ञानावरणम् | मनःपर्यवज्ञानावरणम् | केवलज्ञानावरणम् |
|---|---|---|---|---|---|
| प्रतिग्रहस्थानम्– | मतिभिन्नचतुष्के | श्रुतभिन्नचतुष्के | अवधिभिन्नचतुष्के | मनःपर्यवभिन्नचतुष्के | केवलभिन्नचतुष्के |
| संक्रमस्थानम्– | मतिभिन्नचतुष्कम् | श्रुतभिन्नचतुष्कम् | अवधिभिन्नचतुष्कम् | मनःपर्यवभिन्नचतुष्कम् | केवलभिन्नचतुष्कम् |
| प्रतिग्रहप्रकृतिः– | मत्यावरणे | श्रुतावरणे | अवध्यावरणे | मनःपर्यवज्ञानावरणे | केवलज्ञानावरणे |

## अन्तरायस्य पृथक्प्रकृतिविवक्षया

| संक्रमप्रकृतिः– | दाना० | लाभा० | भोगा० | उपभोगा० | वीर्या० |
|---|---|---|---|---|---|
| प्रतिग्रहस्थानम्– | स्वभिन्नचतुष्के | स्वभिन्नचतुष्के | स्वभिन्नचतुष्के | स्वभिन्नचतुष्के | स्वभिन्नचतुष्के |
| संक्रमस्थानम्– | स्वभिन्नचतुष्कम् | स्वभिन्नचतुष्कम् | स्वभिन्नचतुष्कम् | स्वभिन्नचतुष्कम् | स्वभिन्नचतुष्कम् |
| प्रतिग्रहप्रकृतिः– | दानान्तराये | लाभान्तराये | भोगान्तराये | उपभोगान्तराये | वीर्यान्तराये |

तृतीयकर्मणि मिथ्यादृष्टेरारभ्य प्रमत्तं यावत् बध्यमाने सातवेदनीयेऽबध्यमानमसातवेदनीयं संक्रामति, अबध्यमानं सातवेदनीयं बध्यमानेऽसातवेदनीये संक्रामति । अप्रमत्तादुपरि सूक्ष्मसम्परायं यावत् सातस्यैव बध्यमानत्वेन सातरूपप्रतिग्रहेऽसातवेदनीयं संक्रामति । उपशान्तादौ साम्परायिकबन्धाभावेन न किमपि संक्रामति । गोत्रकर्मणि वेदनीयवद् भावनीयम् । केवलं नीचैर्गोत्रस्य प्रतिग्रहभावो द्वितीयगुणस्थानपर्यन्तो वाच्यः । तेजोवायूनां नीचैर्गोत्रस्य बन्धसत्त्वेऽपि उच्चैर्गोत्रोद्वलिते सति प्रतिग्रहता न भवति, प्रतिग्राह्याभावादिति ।

॥ गुणस्थानेषु वेदनीयस्य प्रतिग्रहे संक्रमस्थानम् ॥

| गुणस्थानानि | सातस्य प्रतिग्रहे | असातस्य संक्रमस्थानम् | असातस्य प्रतिग्रहे | सातस्यसंक्रमस्थानम् |
|---|---|---|---|---|
| मिथ्या०प्रम०यावत् | ,, | ,, | ,, | ,, |
| अप्र०सूक्ष्मसं०यावत् | ,, | ,, | ० | ० |

॥ गुणस्थानेषु गोत्रकर्म्मणः प्रतिग्रहसंक्रमस्थानम् ॥

| गुणस्थानानि | उच्चैर्गोत्रस्य प्रतिग्रहे | नीचैर्गोत्रस्य संक्रमस्थानम् | नीचैर्गोत्रप्रतिग्रहे | उच्चैर्गोत्रस्य संक्रमस्थानम् |
|---|---|---|---|---|
| मिथ्या० सास्वा० च | ,, | ,, | ,, | ,, |
| मिश्र०सूक्ष्म०यावत् | ,, | ,, | ० | ० |

दर्शनावरणे त्रीणि प्रतिग्रहस्थानानि, द्वे संक्रमस्थाने च। मिथ्यादृष्टौ, सास्वादने च नवप्रकृत्यात्मके प्रतिग्रहस्थाने नवप्रकृत्यात्मकमेकमेव संक्रमस्थानं संक्रामति। अत्रापि पृथक् प्रकृतिसंक्रमप्रतिग्रहविवक्षया स्वभिन्नाष्टप्रकृत्यात्मकानि नव संक्रमस्थानानि, नव प्रतिग्रहस्थानानि च भवन्ति। मिश्रगुणस्थानकादारभ्यापूर्वकरणप्रथमभागं यावत् स्त्यानर्द्धित्रिकवर्जषट्प्रकृत्यात्मके प्रतिग्रहस्थाने नवप्रकृत्यात्मकं संक्रमस्थानं संक्रामति। पृथक् प्रकृतिविवक्षया स्त्यानर्द्धित्रिकं तद्भिन्नषट्प्रकृत्यात्मके प्रतिग्रहे संक्रामतीति षट्प्रकृत्यात्मकानि त्रीणि प्रतिग्रहस्थानानि भवन्ति। शेषदर्शनषट्कं स्वभिन्नबध्यमानपञ्चप्रकृत्यात्मके प्रतिग्रहे संक्रामतीति पञ्चप्रकृत्यात्मकानि षट् प्रतिग्रहस्थानानि। संक्रमस्थानानि च बध्यमानप्रतिग्रहप्रकृतिभिन्नाष्टप्रकृत्यात्मकानि षट् भवन्ति। अपूर्वकरणद्वितीयभागादारभ्योपशमश्रेण्यां सूक्ष्मसम्परायपर्यन्तं, क्षपकश्रेण्यामनिवृत्तिकरणद्वितीयभागे स्त्यानर्द्धित्रिकं यावत् क्षयं न याति तावत् चतुष्कप्रतिग्रहस्थाने नवप्रकृत्यात्मकं संक्रमस्थानं संक्रामति। अत्र बध्यमानप्रतिग्रहप्रकृतिभिन्नाष्टप्रकृत्यात्मकानि चत्वारि संक्रमस्थानानि, चतुष्प्रकृत्यात्मकानि पञ्च प्रतिग्रहस्थानानि, त्रिप्रकृत्यात्मकानि च चत्वारि प्रतिग्रहस्थानानि भवन्ति। स्त्यानर्द्धित्रिकक्षयादारभ्य सूक्ष्मसम्परायं यावत् चतुष्प्रकृत्यात्मके षट्कं संक्रामति। अत्रापि पृथक्प्रकृतिविवक्षया पञ्चप्रकृत्यात्मकानि चत्वारि संक्रमस्थानानि, चतुष्प्रकृत्यात्मके द्वे प्रतिग्रहस्थाने, त्रिप्रकृत्यात्मकानि च चत्वारि प्रतिग्रहस्थानानि भवन्तीति। ननु प्रथमान्तिमयोः कर्मणोः पञ्चप्रकृत्यात्मकप्रतिग्रहे पञ्चप्रकृत्यात्मकं सत्त्वस्थानं यथा संक्रामति तद्वत् द्वितीयस्यापि चतुष्प्रकृत्यात्मके प्रतिग्रहे चतुष्प्रकृत्यात्मकं सत्त्वस्थानं कथं न संक्रामतीति चेत्? उच्यते, प्रथमान्तिमयोरन्यसत्त्वस्थानाभावेन पञ्चप्रकृत्यात्मकमेव संक्रामति, द्वितीयस्य तूपशमश्रेण्यां नवप्रकृत्यात्मकस्य, क्षपकश्रेण्यां षट्प्रकृत्यात्मकसत्त्वस्थानस्य च सम्भवेन न चतुष्प्रकृत्यात्मकमेव संक्रामति। बन्धाभावे तु संक्रमप्रतिग्रहाभाव एवेति।

दर्शनावरणस्य पृथक्प्रकृतिविवक्षया

स्वभिन्नाष्टप्रकृत्यात्मकानि नव प्रतिग्रहस्थानानि द्वितीयगुणस्थानं यावत् ।

स्वभिन्नाष्टप्रकृत्यात्मकानि नव संक्रमस्थानानि ,,

स्त्यानर्द्धित्रिकवर्जषट्प्रकृत्यात्मकानि त्रीणि प्रतिग्रहस्थानानि मिश्रादपूर्वकरणप्रथम भागं यावत् ।

स्त्यानर्द्धित्रिकबन्धव्यवच्छेदानन्तरं षट्कबन्धस्थानमध्यात् स्वभिन्नपञ्चप्रकृत्यात्मकानि षट् प्रतिग्रहस्थानानि मिश्रादपूर्वकरणप्रथमभागं यावत् ।

स्वभिन्नाष्टप्रकृत्यात्मकानि षट् संक्रमस्थानानि मिश्रादपूर्वकरणप्रथमभागं यावत् ।

अपूर्वकरणद्वितीयभागादारभ्य सूक्ष्मसम्परायं यावदुपशमश्रेण्यां चतुष्प्रकृत्यात्मकानि पञ्च प्रतिग्रहस्थानानि, बध्यमानमध्यात् स्वभिन्नत्रिप्रकृत्यात्मकानि चत्वारि प्रतिग्रहस्थानानि, तथा बध्यमानमध्यात् स्वभिन्नाष्टप्रकृत्यात्मकानि चत्वारि संक्रमस्थानानि भवन्ति । क्षपकश्रेण्यां पुनः स्त्यानर्द्धित्रिकक्षयानन्तरं पञ्चप्रकृत्यात्मकानि चत्वारि संक्रमस्थानानि, प्रतिग्रहस्थानानि च षट्–त्रिप्रकृत्यात्मकानि चत्वारि, चतुष्प्रकृत्यात्मके च द्वे ।

॥ गुणस्थानेषु दर्शनावरणस्य प्रतिग्रहसंक्रमस्थानयन्त्रम् ॥

| गुणस्थानानि | ९ प्रति-ग्रहे | ९ संक्रम स्थानम् | ६ प्रति० | ९ संक्र० | ४ प्रति० | ९ सं० | ६ सं० |
|---|---|---|---|---|---|---|---|
| मिथ्या० सास्व० च | ,, | ,, | ० | ० | ० | ० | ० |
| मिश्र० यावदप्रमत्ते | ० | ० | ६ प्रति० | ९ सं० | ० | ० | ० |
| अपूर्वकरणप्र० १ | ० | ० | ,, | ,, | ० | ० | ० |
| ,, २–६ | ० | ० | ० | ० | ४ प्रति० | ९ सं० | ६ सं० |
| अनिवृ०सूक्ष्मसं०च | ० | ० | ० | ० | ,, | ,, | ,, |

मोहनीयस्य प्रागुक्तस्वरूपाणि त्रयोविंशतिः संक्रमस्थानानि, अष्टादश प्रतिग्रहस्थानानि च। तत्र मिथ्यादृष्टौ चत्वारि संक्रमस्थानानि, तद्यथा–सप्तविंशतिः, षड्विंशतिः, पञ्चविंशतिः, त्रयोविंशतिरिति, द्वे प्रतिग्रहस्थाने च–द्वाविंशतिरेकविंशतिरिति । अष्टाविंशतिसत्ताकस्य प्रतिग्रहत्वं कृतं मिथ्यात्वमपनीय शेषाः सप्तविंशतिः प्रकृतयः षोडशकषायभयजुगुप्साहास्यरतियुगलपुंवेदमिथ्यात्वरूपे प्रतिग्रहे, यद्वा षोडशकषायभयजुगुप्साहास्यरतियुगलस्त्रीवेदमिथ्यात्वरूपे प्रतिग्रहे, यद्वा षोडशकषायभयजुगुप्साहास्यरतियुगलनपुंसकवेदमिथ्यात्वरूपे प्रतिग्रहे, अथवा षोडशकशायभयजुगुप्साऽरतिशोकयुगलपुंवेदमिथ्यात्वरूपे प्रतिग्रहे, यद्वा षोडशकषायभयजुगुप्साऽरतिशोकयुगलस्त्रीवेदमिथ्यात्वरूपे प्रतिग्रहे, यद्वा षोडशकषायभयजुगुप्साऽरतिशोकयुगलनपुंसकवेदमिथ्यात्वरूपे प्रतिग्रहे, एवं षट्प्रकारे द्वाविंशतिप्रतिग्रहे

पल्योपमासङ्ख्येयभागं यावत् संक्रामन्ति। पृथक् प्रकृतिसंक्रमप्रकृतिप्रतिग्रहविवक्षया तु प्रायेण यावन्त्यः संक्रमप्रकृतयस्तावत्सङ्ख्याकानि प्रतिग्रहस्थानानि, यावन्त्यः प्रतिग्रहप्रकृतयः तावत्सङ्ख्याकानि संक्रमस्थानानि भवन्ति। तत्र पञ्चविंशतिप्रकृतयश्चारित्रमोहात्मके एकविंशतिप्रतिग्रहे, दर्शनद्विकं च मिथ्यात्वे संक्रामति। एतदेव भावयामः—अनन्तानुबन्धिक्रोधप्रतिग्रहेऽनन्तानुबन्धिक्रोधवर्जशेषचतुर्विंशतिप्रकृतयः संक्रामन्ति, अनन्तानुबन्धिमानेऽनन्तानुबन्धिमानवर्जशेषाश्चतुर्विंशतिप्रकृतयः संक्रामन्ति, अनन्तानुबन्धिमायायां अनन्तानुबन्धिमायावर्जशेषाश्चतुर्विंशतिप्रकृतयः संक्रामन्ति, अनन्तानुबन्धिलोभेऽनन्तानुबन्धिलोभवर्जशेषाश्चतुर्विंशतिप्रकृतयः संक्रामन्ति, एवमप्रत्याख्यानप्रत्याख्यानसंज्वलनक्रोधमानमायालोभभयजुगुप्साहास्यरतिपुंवेदादिरूपेषु प्रतिग्रहेष्वपि चतुर्विंशतिः प्रकृतयः संक्रामन्तीति चारित्रमोहनीयसत्कानि चतुर्विंशतिप्रकृत्यात्मकानि एकविंशतिसंक्रमस्थानानि, दर्शनद्विकरूपमेकं च मिथ्यात्वरूपे प्रतिग्रहे संक्रामतीति द्वाविंशतिसंक्रमस्थानानि ज्ञेयानि। उद्वलितसम्यक्त्वस्य मिथ्यादृष्टेस्तु यदा मिश्रं मिथ्यात्वे संक्रामति तदा न संक्रमस्थानमेकस्याः प्रकृतेः संक्रम्यमाणत्वात्, वेदनीयवद्विवक्षायां त्वेकप्रकृत्यात्मकमपि संक्रमस्थानं भवतीति द्वाविंशतौ एकस्याः प्रक्षेपे त्रयोविंशतिः संक्रमस्थानानि भवन्ति। बध्यमानानन्तानुबन्धिक्रोधस्य स्वभिन्नबध्यमानविंशतिप्रकृतिषु संक्रमो भवति, एवं शेषाणामपि बध्यमानानां प्रकृतीनां स्वभिन्नबध्यमानासु विंशतिप्रकृतिषु संक्रमो भवतीति चारित्रमोहनीयसत्कानि विंशतिप्रकृत्यात्मकानि एकविंशतिप्रतिग्रहस्थानानि। अरतिशोकस्त्रीवेदनपुंसकवेदानामबध्यमानानां बध्यमानासु एकविंशतिप्रकृतिषु संक्रमो भवतीति चतसृणामेकविंशतिप्रकृत्यात्मकानि चत्वारि प्रतिग्रहस्थानानीति चारित्रमोहनीयस्य पञ्चविंशतिप्रतिग्रहस्थानानि। दर्शनद्विकस्य मिथ्यात्वरूपे प्रतिग्रहे संक्रमो भवति; अत्र यद्यपि प्रतिग्रहस्थानं नास्ति, तथापि एकस्या अपि प्रकृतेः सातवेदनीयादिवत्स्थानं विवक्षणीयमाधेयभेदाच्चाधारस्यापि भेदत्वादिति सप्तविंशतिः प्रतिग्रहस्थानानि। एवं शेषविकल्पपञ्चकेऽपि या बध्यमानाः प्रकृतयस्ता विंशतिप्रकृत्यात्मकप्रतिग्रहस्थानेषु संक्रामन्ति। षट्सु विकल्पेषु परिभाव्यमानानां संक्रमस्थानामष्टात्रिंशदधिकं शतं भवति, अबध्यमानास्तु एकविंशतिप्रकृत्यात्मकप्रतिग्रहस्थानेषु संक्रामन्ति, प्रतिग्रहस्थानानां तु द्विषष्ट्यधिकं शतमिति। सम्यक्त्वमोहनीये उद्वलिते तु सप्तविंशतिसत्ताकस्य षड्विंशतिप्रकृतयस्तस्मिन्नेव द्वाविंशतिप्रतिग्रहे पल्योपमासंख्येयभागं यावत् संक्रामन्ति। मिश्रे चोद्वलिते षड्विंशतिसत्ताकस्याऽपार्धपुद्गलपरावर्तं यावत्, अनादिमिथ्यादृष्टावनन्तं कालं यावदेकविंशतिप्रतिग्रहे पञ्चविंशतिप्रकृतयः संक्रामन्ति। विसंयोजितानन्तानुबन्धिनः पुनः परिणामपरावर्त्तनेन मिथ्यात्वं गतस्याष्टाविंशतिसत्ताकस्यावलिकाया अभ्यन्तरे वर्तमानस्य तस्मिन्नेव द्वाविंशतिप्रतिग्रहे त्रयोविंशतिप्रकृतय आवलिकां यावत् संक्रामन्ति। पृथक् प्रकृतिसंक्रमप्रकृतिप्रतिग्रहविवक्षायां तु षड्विंशतिपञ्चविंशतित्रयोविंशतिसंक्रमस्थानानि सप्तविंशतिसंक्रमस्थानवद्व्याख्यानि, योऽत्र विशेषः स उच्यते—षड्विंशतिसंक्रमस्थाने

संक्रम्यमाणे सम्यक्त्वमोहनीयसत्कं प्रतिग्रहस्थानं न भवति, पञ्चविंशतिसंक्रमे दर्शनमोहसत्कानि संक्रमप्रतिग्रहस्थानानि न वाच्यानि, त्रयोविंशतिसंक्रमस्थानेऽनन्तानुबन्धिवर्ज्यचारित्रमोहसत्कैकविंशतिः प्रकृतयो बध्यमानानन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानसंज्वलनक्रोधमानमायालोभभयजुगुप्सान्यतमवेदान्यतरयुगलरूपे संक्रामन्ति, मिथ्यात्वे च दर्शनद्विकं संक्रामतीति। तत्रापि बध्यमानानन्तानुबन्धिचतुष्के एकविंशतिरेकविंशतिः प्रकृतयः संक्रामन्तीति चत्वारि एकविंशतिप्रकृत्यात्मकानि संक्रमस्थानानि, बध्यमानासु शेषासु स्वभिन्नविंशतिप्रकृत्यात्मकं २ संक्रमस्थानं संक्रामतीति विंशतिप्रकृत्यात्मकानि सप्तदश संक्रमस्थानानि, मिथ्यात्वे दर्शनमोहद्विकं संक्रामतीति सर्वसंख्यया द्वाविंशतिः संक्रमस्थानानि भवन्ति। बन्धावलिकान्तर्गतमिति कृत्वाऽनन्तानुबन्धिचतुष्टयसत्कानि प्रतिग्रहस्थानानि परित्यज्य शेषबध्यमानानां स्वभिन्नविंशतिप्रकृत्यात्मकानि सप्तदश,अबध्यमानानामेकविंशतिप्रकृत्यात्मकानि चत्वारीति सर्वसंख्यया चारित्रमोहनीयसत्कानि एकविंशतिप्रतिग्रहस्थानानि, दर्शनमोहसत्कं चाधेयभेदात् द्वयमिति कृत्वा त्रयोविंशतिप्रतिग्रहस्थानानि भवन्ति । एवमुत्तरत्रापि सर्वत्र पृथक्प्रकृतिसंक्रमप्रतिग्रहविवक्षायां स्वयं संक्रमस्थानानि प्रतिग्रहस्थानानि च परिभावनीयानि । सर्वत्राधेयभेदात् प्रतिग्रहस्थानानि, आधारभेदाच्च संक्रमस्थानानि वाच्यानि ।

॥ गुणस्थानेषु मोहनीयस्य संक्रमपतद्ग्रहसंवेधः ॥

॥ १ मिथ्यादृष्टिगुणस्थाने ॥

| संक्रमस्थानं | पतद्ग्रहस्थाने संक्रामति | संक्रमणकाल उत्कृष्टः | तत्समये सत्स्थानम् | बन्धस्थानं |
|---|---|---|---|---|
| २७ | २२ | पल्योपमासंख्येयभागः | २८ | २२ |
| २६ | ,, | ,, | २७ | ,, |
| २५ | २१ | मिश्रे उद्वलितेऽपार्धपुद्गलपरावर्त्तः | २६ | ,, |
| ,, | ,, | अप्राप्तसम्यक्त्वस्यानन्तकालः | ,, | ,, |
| २३ | २२ | १ आवलिका | २८ | ,, |

सास्वादनेऽष्टाविंशतिसत्ताकस्य पञ्चविंशतिप्रकृत्यात्मकमेकमेव चारित्रमोहसत्कं संक्रमस्थानं जघन्येन समयमेकमुत्कृष्टत आवलिकाषट्कं यावत् चतुष्प्रकारे एकविंशतिप्रतिग्रहे संक्रामति । मतान्तरेणैकविंशतिप्रकृत्यात्मकं संक्रमस्थानमेकविंशतिप्रतिग्रहे संक्रामति ।

॥ २ सास्वादनगुणस्थाने ॥

| | | | | |
|---|---|---|---|---|
| २५ | २१ | ६ आवलिका | २८ | २१ |
| २१ | २१ | ,, मतान्तरेणासौ संवेधः | २४ | ,, |

मिश्रगुणस्थाने द्वे द्वे संक्रमस्थाने प्रतिग्रहस्थाने च। तत्राष्टाविंशतिसत्ताकस्याद्यवर्जकषायद्वादशभयजुगुप्साहास्यरतियुगलारतिशोकयुगलान्यतरयुगलपुंवेदरूपसप्तदशप्रतिग्रहे दर्शनत्रिकवर्जपञ्चविंशतिप्रकृतिस्थानमन्तर्मुहूर्तं यावत् संक्रामति, यद्वोद्वलितसम्यक्त्वस्य सप्तविंशतिसत्ताकस्य पुनः प्राप्तमिश्रस्यान्तर्मुहूर्तं यावत्पञ्चविंशतिः संक्रामति। विसंयोजितानन्तानुबन्धिनश्चतुर्विंशतिसत्ताकस्य तस्मिन्नेव प्रतिग्रहे एकविंशतिः प्रकृतयोऽन्तर्मुहूर्तं यावत् संक्रामन्ति, तदेवमुक्तः संक्रमप्रतिग्रहस्थानानां त्रिषु गुणस्थानेषु संवेधः।

॥ ३ मिश्रगुणस्थाने ॥

| | | | | |
|---|---|---|---|---|
| २५ | १७ | अन्तर्मुहूर्त्तः | २८–२७ | १७ |
| २१ | ,, | ,, | २४ | ,, |

अविरतसम्यग्दृष्टौ पञ्च संक्रमस्थानानि, तद्यथा–सप्तविंशतिः, षड्विंशतिः, त्रयोविंशतिः, द्वाविंशतिः, एकविंशतिरिति, त्रीणि प्रतिग्रहस्थानानि च, तद्यथा–एकोनविंशतिः, अष्टादश, सप्तदश चेति। तत्राविरतसम्यग्दृष्टेरष्टाविंशतिसत्ताकस्यौपशमिकसम्यक्त्वलाभप्रथमसमयादारभ्यावलिकाया ऊर्ध्वं साधिकत्रयस्त्रिंशत्सागरोपमं यावत् सम्यक्त्वमोहनीयस्य प्रतिग्रहत्वेन तद्व्यतिरिक्ताः शेषाः सप्तविंशतिराद्यकषायवर्जशेषद्वादशकषायपुरुषवेदभयजुगुप्साहास्यरतियुगलारतिशोकयुगलान्यतरयुगलसम्यक्त्वमिश्रलक्षणैकोनविंशतिप्रकृतिसमुदायरूपे प्रतिग्रहे संक्रामति। अष्टाविंशतिसत्ताकस्यौपशमिकसम्यग्दृष्टेरावलिकाया अभ्यन्तरे वर्तमानस्यावलिकामात्रं यावत् मिश्रमोहनीयस्य सम्यक्त्वमोहनीयस्य च प्रतिग्रहमात्रत्वेन तच्छेषाः षड्विंशतिः प्रकृतयः तस्मिन्नेवैकोनविंशतिप्रतिग्रहे संक्रामन्ति। तथा विसंयोजितानन्तानुबन्धिनां क्षायोपशमिकदृष्टीनां चतुर्विंशतिसत्कर्मणां सम्यक्त्वमोहनीयस्य पतद्ग्रहमात्रत्वेन तद्वर्जाः शेषास्त्रयोविंशतिः प्रकृतयः साधिकत्रयस्त्रिंशत्सागरोपमं यावत् तस्मिन्नेवैकोनविंशतिपतद्ग्रहे संक्रामन्ति। क्षपितानन्तानुबन्धिनो मिथ्यात्वमोहनीयक्षीणे त्रयोविंशतिसत्ताकस्य वेदकसम्यग्दृष्टेर्मिश्रमोहनीयस्य पतद्ग्रहाभावात् तद्वर्जशेषाष्टादशप्रकृत्यात्मके प्रतिग्रहे द्वाविंशतिः प्रकृतयः संक्रामन्ति, ताश्चान्तर्मुहूर्तं यावत्। ततो मिश्रमोहनीये क्षपिते द्वाविंशतिसत्ताकस्य वेदकसम्यग्दृष्टेरन्तर्मुहूर्तं यावत् सम्यक्त्वमोहनीयस्यापि पतद्ग्रहाभावेन तच्छेषसप्तदशप्रकृत्यात्मके प्रतिग्रहे एकविंशतिः प्रकृतयश्चारित्रमोहनीयसत्काः संक्रामन्ति। यद्वैकविंशतिसत्ताकस्य क्षायिकसम्यग्दृष्टेः साधिकत्रयस्त्रिंशत्सागरोपमं यावत् प्रागुक्ते एव सप्तदशप्रकृत्यात्मके पतद्ग्रहे एकविंशतिः प्रकृतयश्चारित्रमोहनीयसत्काः संक्रामन्ति, तदेवं तुर्यगुणस्थाने संक्रमप्रतिग्रहस्थानानां संवेध उक्तः।

## ॥ ४ अविरतसम्यग्दृष्टिगुणस्थाने ॥

| सं० | पत० | कालः | स्वामिनः | सत् | बन्धः |
|---|---|---|---|---|---|
| २७ | १९ | अन्तर्मु० साधिक ३३ सागराश्च | उपशमक्षयोपशमस० दृष्टी | २८ | १७ |
| २६ | ,, | १ आवलिका | उपशमदृष्टिः | ,, | ,, |
| २३ | ,, | साधिक ३३ सागराः | विसंयोजितानन्तानुबन्धिकक्षयोपशमदृष्टिः | २४ | ,, |
| २२ | १८ | अन्तर्मुहूर्त्तः | क्षीणमिथ्यात्वसंयोजनः | २३ | ,, |
| २१ | १७ | ,, | क्षीणमिथ्यात्वमिश्रसंयोजनः | २२ | ,, |
| ,, | ,, | साधिक ३३ सागराः | क्षायिकदृष्टिः | २१ | ,, |

अथ देशविरतस्य संक्रमप्रतिग्रहस्थानानां संवेध उच्यते–तत्राष्टाविंशतिसत्ताकस्य देशविरतस्यौपशमिकसम्यक्त्वलाभप्रथमसमयादारभ्यावलिकायाः परतो देशोनपूर्वकोटीं यावत् मिथ्यात्वमिश्रयोः सम्यक्त्वमोहनीयं प्रतिग्रहत्वे कृतमपनीय शेषाः सप्तविंशतिप्रकृतयः प्रत्याख्यानसंज्वलनकषायाष्टकपुंवेदभयजुगुप्साहास्यरतियुगलारतिशोकयुगलान्यतरयुगलसम्यक्त्वमिश्ररूपे पञ्चदशप्रकृत्यात्मके प्रतिग्रहे संक्रामन्ति । अष्टाविंशतिसत्ताकस्य देशविरतस्य प्राप्तौपशमिकसम्यग्दृष्टेरावलिकाया अभ्यन्तरे वर्तमानस्यावलिकामात्रं यावत् मिश्रमोहनीयस्य, सम्यक्त्वमोहनीयस्य च पतद्ग्रहत्वेन तद्वर्जाः शेषाः षड्विंशतिप्रकृतयस्तस्मिन्नेव पञ्चदशप्रकृतिरूपे संक्रामन्ति । तथा विसंयोजितानन्तानुबन्धिनां वेदकसम्यग्दृष्टीनां चतुर्विंशतिसत्ताकानां देशविरतानां सम्यक्त्वमोहनीयं प्रतिग्रहत्वे कृतं तद्विहाय शेषाः त्रयोविंशतिः प्रकृतयः देशोनपूर्वकोटिं यावत् पञ्चदशप्रकृत्यात्मके प्रतिग्रहे संक्रामन्ति । तथा क्षपितानन्तानुबन्धिनो मिथ्यात्वमोहनीये क्षपिते त्रयोविंशतिसत्ताकस्य वेदकसम्यग्दृष्टेर्देशविरतस्य संक्रम्यमाणदलाभावेन मिश्रमोहनीयस्य प्रतिग्रहाभावात् तद्विहाय शेषचतुर्दशप्रकृत्यात्मके प्रतिग्रहेऽन्तर्मुहूर्तं यावत् द्वाविंशतिः प्रकृतयः संक्रामन्ति। ततो मिश्रमोहनीये क्षपिते द्वाविंशतिसत्ताकस्य वेदकसम्यग्दृष्टेर्देशविरतस्य सम्यक्त्वमोहस्यापि प्रतिग्रहाभावेन तच्छेषत्रयोदशप्रकृत्यात्मकप्रतिग्रहेऽन्तर्मुहूर्तं यावदेकविंशतिः प्रकृतयश्चारित्रमोहसत्काः संक्रामन्ति । यद्वैकविंशतिसत्ताकस्य क्षायिकसम्यग्दृष्टेर्देशविरतस्य देशोनपूर्वकोटिं यावत् प्रागुक्ते एव त्रयोदशप्रकृत्यात्मके एकविंशतिप्रकृतयः संक्रामन्ति । तदेवमुक्तो देशविरतस्य संक्रमप्रतिग्रहस्थानानां संवेधः ।

## ॥ ५ देशविरतगुणस्थाने ॥

| सं० | पत० | कालः | स्वामिनः | सत् | बन्धः |
|---|---|---|---|---|---|
| २७ | १५ | अन्तर्मु० देशोनपूर्वकोटिंयावच्च | उपशमक्षयोपशमदृष्टी | २८ | १३ |
| २६ | ,, | १ आवलिका | उपशमदृष्टिः | ,, | ,, |
| २३ | ,, | देशोनपूर्वको० | विसंयो० संयोजनक्षयोप० दृष्टिः | २४ | ,, |

| | | | | | |
|---|---|---|---|---|---|
| २२ | १४ | अन्तर्मुहूर्तः | क्षीणमिथ्यात्वसंयोजनवेदकदृष्टिः | २३ | ,, |
| २१ | १३ | ,, | क्षीणमिथ्यात्वमिश्रसं० वेदकदृष्टिः | २२ | ,, |
| ,, | ,, | देशोनपूर्वको० | क्षायिकदृष्टिः | २१ | ,, |

अथ प्रमत्तस्य संवेध उच्यते—तत्राष्टाविंशतिसत्ताकस्य प्रमत्तसंयतस्यौपशमिकसम्यक्त्वलाभप्रथमसमयादारभ्यावलिकायाः परतोऽन्तर्मुहूर्तं यावत्, मतान्तरेण देशोनपूर्वकोटीं यावत्, सम्यक्त्वमोहनीयस्य प्रतिग्रहत्वेन तद्वर्जाः शेषाः सप्तविंशतिः प्रकृतयः संज्वलनचतुष्टयपुंवेदभयजुगुप्साहास्यरतियुगलारतिशोकयुगलान्यतरयुगलसम्यक्त्वमोहनीयमिश्रमोहनीयरूपैकादशप्रकृत्यात्मके प्रतिग्रहे संक्रामन्ति । अष्टाविंशतिसत्ताकस्यौपशमिकसम्यग्दृष्टेः प्रमत्तसंयतस्यावलिकाया अभ्यन्तरे वर्तमानस्यावलिकामात्रं यावत् मिश्रमोहनीयस्य, सम्यक्त्वमोहनीयस्य च प्रतिग्रहत्वेन तद्वर्जाः शेषाः षड्विंशतिः प्रकृतयः तस्मिन्नेवैकादशप्रकृत्यात्मके पतद्ग्रहे संक्रामन्ति । तथा विसंयोजितानन्तानुबन्धिनः क्षायोपशमिकसम्यग्दृष्टेश्चतुर्विंशतिसत्ताकस्य प्रमत्तयतेः सम्यक्त्वमोहस्य प्रतिग्रहत्वेन तद्वर्जाः शेषाः त्रयोविंशतिः प्रकृतयोऽन्तर्मुहूर्तं यावत्, मतान्तरेण देशोनपूर्वकोटिं यावत्, तस्मिन्नेवैकादशप्रतिग्रहे संक्रामन्ति । क्षपितानन्तानुबन्धिनो मिथ्यात्वमोहनीये क्षपिते त्रयोविंशतिसत्ताकस्य वेदकसम्यग्दृष्टेः प्रमत्तयतेर्मिश्रमोहस्य प्रतिग्रहाभावात् तद्वर्जशेषदशप्रकृत्यात्मके प्रतिग्रहेऽन्तर्मुहूर्तं यावत् द्वाविंशतिः प्रकृतयः संक्रामन्ति । ततो मिश्रमोहनीये क्षपिते द्वाविंशतिसत्ताकस्य वेदकसम्यग्दृष्टेः प्रमत्तसंयतस्य सम्यक्त्वमोहनीयस्यापि पतद्ग्रहाभावेन तच्छेषे नवप्रकृत्यात्मके प्रतिग्रहेऽन्तर्मुहूर्तं यावदेकविंशतिः प्रकृतयः संक्रामन्ति । यद्वैकविंशतिसत्ताकस्य क्षायिकसम्यग्दृष्टेः प्रमत्तसंयतस्यान्तर्मुहूर्तं, मतान्तरेण देशोनपूर्वकोटिं यावत्, प्रागुक्ते एव नवप्रकृत्यात्मके प्रतिग्रहे एकविंशतिः प्रकृतयः संक्रामन्ति । तदेवमुक्तः प्रमत्तयतेः संक्रमप्रतिग्रहस्थानानां संवेधः । अप्रमत्तयतेरप्येवमेवान्यूनानतिरिक्तः संक्रमप्रतिग्रहस्थानानां संवेधो वाच्यः । नवरं प्रतिग्रहे हास्यरतिरूपमेव युगलं बोध्यम्, शोकारत्योः बन्धव्यवच्छेदात्, मतान्तरोऽप्यत्र न वाच्यः । अप्रमत्तगुणस्थाने तु देशोनपूर्वकोटिकालवर्जं सर्वं प्रमत्तवज्ज्ञेयम् ।

॥ ६ प्रमत्तगुणस्थाने ॥

| सं० | पत० | कालः | स्वामिनः | सत् | बन्धः |
|---|---|---|---|---|---|
| २७ | ११ | अन्तर्मुहूर्त, देशोनपूर्वकोटिर्वा | उपशमदृष्टिर्वेदकदृष्टिर्वा. | २८ | ९ |
| २६ | ,, | आवलिका | उपशमदृष्टिः | २८ | ,, |
| २३ | ,, | अन्तर्मुहूर्त देशोनपूर्वकोटिर्वा | विसंयोजितसंयोजनो वेदकदृष्टिः | २४ | ,, |
| २२ | १० | अन्तर्मुहूर्तम् | क्षीणमिथ्यात्वसंयोजनो वेदकदृष्टिः | २३ | ,, |
| २१ | ९ | ,, | क्षीणमिथ्यात्वमिश्रसं० वेदकदृष्टिः | २२ | ,, |
| ,, | ,, | अन्तर्मुहूर्त देशोनपूर्वकोटिर्वा | क्षीणमिश्रवेदकक्षायिकदृष्टी | २१ | ,, |

अपूर्वकरणे चतुर्विंशतिसत्कर्मणां मतान्तरेणाष्टाविंशतिसत्कर्मणामुपशमसम्यग्दृष्टीनां सम्यक्त्वमोहनीयस्य प्रतिग्रहमात्रत्वेनानन्तानुबन्धिनां चोपशान्तत्वेन विसंयोजितत्वेन वा तद्वर्जाः शेषास्त्रयोविंशतिः प्रकृतयोऽन्तर्मुहूर्तं यावत् संज्वलनचतुष्टयपुंवेदभयजुगुप्साहास्यरतियुगलसम्यक्त्वमिश्ररूपे एकादशप्रकृत्यात्मके प्रतिग्रहे संक्रामन्ति । एकविंशतिसत्ताकस्य क्षायिकसम्यग्दृष्टेर्दृष्टिद्विकवर्जनवप्रकृतिरूपे प्रतिग्रहेऽन्तर्मुहूर्तं यावत् एकविंशतिः प्रकृतयः संक्रामन्ति । उक्तोऽपूर्वकरणे संक्रमप्रतिग्रहस्थानानां संवेधः ।

॥ ८ अपूर्वकरणगुणस्थाने ॥

| सं० | पत० | कालः | स्वामिनः | सत् | बन्धः |
|---|---|---|---|---|---|
| २३ | ११ | अन्तर्मुहूर्त्तम् | उपशमदृष्टिः | २४–२८ | ९ |
| २१ | ९ | ,, | क्षायिकदृष्टिः | २१ | ,, |

नवमगुणस्थाने सप्तकप्रतिग्रहे त्रयोविंशतिद्वाविंशत्येकविंशतिविंशतिरूपाश्चत्वारः संक्रमाः संक्रामन्ति । षट्कप्रतिग्रहे विंशतिचतुर्दशत्रयोदशरूपास्त्रयः संक्रमाः संक्रामन्ति । पञ्चकप्रतिग्रहे एकविंशतिविंशत्येकोनविंशत्यष्टादशत्रयोदशद्वादशैकादशदशरूपा अष्टौ संक्रमाः संक्रामन्ति । चतुष्कप्रतिग्रहेऽष्टादशद्वादशैकादशदशाष्टसप्तचतुष्प्रकृतिरूपाः सप्त संक्रमाः संक्रामन्ति । त्रिकप्रतिग्रहे एकादशनवाष्टसप्तपञ्चचतुस्त्रिरूपाः सप्त संक्रमाः संक्रामन्ति । द्विकप्रतिग्रहे अष्टषट्पञ्चद्विरूपाश्चत्वारः संक्रमाः संक्रामन्ति । एकप्रतिग्रहे पञ्चत्रिद्व्येकरूपाश्चत्वारः संक्रमाः संक्रामन्ति । एतेषां श्रेणिद्वयमाश्रित्य भावना क्रियते, तत्र पूर्वमौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य संक्रमप्रतिग्रहस्थानानां संवेधविधिरुच्यते–तत्र सम्यक्त्वस्य मिथ्यात्वमिश्रयोः प्रतिग्रहत्वेन तद्वर्जाः शेषास्त्रयोविंशतिः प्रकृतयश्चतुर्विंशतिसत्कर्मणां पुंवेदसंज्वलनचतुष्टयमिश्रसम्यक्त्वलक्षणे सप्तकरूपे प्रतिग्रहेऽन्तर्मुहूर्तं यावत् संक्रामन्ति । अन्तरकरणे च कृते संज्वलनलोभस्य संक्रमाभावेन तच्छेषा द्वाविंशतिः प्रकृतयः पूर्वोक्ते सप्तप्रकृत्यात्मके प्रतिग्रहेऽन्तर्मुहूर्तं यावत् संक्रामन्ति । ततो नपुंसकवेदे उपशान्ते एकविंशतिः प्रकृतयः तस्मिन्नेव सप्तप्रकृत्यात्मके प्रतिग्रहेऽन्तर्मुहूर्तं यावत् संक्रामन्ति । स्त्रीवेदे चोपशान्ते विंशतिः प्रकृतयोऽन्तर्मुहूर्तं यावत्तत्रैव संक्रामन्ति । ततः पुंवेदस्य समयोनावलिकाद्विकशेषायां प्रथमस्थितौ "दुसु तिसु आवलियासु" इति वचनप्रामाण्यात् प्रतिग्रहाभावेन तद्व्यतिरिक्ताः संज्वलनचतुष्टयसम्यक्त्वमिश्ररूपषट्कप्रतिग्रहे समयोनावलिकाद्विकं यावत् प्रागुक्ता विंशतिः प्रकृतयः संक्रामन्ति । ततः षट्सु नोकषायेषूपशान्तेषु समयोनावलिकाद्विकं यावच्चतुर्दश प्रकृतयः प्रागुक्ते एव षट्प्रकृत्यात्मके प्रतिग्रहे संक्रामन्ति । ततः पुंवेदे उपशान्ते शेषास्त्रयोदश प्रकृतयोऽन्तर्मुहूर्तं यावत् षट्कप्रतिग्रहे एव संक्रामन्ति । ततः संज्वलनक्रोधस्य समयोनावलिकात्रिकशेषायां प्रथमस्थितौ प्रतिग्रहता न भवतीति प्रागुक्तषट्कात् तदपनीते शेषे पञ्चप्रकृत्यात्मके प्रतिग्रहे समयोनावलिकाद्विकं यावत् ता एव त्रयोदश प्रकृतयः संक्रामन्ति । ततोऽप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विके

उपशान्ते समयोनावलिकाद्विकं यावत्तस्मिन्नेव पञ्चकप्रतिग्रहे एकादश प्रकृतयः संक्रामन्ति। ततः संज्वलनक्रोधे उपशान्तेऽन्तर्मुहूर्तं यावत् पञ्चकप्रतिग्रहे दश प्रकृतयः संक्रामन्ति। ततः समयोनावलिकात्रिकशेषायां प्रथमस्थितौ संज्वलनमानस्यापि प्रतिग्रहता न भवतीति तदपनीते शेषचतुष्प्रकृत्यात्मके प्रतिग्रहे समयोनावलिकाद्विकं यावत् ता एव दश प्रकृतयः संक्रामन्ति। ततोऽप्रत्याख्यानप्रत्याख्यानावरणमानद्विके उपशान्ते समयोनावलिकाद्विकं यावदष्टौ प्रकृतयस्तस्मिन्नेव चतुष्कप्रतिग्रहे संक्रामन्ति। ततः संज्वलनमाने उपशान्ते अन्तर्मुहूर्तं यावच्चतुष्कप्रतिग्रह एव सप्त प्रकृतयः संक्रामन्ति। ततः संज्वलनमायायाः समयोनावलिकात्रिकशेषायां प्रतिग्रहता न भवतीति तदपनीते शेषत्रिकप्रकृत्यात्मके प्रतिग्रहे ता एव सप्त प्रकृतयः समयोनावलिकाद्विकं यावत् संक्रामन्ति। ततोऽप्रत्याख्यानप्रत्याख्यानावरणमायाद्विके उपशान्ते समयोनावलिकाद्विकं यावत् तस्मिन्नेव त्रिकप्रतिग्रहे पञ्च प्रकृतयः संक्रामन्ति। ततः संज्वलनमायायामुपशान्तायामन्तर्मुहूर्तं यावच्चतस्रः प्रकृतयः त्रिकप्रतिग्रहे संक्रामन्ति। किट्टीकरणाद्धायाः समयोनावलिकात्रिकशेषायां संज्वलनलोभस्याप्रतिग्रहे सति समयोनावलिकाद्विकं मध्यमलोभौ न संक्रामतोऽतः यावन्मिथ्यात्वमिश्ररूपं प्रकृतिद्वयमेव दर्शनद्विके संक्रामति, तदुक्तं—"किट्टीकरणाद्धायां समयोनावलिकात्रिकशेषायामप्रत्याख्यानप्रत्याख्यानावरणलोभदलिकं संज्वलनलोभे न संक्रमयति, तदानीं तस्य पतद्ग्रहतानिवृत्तेः" इति, ततोऽनिवृत्तिकरणचरमसमयेऽप्रत्याख्यानप्रत्याख्यानावरणलोभद्विके उपशान्ते। सूक्ष्मसम्पराये, उपशान्तमोहे च मिथ्यात्वं मिश्रसम्यक्त्वयोः, मिश्रं च सम्यक्त्वे संक्रामतीति द्विकरूपे प्रतिग्रहे द्वे प्रकृती संक्रामत इति प्रतिपादयिष्यामः। सर्वत्रौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां सत्स्थानं चतुर्विंशतिप्रकृत्यात्मकं मतान्तरेणाष्टाविंशतिप्रकृत्यात्मकं बोध्यमिति।

९ मे उपशमोपशमकानाम् ( उपशमसम्यग्दृष्टेरुपशमश्रेण्यामित्यग्रेऽपि उपशमोपशमकसंज्ञा )

| सं० | पत० | कालः | सत् | बन्धः | सं० | पत० | कालः | सत् | बन्धः |
|---|---|---|---|---|---|---|---|---|---|
| २३ | ७ | अन्तर्मुहूर्त्तः | २४–२८ | ५ | १३ | ५ | समयोनावलिकाद्विकः | २४–२८ | ३ |
| २२ | ,, | ,, | ,, | ,, | ११ | ,, | ,, | ,, | ,, |
| २१ | ,, | ,, | ,, | ,, | १० | ,, | अन्तर्मुहूर्त्तः | ,, | ,, |
| २० | ,, | ,, | ,, | ,, | ,, | ४ | समयोनावलिकाद्विकः | ,, | २ |
| ,, | ६ | समयोनावलिकाद्विकः | ,, | ४ | ८ | ,, | ,, | ,, | ,, |
| १४ | ,, | ,, | ,, | ,, | ७ | ,, | अन्तर्मुहूर्त्तः | ,, | ,, |
| १३ | ,, | अन्तर्मुहूर्त्तः | ,, | ,, | ,, | ३ | समयोनावलिकाद्विकः | ,, | १ |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ५ | ३ | ,, | २४-२८ | १ | २ | २ | समयोनावलिकाद्विकः | २४-२८ | १ |
| ४ | २ | अन्तर्मुहूर्त्तः | ,, | ,, | | | | | |

अथ क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां संक्रमप्रतिग्रहस्थानानां संवेधविधिरुच्यते—अत्र सर्वत्रैकविंशतिप्रकृत्यात्मकं सत्स्थानं वाच्यम्। यानि च बन्धस्थानानि तान्येव प्रतिग्रहस्थानान्यपि वाच्यानि । तत्रैकविंशतिसत्कर्माणः पुंवेदसंज्वलनचतुष्टयरूपे पञ्चकप्रतिग्रहे एकविंशतिः प्रकृतयोऽन्तर्मुहूर्त्तं यावत् संक्रामन्ति । अन्तरकरणे च कृते संज्वलनलोभस्य संक्रमो न भवतीति तदपनीते शेषा विंशतिः प्रकृतयः तस्मिन्नेव पञ्चकप्रतिग्रहे संक्रामन्ति, ताश्चान्तर्मुहूर्तं यावत्। ततो नपुंसकवेदे उपशान्तेऽन्र्मुहूर्तं यावत् प्रागुक्ते एव पञ्चकप्रतिग्रहे एकोनविंशतिः प्रकृतयः संक्रामन्ति । स्त्रीवेदे चोपशान्तेऽन्तर्मुहूर्तं यावदष्टादश प्रकृतयः पञ्चकप्रतिग्रहे संक्रामन्ति। ततः पुंवेदस्य समयोनावलिकाद्विकशेषायां प्रथमस्थितौ प्रतिग्रहता न भवतीति तदपनीते शेषे चतुष्करूपे प्रतिग्रहे समयोनावलिकाद्विकं यावदष्टादश प्रकृतयः संक्रामन्ति । ततो नोकषायषट्के चोपशान्ते शेषा द्वादश प्रकृतयः समयोनावलिकाद्विकं यावच्चतुष्कप्रतिग्रहे एव संक्रामन्ति। ततः पुंवेदे उपशान्तेऽन्तर्मुहूर्तं कालं यावत् चतुष्कप्रतिग्रहे एकादश प्रकृतयः संक्रामन्ति । ततः संज्वलनक्रोधस्य समयोनावलिकात्रिकशेषायां प्रथमस्थितौ प्रतिग्रहता न भवतीति तदपनीते मानमायालोभरूपे त्रिकप्रतिग्रहे समयोनावलिकाद्विकं यावदेकादश प्रकृतयः संक्रामन्ति । ततोऽप्रत्याख्यानप्रत्याख्यानावरणक्रोधद्विके उपशान्ते शेषा नव प्रकृतयः समयोनावलिकाद्विकं यावत् तस्मिन्नेव त्रिकप्रतिग्रहे संक्रामन्ति । ततः संज्वलनक्रोधे उपशान्तेऽष्टौ प्रकृतयोऽन्तर्मुहूर्त्तं यावत् तस्मिन्नेव प्रतिग्रहे संक्रामन्ति । ततः संज्वलनमानस्य समयोनावलिकात्रिकशेषायां प्रथमस्थितौ प्रतिग्रहता न भवतीति तदपनयने शेषे मायालोभरूपे द्विकप्रतिग्रहे ता एवाष्टौ प्रकृतयः समयोनावलिकाद्विकं यावत् संक्रामन्ति। ततोऽप्रत्याख्यानप्रत्याख्यानावरणमानद्विके उपशान्ते शेषाः षट् प्रकृतयः समयोनावलिकाद्विकं यावत् तस्मिन्नेव द्विकरूपे प्रतिग्रहे संक्रामन्ति । ततः संज्वलनमाने उपशान्ते पञ्च प्रकृतयः द्विकप्रतिग्रहेऽन्तर्मुहूर्त्तं यावत् संक्रामन्ति। ततः संज्वलनमायायाः प्रथमस्थितौ समयोनावलिकात्रिकशेषायां प्रतिग्रहता न भवतीति तदपनीते शेषे संज्वलनलोभरूपे प्रतिग्रहे प्रागुक्ता एव पञ्च प्रकृतयः समयोनावलिकाद्विकं यावत् संक्रामन्ति । ततोऽप्रत्याख्यानप्रत्याख्यानावरणमायाद्विके उपशान्ते समयोनावलिकाद्विकं यावत् तिस्रः प्रकृतयः संज्वलनलोभरूपे प्रतिग्रहे संक्रामन्ति । ततः संज्वलनमायायामुपशान्तायां मध्यमलोभद्विकमन्तर्मुहूर्तं यावत् संज्वलनलोभे संक्रामति । ततोऽनिवृत्तिबादरसम्परायचरमसमये मध्यमलोभद्विकमप्युपशान्तं । ततः सूक्ष्मसम्परायादौ संक्रमप्रतिग्रहाभावः । तदेवं क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां संक्रमप्रतिग्रहस्थानानां संवेधविधिरुक्तः ।

॥ ९ मे *क्षायिकोपशमकानाम् ॥

| सं० | पत० | कालः | सत् | बन्धः | सं० | पत० | कालः | सत् | बन्धः |
|---|---|---|---|---|---|---|---|---|---|
| २१ | ५ | अन्तर्मुहूर्त्तः | २१ | ५ | ९ | ३ | समयोनावलिकाद्विकः | २१ | ३ |
| २० | ,, | ,, | ,, | ,, | ८ | ,, | अन्तर्मुहूर्त्तः | ,, | ,, |
| १९ | ,, | ,, | ,, | ,, | ,, | २ | समयोनावलिकाद्विकः | ,, | २ |
| १८ | ,, | ,, | ,, | ,, | ६ | ,, | ,, | ,, | ,, |
| ,, | ४ | समयोनावलिकाद्विकः | ,, | ४ | ५ | ,, | अन्तर्मुहूर्त्तः | ,, | ,, |
| १२ | ,, | ,, | ,, | ,, | ,, | १ | समयोनावलिकाद्विकः | ,, | १ |
| ११ | ,, | अन्तर्मुहूर्त्तः | ,, | ,, | ३ | ,, | ,, | ,, | ,, |
| ,, | ३ | समयोनावलिकाद्विकः | ,, | ३ | २ | ,, | अन्तर्मुहूर्त्तः | ,, | ,, |

साम्प्रतं क्षपकश्रेण्यां संक्रमप्रतिग्रहस्थानानां संवेधविधिरुच्यते—तत्रैकविंशतिसत्ताकस्य क्षायिकसम्यग्दृष्टेः पुंवेदसंज्वलनचतुष्टयरूपे पञ्चकप्रतिग्रहेऽन्तर्मुहूर्तं यावदेकविंशतिः प्रकृतयः संक्रामन्ति। ततोऽप्रत्याख्यानप्रत्याख्यानकषायाष्टके क्षीणे त्रयोदशसत्ताकस्यान्तर्मुहूर्त्तं यावत् त्रयोदश प्रकृतयः पञ्चकप्रतिग्रहे संक्रामन्ति। ततस्त्रयोदशसत्ताकस्यैव त्रयोदशप्रकृतीनामन्तरकरणे कृते संज्वलनलोभस्य संक्रमाभावेन तद्वर्जा द्वादश प्रकृतयः तस्मिन्नेव पञ्चकप्रतिग्रहेऽन्तर्मुहूर्तं यावत् संक्रामन्ति। ततो नपुंसकवेदे क्षीणे द्वादशसत्ताकस्याऽन्तर्मुहूर्तं यावत् एकादश प्रकृतयः तस्मिन्नेव पञ्चकप्रतिग्रहे संक्रामन्ति। ततः स्त्रीवेदे क्षपिते एकादशसत्ताकस्यान्तर्मुहूर्तं यावत् पञ्चकप्रतिग्रहे दश प्रकृतयः संक्रामन्ति। तत एकादशसत्ताकस्यैव समयोनावलिकाद्विकशेषायां प्रथमस्थितौ पुंवेदस्य प्रतिग्रहाभावेन संज्वलनचतुष्टयरूपे प्रतिग्रहे समयोनावलिकाद्विकं यावत्पूर्वोक्ता एव दश प्रकृतयः संक्रामन्ति। ततो हास्यादिषट्के क्षपिते पञ्चसत्ताकस्य समयोनावलिकाद्विकं यावच्चतुष्कप्रतिग्रहे चतसृणां प्रकृतीनां संक्रमो भवति। ततः पुंवेदः क्षीयते, तस्मिन्नेव समये संज्वलनक्रोधः पतद्ग्रहो न भवतीति तदपनीते त्रिकप्रतिग्रहे चतुःसत्ताकस्यान्तर्मुहूर्तं यावत् तिसृणां संक्रमो भवति, तदुक्तं पञ्चसंग्रहमूलवृत्तौ—"ततः पुरुषवेदे क्षपिते तत्कालमेव क्रोधस्य प्रतिग्रहत्वे नष्टे चतुर्बन्धकोऽन्तर्मुहूर्तं त्रिकसंक्रमं त्रिकप्रतिग्रहे संक्रमयति" इति। ततः समयोनावलिकाद्विकेन कालेन संज्वलनक्रोधः क्षीयते, तत्समये च संज्वलन-

* क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यामित्यत्रेऽपि क्षायिकोपशमकसंज्ञा।

मानोऽपि पतद्ग्रही न भवतीति तदपसारणे मायालोभरूपे द्विप्रकृत्यात्मके प्रतिग्रहे त्रिकसत्ताकस्यान्तर्मुहूर्तं यावत् द्वयोः प्रकृत्योः संक्रमो भवति । ततः समयोनावलिकाद्विकेन कालेन संज्वलनमानोपि क्षीयते, तत्समये च संज्वलनमायायाः प्रतिग्रहता नश्यति, ततो द्विकसत्ताकस्य संज्वलनलोभरूपे प्रतिग्रहेऽन्तर्मुहूर्त्तं यावत्संज्वलनमायाया एव संक्रमो भवति । ततः समयोनावलिकाद्विकेन कालेन संज्वलनमायापि क्षीयते । तत ऊर्ध्वं न किमपि क्वापि संक्रामति । तदेवं संक्रमप्रतिग्रहस्थानानां संवेधो भावितः क्षपकश्रेण्यामिति ।

॥ ९ मे ( क्षपकश्रेण्याम् ) ॥

| सं० | पत० | कालः | सत् | बन्धः | सं० | पत० | कालः | सत् | बन्धः |
|---|---|---|---|---|---|---|---|---|---|
| २१ | ५ | अन्तर्मुहूर्तः | २१ | ५ | १० | ४ | समयोनावलिकाद्विकः | ११ | ४ |
| १३ | ,, | ,, | १३ | ,, | ४ | ,, | ,, | ५ | ,, |
| १२ | ,, | ,, | ,, | ,, | ३ | ३ | अन्तर्मुहूर्तः | ४ | ३ |
| ११ | ,, | ,, | १२ | ,, | २ | २ | ,, | ३ | २ |
| १० | ,, | ,, | ११ | ,, | १ | १ | ,, | २ | १ |

तदेवमुक्तो नवमगुणस्थाने संक्रमप्रतिग्रहस्थानानां संवेधविधिः । अथ सूक्ष्मसम्पराये-उपशान्तमोहे च युगपत्-संवेधो भण्यते

संक्रमप्रतिग्रहस्थानानां तत्रौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यामष्टाविंशतिसत्ताकस्य चतुर्विंशतिसत्ताकस्य वा मिथ्यात्वस्य मिश्रसम्यक्त्वरूपं प्रकृतिद्वयं, मिश्रस्य च सम्यक्त्वं प्रतिग्रहो भवतीति द्विप्रकृत्यात्मके प्रतिग्रहे द्वे प्रकृती संक्रामतः । ते च गुणस्थानद्वयकाल प्रमाणं यावदिति ।

॥ १०-११ गुणस्थानयोः ( उपशमोपशमकानाम् ) ॥

| | | | | |
|---|---|---|---|---|
| २ | २ | अन्तर्मुहूर्तः | २८-२४ | ० |

उपरितनेषु क्षीणमोहत्वादेव संक्रमस्थानं प्रतिग्रहस्थानं च न भवति, तथा च १२-१३-१४ गुणस्थानेषु, क्षपकस्य दशमे च संक्रमपतद्ग्रहाभावः । तदेवं गुणस्थानेषु मोहनीयस्य संक्रमप्रतिग्रहस्थानानां संवेध उक्त इति ॥

साम्प्रतं प्रसङ्गतः कस्मिन् प्रतिग्रहे के संक्रमा मोहनीयस्य संक्रामन्तीति प्रतिग्रहेषु सङ्कलना प्रोच्यते-द्वाविंशतौ, एकोनविंशतौ, पञ्चदशके, एकादशके च प्रतिग्रहे सप्तविंश-

तिषड्विंशत्योः संक्रमो भवति, तत्र मिथ्यादृष्टेः द्वाविंशतौ, एकोनविंशतौ अविरतसम्यग्दृष्टेः, पञ्चदशके देशविरतस्य, एकादशके प्रमत्ताप्रमत्तयोश्च । मिथ्यादृष्टेः सास्वादनस्य चैकविंशतौ, मिश्रस्य च सप्तदशके पञ्चविंशतिः प्रकृतयः संक्रामन्ति । इदं च संक्रमस्थानं नियमेन चतुर्षु गतिषु भवति । तत्रोद्वलितमिश्रसम्यक्त्वस्य मिथ्यादृष्टेः, अनादिमिथ्यादृष्टेर्वा सास्वादनमिश्रयोश्च भवतीत्यवसेयम् । द्वाविंशत्येकोनविंशतिपञ्चदशैकादशसप्तकरूपेषु पञ्चसु प्रतिग्रहेषु त्रयोविंशतिः प्रकृतयः संक्रामन्ति, तत्र मिथ्यादृष्टेर्द्वाविंशतौ, अविरतसम्यग्दृष्टेरेकोनविंशतौ, देशविरतस्य पञ्चदशके, प्रमत्ताप्रमत्तापूर्वकरणानां एकादशके, औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य सप्तकप्रतिग्रहे त्रयोविंशतिप्रकृतीनां संक्रमो भवतीति । एतानि च पञ्च प्रतिग्रहस्थानानि पञ्चेन्द्रियेष्वेव भवन्ति, नान्यत्रेति । द्वाविंशतिसंक्रमस्थानमष्टादशचतुर्दशदशसप्तकरूपेषु चतुर्षु प्रतिग्रहेषु संक्रामति, तत्राष्टादशप्रकृत्यात्मके प्रतिग्रहेऽविरतसम्यग्दृष्टेः, देशविरतस्य चतुर्दशप्रकृत्यात्मके प्रतिग्रहे, प्रमत्ताप्रमत्तयोः दशप्रकृत्यात्मके प्रतिग्रहे, औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य च सप्तप्रकृत्यात्मके प्रतिग्रहे द्वाविंशतिप्रकृतीनां संक्रमो भवति। अयं च संक्रमस्थानं मनुष्यगतावेव सम्यक्त्वमिश्रयोः सतोरेव भवतीति । सप्तदशकत्रयोदशकनवकसप्तकपञ्चकरूपेषु पञ्चसु प्रतिग्रहेष्वेकविंशतेः संक्रमो भवति । तत्राविरतसम्यग्दृष्टेः सप्तदशप्रकृत्यात्मके प्रतिग्रहे, देशविरतस्य त्रयोदशप्रकृत्यात्मके प्रतिग्रहे, प्रमत्ताप्रमत्तापूर्वकरणानां नवप्रकृत्यात्मके प्रतिग्रहे, औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्त्तमानस्य सप्तप्रकृत्यात्मके प्रतिग्रहे, क्षायिकसम्यग्दृष्टेश्चोभयश्रेण्यां वर्त्तमानस्य पञ्चप्रकृत्यात्मके प्रतिग्रहे एकविंशतिः प्रकृतयः संक्रामन्ति, केषाञ्चिन्मतेन सास्वादनस्यैकविंशतिप्रतिग्रहे एकविंशतिः प्रकृतयः संक्रामन्ति । शेषाणि संक्रमस्थानानि श्रेण्यामेव भवन्ति । तत्र विंशतेः सप्तकषट्कपञ्चकरूपे प्रतिग्रहत्रिके संक्रमो भवति, तत्रौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य सप्तके षट्के च, क्षायिकसम्यग्दृष्टेश्चोपशमश्रेण्यां वर्तमानस्य पञ्चकप्रतिग्रहे विंशतेः संक्रमो भवति । तथा क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य पञ्चकप्रतिग्रहे एकोनविंशतेः संक्रमो भवति । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्याष्टादश प्रकृतयः पञ्चके, चतुष्के च प्रतिग्रहे संक्रामन्ति । औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य षट्कप्रतिग्रहे चतुर्दश प्रकृतयः संक्रामन्ति । तथौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य षट्कप्रतिग्रहे, क्षपकश्रेण्यां च पञ्चकप्रतिग्रहे त्रयोदश प्रकृतयः संक्रामन्ति । तथा क्षपकश्रेण्यां पञ्चकप्रतिग्रहे, क्षायिकसम्यग्दृष्टेश्चोपशमश्रेण्यां वर्तमानस्य चतुष्कप्रतिग्रहे द्वादश प्रकृतयः संक्रामन्ति । तथौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां, क्षपकश्रेण्याञ्च वर्तमानस्य पञ्चकप्रतिग्रहे, क्षायिकसम्यग्दृष्टेश्चोपशमश्रेण्यां वर्तमानस्य चतुष्के त्रिके च प्रतिग्रहे एकादश प्रकृतयः संक्रामन्ति । औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां क्षायिकसम्यग्दृष्टेश्च क्षपकश्रेण्यां वर्तमानस्य पञ्चके चतुष्के च

प्रतिग्रहे दश प्रकृतयः संक्रामन्ति । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य त्रिकप्रतिग्रहे प्रकृतिनवकं संक्रामति । क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य द्विके त्रिके च प्रतिग्रहे, औपशमिकसम्यग्दृष्टेश्चोपशमश्रेण्यां वर्तमानस्य चतुष्कप्रतिग्रहेऽष्टौ प्रकृतयः संक्रामन्ति । तथौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य त्रिके चतुष्के च प्रतिग्रहे सप्त प्रकृतयः संक्रामन्ति । प्रकृतिषट्कं क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्यैव द्विप्रकृत्यात्मके प्रतिग्रहे संक्रामति । प्रकृतिपञ्चकमौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य त्रिकपतद्ग्रहे, क्षायिकसम्यग्दृष्टेश्चोपशमश्रेण्यां वर्तमानस्य द्विके एकके च प्रतिग्रहे संक्रामति । तथौपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य त्रिकपतद्ग्रहे, क्षपकश्रेण्यां च चतुष्कप्रतिग्रहे चतस्रः प्रकृतयः संक्रामन्ति । तथा त्रिकप्रतिग्रहे क्षपकश्रेण्यां वर्तमानस्य, एकके च क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य प्रकृतित्रिकं संक्रामति । द्विकप्रतिग्रहे औपशमिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य, क्षायिकसम्यग्दृष्टेश्च क्षपकश्रेण्यां वर्तमानस्य प्रकृतिद्विकं संक्रामति, तथा क्षायिकसम्यग्दृष्टेरुपशमश्रेण्यां वर्तमानस्य एकके प्रतिग्रहे प्रकृतिद्वयं संक्रामति । एकस्मिन् पतद्ग्रहे एका प्रकृतिः संक्रामति, सा च क्षपकश्रेण्यामेवेति । विंशत्यादीन्येकपर्यन्तानि संभवीनि संक्रमस्थानानि पतद्ग्रहेषु प्रागेव प्रपञ्चेनाभिहितानि, सङ्कलनामात्रेण अत्र तु श्रेणिद्वयमाश्रित्योक्तानि ।

॥ मोहनीयस्य संक्रमपतद्ग्रहसंकलना ॥

| सं० | पत० | स्वामिनः | |
|---|---|---|---|
| २७–२६ | २२ | मिथ्यादृष्टिः | |
| ,, | १९ | अवि० सम्यग्दृष्टिः | |
| ,, | १५ | देशविरतः | |
| ,, | ११ | प्रमत्ताप्रमत्तौ | |
| २५ | २१ | मिथ्या० सास्वा० | चतुर्गतिषु |
| ,, | १७ | मिश्रः | |
| २३ | २२ | मिथ्यादृष्टिः | पंचेन्द्रियेष्वेव |
| ,, | १९ | अविरतसम्यग्दृष्टिः | |
| ,, | १५ | देशविरतः | |
| ,, | ११ | प्रमत्ताप्रमत्तापूर्वाः | |
| ,, | ७ | उपशमोपशमकः | |

| सं० | पत० | स्वामिनः | |
|---|---|---|---|
| २२ | १८ | अविरतसम्यग्दृष्टिः | सम्यक्त्वमिश्र-सत्ताका मनुष्या एव |
| ,, | १४ | देशविरतः | |
| ,, | १० | प्रमत्ताप्रमत्तौ | |
| ,, | ७ | उपशमोपशमकः | |
| २१ | १७ | अविरतसम्यग्दृष्टिः | |
| ,, | १३ | देशविरतः | |
| ,, | ९ | प्रमत्ताप्रमत्तापूर्वाः | |
| ,, | ७ | उपशमोपशमकाः | |
| ,, | ५ | क्षायिकदृष्टिरुभयश्रेण्याम् | |
| ,, | २१ | सास्वादनाः (इति मतान्तरः) | |

## ॥ मोहनीयस्य संक्रमपतद्ग्रहसंकलना ( श्रेणिगतानाम् ) ॥

| संक्रम० | पत० | स्वामि० | | संक्रम० | पत० | स्वामि० | |
|---|---|---|---|---|---|---|---|
| | | सम्यक्त्वे | श्रेण्याम् | | | सम्यक्त्वे | श्रेण्याम् |
| २० | ७<br>६<br>५ | उपशमदृष्टिः<br>,,<br>क्षायिकदृष्टिः | उपशमश्रेण्यां<br>,,<br>,, | ८ | ४<br>३<br>२ | उपशम०<br>क्षायिक०<br>,, | उपशमश्रेण्याम्<br>,,<br>,, |
| १९ | ५ | ,, | ,, | ७ | ४<br>३ | उपशम०<br>,, | ,,<br>,, |
| १८ | ५<br>४ | ,,<br>,, | ,,<br>,, | ६ | २ | क्षायिक० | ,, |
| १४ | ६ | उपशमदृष्टिः | ,, | ५ | ३<br>२<br>१ | उपशम०<br>क्षायिक०<br>,, | ,,<br>,,<br>,, |
| १३ | ६<br>५ | ,,<br>क्षा० | ,,<br>क्षपकश्रेण्याम् | ४ | ४<br>३ | ,,<br>उपशम० | क्षपकश्रेण्यां<br>उपशम० |
| १२ | ५<br>४ | ,,<br>क्षायिकदृष्टिः | ,,<br>उपशमश्रेण्याम् | ३ | ३<br>१ | क्षायिक०<br>क्षायिक० | क्षपकश्रेण्याम्<br>उप० |
| ११ | ५<br>४<br>३ | उप० क्षा०<br>क्षायिक०<br>,, | उप० क्षप०<br>उप०<br>,, | २ | २<br>१ | उप०<br>क्षा०<br>क्षायिक० | ,,<br>क्षपक०<br>उपशमश्रे० |
| १० | ५<br>४ | उप० क्षा०<br>,, ,, | उप० क्षप०<br>,, ,, | १ | १ | ,, | क्षपकश्रेण्याम् |
| ९ | ३ | — ,, | ,, — | | | | |

अधुना क्षायिकसम्यग्दृष्टेरुभयश्रेणीमाश्रित्य सङ्कलनोच्यते—संज्वलनचतुष्टयपुंवेदरूपे पञ्चकप्रतिग्रहे एकविंशतिरुभयश्रेण्यां, विंशत्येकोनविंशत्यष्टादशरूपास्त्रयः संक्रमा उपशमश्रेण्यां, त्रयोदशद्वादशैकादशदशरूपाश्चत्वारः संक्रमाश्च क्षपकश्रेण्यां संक्रामन्ति। अष्टादशद्वादशैकादशरूपास्त्रयः संक्रमा उपशमश्रेण्यां, दशचतुष्करूपौ द्वौ संक्रमौ च क्षपकश्रेण्यां संज्वलनचतुष्टयरूपे पतद्ग्रहे संक्रामन्ति। त्रिकं क्षपकश्रेण्यामुपशमश्रेण्यां चैकादशनवाष्टकरूपास्त्रयः संक्रमाः संज्वलनमानमायालोभरूपासु तिसृषु प्रकृतिषु संक्रामन्ति। अष्टौ, षट्, पञ्च चोपशमश्रेण्यां, क्षपकश्रेण्यां च द्वे प्रकृती मायालोभरूपद्विकप्रतिग्रहे संक्रामन्ति। क्षपकश्रेण्यामेका, उपशमश्रेण्यां च द्वित्रिपञ्चकरूपाः संक्रमा लोभरूपे पतद्ग्रहे संक्रामन्ति। पृथक् श्रेणिद्वयमाश्रित्य तु प्रागुक्तानुसारतोऽवसेयम्।

॥ क्षा० दृष्टेरुभयश्रेण्यां पतद्ग्रहेषु संक्रमस्थानसंकलना ॥

| पत० | संक्रम० | कस्यां श्रेण्याम् |
|---|---|---|
| ५ | २१ | उभयश्रेण्याम् |
| ,, | २० | उपशमश्रेण्याम् |
| ,, | १९ | |
| ,, | १८ | |
| ,, | १३ | क्षपकश्रेण्याम् |
| ,, | १२ | |
| ,, | ११ | |
| ,, | १० | |
| ४ | १८ | उपशमश्रेण्याम् |
| ,, | १२ | |
| ,, | ११ | |
| ,, | १० | क्षपकश्रेण्याम् |
| ,, | ४ | |

| पत० | संक्रम० | कस्यां श्रेण्याम् |
|---|---|---|
| ३ | ११ | उभयश्रेण्याम् |
| ,, | ९ | |
| ,, | ८ | |
| ,, | ३ | क्षपकश्रेण्याम् |
| २ | ८ | उपशमश्रेण्याम् |
| ,, | ६ | |
| ,, | ५ | |
| ,, | २ | क्षपकश्रेण्याम् |
| १ | १ | ,, |
| ,, | २ | उपशमश्रेण्याम् |
| | ३ | |
| | ५ | |

उक्ता मोहनीयस्य गुणस्थानेषु संकलना । अथ नामकर्मणो गुणस्थानकेषु संवेधद्वारेण स्वामित्वं चिन्त्यते, तत्र मिथ्यादृष्टौ षट् प्रतिग्रहस्थानानि, तद्यथा—त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशच्चेति । तत्रापर्याप्तैकेन्द्रियप्रायोग्यं त्रयोविंशतिप्रतिग्रहस्थानं बादरसूक्ष्मप्रत्येकसाधारणैश्चतुष्प्रकारं भवति । पर्याप्तैकेन्द्रियप्रायोग्यं, अपर्याप्तविकलेन्द्रियप्रायोग्यं, अपर्याप्तपञ्चेन्द्रियतिर्यङ्मनुष्यप्रायोग्यं च पञ्चविंशतिप्रकृत्यात्मकं प्रतिग्रहस्थानं भवति, तच्च पर्याप्तैकेन्द्रियप्रायोग्यं विंशतिप्रकारमपर्याप्तविकलेन्द्रियपञ्चेन्द्रियतिर्यङ्मनुष्यप्रायोग्यमेकैकप्रकारमिति पञ्चविंशतिप्रकारम् । पर्याप्तैकेन्द्रियप्रायोग्यं षड्विंशतिप्रकृत्यात्मकं प्रतिग्रहस्थानं षोडशप्रकारैर्भिद्यते । अष्टाविंशतिप्रतिग्रहस्थानं नरकप्रायोग्यमेकप्रकारं, देवप्रायोग्यं चाष्टप्रकारमिति नवप्रकारं भवति । एकोनत्रिंशत्प्रकृत्यात्मकं प्रतिग्रहस्थानं पर्याप्तविकलेन्द्रियप्रायोग्यं प्रत्येकमष्टाष्टप्रकारमिति चतुर्विंशतिप्रकारं, पञ्चेन्द्रियतिर्यङ्मनुष्यप्रायोग्यं तु प्रत्येकमष्टाधिकषट्चत्वारिंशच्छतप्रकारं भवति, सर्वसंख्यया चत्वारिंशदधिकं द्विनवतिशतप्रकारं भवति । पर्याप्तविकलेन्द्रियप्रायोग्यं त्रिंशत्प्रकृत्यात्मकं प्रतिग्रहस्थानं प्रत्येकमष्टधा भिद्यते, तिर्यक्पञ्चेन्द्रियप्रायोग्यं त्वष्टाधिकषट्चत्वारिंशच्छतधा भिद्यते, सर्वसंख्यया द्वात्रिंशदधिकषट्चत्वारिंशच्छत-

प्रकारं भवति, तदुक्तं–"चउ पणवीसा सोलस, नव चत्ताला सया य बाणउया । बत्तीसुत्तर-छायालसया मिच्छस्स बन्धविहा ॥ १ ॥" इति ।

॥ नामकर्मणः पतद्ग्रहाः ॥

| पत० | कस्य प्रायोग्याः | भङ्गाः | पत० | कस्य प्रायोग्याः | भङ्गाः |
|---|---|---|---|---|---|
| २३ | अपर्याप्तैकेन्द्रियप्रायोग्यम् | ४ | २८ | नरकप्रायोग्यम्<br>देवप्रायोग्यम् | १<br>८ } =९ |
| २५ | पर्याप्तैकेन्द्रियप्रायोग्यम्<br>अपर्याप्तविकलेन्द्रिय०<br>,, पञ्चे० तिर्यक्प्रा०<br>,, मनुष्यप्रायोग्यम् | २०<br>१–१–१<br>१<br>१ } =२५ | २९ | पर्याप्तविकले०प्रा०<br>पञ्चे० तिर्यक्प्रा०<br>मनुष्यप्रायोग्यम् | ८–८–८<br>४६०८<br>४६०८ } =९२४० |
| २६ | पर्याप्तैकेन्द्रियप्रा० | १६ | ३० | पर्याप्तविकले० प्रा०<br>पञ्चे० तिर्यक्प्रा० | ८–८–८<br>४६०८ } =४६३२ |

मिथ्यादृष्टौ षट् संक्रमस्थानानि, तद्यथा–द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिश्चेति । तत्र त्रयोविंशतिप्रतिग्रहे तिरश्चां षण्णवतिवर्जानि पञ्चापि सत्त्वस्थानानि संक्रामन्ति । मनुष्याणां षण्णवतिद्व्यशीतिवर्जानि चत्वारि स्थानानि संक्रामन्ति । पञ्चविंशतौ, षड्विंशतौ च प्रतिग्रहे तिर्यङ्मनुष्याणां त्रयोविंशतिप्रतिग्रहवद् बोध्यम्, देवानां च द्व्युत्तरशतपञ्चनवतिरूपं द्वयं संक्रामति, नवरं देवानां पञ्चविंशतिप्रतिग्रहस्थानं बादरपर्याप्तप्रत्येकस्थिरास्थिरशुभाशुभयशःकीर्त्ययशःकीर्तिपदैरष्टप्रकारं भवतीति । नरकप्रायोग्येऽष्टाविंशतिप्रतिग्रहे मनुष्याणां द्व्युत्तरशतषण्णवतिपञ्चनवतित्रिनवतिचतुरशीतिरूपाणि पञ्च संक्रामन्ति, तत्र द्व्युत्तरशतसत्कर्मणां द्व्युत्तरशतं, बद्धजिननामकानां नरकाभिमुखानां षण्णवतिः, पञ्चनवतिसत्ताकानां पञ्चनवतिः, पञ्चनवतिसत्ताकानां नरकद्विकस्यावलिकाया अभ्यन्तरे वर्तमानानां त्रिनवतिः, देवद्विकवर्जानां त्रिनवतिसत्ताकानां नरकद्विकवैक्रियसप्तकयोर्बन्धावलिकाया अभ्यन्तरे वर्तमानानां चतुरशीतिः संक्रामति । तिरश्चामप्येवमेव, केवलं षण्णवतिस्थानं न संक्रामति, तेषां जिननाम्नः सत्ताभावात् । देवप्रायोग्याष्टाविंशतिप्रतिग्रहेऽपि द्व्युत्तरशतसत्ताकानां द्व्युत्तरशतं, पञ्चनवतिसत्ताकानां पञ्चनवतिः, पञ्चनवतिसत्ताकानां देवद्विकस्यावलिकाया अभ्यन्तरे वर्तमानानां त्रिनवतिः, नरकद्विकवर्जानां त्रिनवतिसत्ताकानां देवद्विकवैक्रियसप्तकयोर्बन्धावलिकाया अभ्यन्तरे वर्तमानानां चतुरशीतिस्तिर्यङ्मनुष्याणां संक्रामति । एकोनत्रिंशति, त्रिंशति च तिर्यक्प्रायोग्यप्रतिग्रहे तिरश्चां द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि पञ्च, मनुष्याणां च द्व्यशीतिवर्जानि चत्वारि संक्रमस्थानानि संक्रामन्ति । पञ्चेन्द्रियतिर्यक्प्रायोग्ये एकोनत्रिंशति, त्रिंशति च देवनारकाणां द्व्युत्तरशतपञ्चनवतिरूपं द्वयं संक्रामति । मनुष्यप्रायोग्ये-

कोनत्रिंशति प्रतिग्रहे तिरश्चां द्व्युत्तरशतपञ्चनवतिचतुरशीतिद्व्यशीतिरूपाणि चत्वारि संक्रामन्ति, तत्र चतुरशीतिसत्ताकानां मनुजद्विकस्य बन्धावलिकाया अभ्यन्तरे वर्तमानानां द्व्यशीतिस्थानं संक्रामति, तत्रैव च मनुष्याणां द्व्यशीतिवर्जानि त्रीणि संक्रामन्ति, देवानां द्व्युत्तरशतपञ्चनवतिरूपं द्वयं संक्रामति, नारकाणां च द्व्युत्तरशतषण्णवतिपञ्चनवतिरूपं सत्त्वस्थानत्रिकं संक्रामति, तत्र तीर्थंकरसत्कर्मरहितानां षण्णवतिवर्जं द्विकं संक्रामति, षण्णवतिसत्त्वस्थानं त्वपर्याप्तावस्थायां वर्त्तमानानां तीर्थंकरसत्कर्मणामवसेयमित्युक्तो मिथ्यादृष्टौ संक्रमप्रतिग्रहस्थानानां संवेधः ।

॥ मिथ्यात्वे नाम्नः पतद्ग्रहे संक्रमस्य संवेधः ॥

| पतद्ग्रह | संक्रमस्थानानि | संक्रमस्वामिनः |
|---|---|---|
| २३ | १०२–९५–९३–८४–८२ | तिर्यञ्चः । |
| ,, | १०२–९५–९३–८४ | मनुष्याः । |
| २५–२६ | १०२–९५–९३–८४–८२ | तिर्यञ्चः । |
| ,, | १०२–९५–९३–८४ | मनुष्याः । |
| २५–२६ | १०२–९५ | देवाः । |
| नरक प्रा० २८ | १०२ | १०२ सत्ताकनरतिर्यञ्चौ । |
| | ९६ | बद्धजिननामनरो नरकोन्मुखः । |
| | ९५ | ९५ सत्ताकनरतिर्यञ्चौ । |
| | ९३ | नरकद्विकबन्धावलिकान्तर्गतनरतिर्यञ्चौ ९५ सत्ताकौ । |
| | ८४ | देवद्विकवर्जे ९३ सत्ताकौ नरकद्विकवैक्रियसप्तकयोर्बन्धावलिकान्तर्गतनरतिर्यञ्चौ १०२ सत्ताकनरतिर्यञ्चौ । |
| देवप्रा० २८ | १०२ | १०२ सत्ताकनरतिर्यञ्चौ । |
| | ९५ | ९५ ,, ,, । |
| | ९३ | ,, ,, ,, देवद्विकबन्धावलिकान्तर्गतौ । |
| | ८४ | नरकद्विकवर्जे ९३ सत्ताकनरतिर्यञ्चौ देव २ वै० ७ योर्बन्धावलिकान्तर्गतौ । |
| ति० प्रा० २९–३० | १०२–९५–९३–८४–८२ | तिर्यञ्चः । |
| | १०२–९५–९३–८४ | मनुष्याः । |

| | | |
|---|---|---|
| पञ्चे०ति०प्रा० २९-३० | १०२-९५ | देवा नारकाश्च। |
| मनु०प्रायो० २९ | १०२<br>९५<br>८४<br>८२ | १०२ सत्ताकतिर्यञ्चः।<br>९५ सत्ताकतिर्यञ्चः।<br>८४ ,, ,,।<br>८४ ,, ,, मनु०द्विकबन्धावलिकान्तर्गताः। |
| ,,<br>,,<br>,, | १०२-९५-८४<br>१०२-९५<br>१०२-९६-९५ | तत्सत्ताकमनुष्याः।<br>,, देवाः।<br>,, नारकाः। (नवरं बद्धजिननामनारकाणां ९६ संक्रमः) |

अथ सास्वादनगुणस्थाने संवेधः उच्यते-अत्र त्रीणि प्रतिग्रहस्थानानि, तद्यथा-अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशच्चेति। तत्राष्टाविंशतिप्रकृत्यात्मकं प्रतिग्रहस्थानं नरकप्रायोग्यं, देवप्रायोग्यं च। नरकप्रायोग्यं त्वत्र न भवति, नरकप्रायोग्यबन्धव्यवच्छेदात्, देवप्रायोग्यं च पञ्चेन्द्रियतिर्यङ्मनुष्याणामष्टप्रकारं भवति। एकोनत्रिंशत्प्रतिग्रहस्थानं पञ्चेन्द्रियतिर्यङ्-मनुष्यप्रायोग्यं चतुःषष्टिशतप्रकारं चतुर्गतिकानां भवति, तथा हि-पञ्चभिः संस्थानैः, पञ्चभिः संहननैः, प्रशस्ताप्रशस्तखगतिभ्यां, स्थिरास्थिराभ्यां, शुभाशुभाभ्यां, सुभगदुर्भगाभ्यां, सुस्वरदुःस्वराभ्यां, आदेयानादेयाभ्यां, यशःकीर्त्ययशःकीर्तिभ्यां च गुण्यमानं तिर्यक्प्रायोग्यं द्वात्रिंशच्छतप्रकारं, मनुष्यप्रायोग्यं च द्वात्रिंशच्छतप्रकारमुभयमिलने उक्त-प्रकारमेकोनत्रिंशत्प्रतिग्रहस्थानं भवति। त्रिंशत्प्रतिग्रहस्थानमपि प्रागुक्तप्रकारेण द्वात्रिंश-च्छतप्रकारं भवति। त्रीण्यपि प्रतिग्रहस्थानानि सर्वसंख्यया अष्टाधिकानि षण्णवतिशत-प्रकाराणि भवन्ति, तदुक्तं-"अट्ठ सया चोसट्ठिं, बत्तीससया य सासणे भणिया। अट्ठावीसाईसुं, सव्वाणट्ठहिय छण्णउई ॥ १ ॥" इति।

॥ सास्वादने नामकर्मणः पतद्ग्रहाः ॥

| पत० | कस्य प्रायोग्याः | भङ्गाः | स्वामिनः |
|---|---|---|---|
| २८ | देवप्रायोग्याः | ८ | पञ्चे० ति० मनुष्यः |
| २९ | पञ्चे० ति० मनु० प्रायो० | ६४०० | चातुर्गतिकाः |
| ३० | पर्या० विकले० पञ्चे० तिर्यञ्चः | ३२०० | ,, |

अत्र संक्रमस्थाने तु द्वे भवतः, तद्यथा-द्व्युत्तरशतं, पञ्चनवतिश्चेति। तत्राष्टाविंशतिप्रतिग्रहे मनुष्याणां द्वयं, तिरश्चां चैकमेव पञ्चनवतिप्रकारम्। एकोनत्रिंशत्प्रतिग्रहेऽपि मनुष्याणां श्रेणीतः प्रतिपातसम्भवेन द्वयं, शेषाणां पुनः पञ्चनवतिप्रकृत्यात्मकमेव भवति। त्रिंशत्प्रतिग्रहे चतुर्गतिकानामप्येकमेव पञ्चनवतिप्रकृत्यात्मकमिति।

॥ २ ये नाम्नः पतद्ग्रहे संक्रमसंवेधः ॥

| पत० | संक्रमः | स्वामिनः |
|---|---|---|
| २८ | १०२–९५ | नराः |
| | ९५ | तिर्यञ्चः |
| २९ | १०२–९५ | नराः |
| | ९५ | तिर्यञ्चः |
| ३० | ९५ | चातुर्गतिकाः |

मिश्रदृष्टौ द्वे प्रतिग्रहस्थाने भवतः, तत्र तिर्यङ्मनुष्याणां देवप्रायोग्याऽष्टाविंशतिप्रतिग्रहस्थानं, देवनारकाणां च मनुष्यप्रायोग्यमेकोनत्रिंशत्प्रतिग्रहस्थानम्। प्रत्येकं पुनः स्थिरास्थिर-शुभाशुभ-यशः-कीर्त्त्यशःकीर्तिपदैरष्टप्रकारं भवति, सर्वसंख्यया द्वे अपि प्रतिग्रहे षोडशप्रकारे भवतः । द्वयोरपि प्रतिग्रहस्थानयोर्द्वे द्वे संक्रमस्थाने भवतः, तद्यथा–द्व्युत्तरशतं, पञ्चनवतिरिति ।

॥ ३ ये नाम्नः प० सं० संवेधः ॥

| पत० | कस्य प्रायोग्याः | भङ्गाः | पत० स्वामिनः | संक्रमः |
|---|---|---|---|---|
| २८ | देवप्रायो० | ८ | नरतिर्यञ्चौ | १०२–९५ |
| २९ | नरप्रायो० | ८ | देवनारकाः | १०२–९५ |

अविरतसम्यग्दृष्टेस्त्रीणि प्रतिग्रहस्थानानि, तद्यथा–अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशच्च। तानि स्थिरास्थिर-शुभाशुभ-यशःकीर्त्त्यशःकीर्तिपदैरष्टप्रकाराणि भवन्ति । अष्टाविंशतिः देवप्रायोग्यं तिर्यङ्मनुष्याणां, मनुष्याणां चैतज्जिनयुतं देवप्रायोग्यमेकोनत्रिंशदपि भवति। देवनारकाणां मनुष्यगतिप्रायोग्यं एकोनत्रिंशत्, तेषामेव च तत्प्रायोग्यं जिनयुतं त्रिंशद्भवतीत्येवं चतुष्प्रकारेण सर्वसंख्यया त्रीण्यपि प्रतिग्रहस्थानानि द्वात्रिंशत्प्रकाराणि भवन्ति। चत्वारि संक्रमस्थानानि, तद्यथा–त्र्युत्तरशतं, द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिरिति। अष्टाविंशतिप्रतिग्रहे द्व्युत्तरशतपञ्चनवतिरूपं द्वयं संक्रामति। एकोनत्रिंशत्प्रतिग्रहेऽपि देवनारकाणामेतदेव द्विकं संक्रामति । मनुष्याणामेकोनत्रिंशत्प्रतिग्रहे जिननाम्नि बन्धावलिकाया अभ्यन्तरे वर्तमाने तूक्तरूपं द्वयं, आवलिकाया ऊर्ध्वं तु त्र्युत्तरशतं षण्णवतिर्वा संक्रामति। त्रिंशत्प्रतिग्रहे देवानां त्र्युत्तरशतं षण्णवतिर्वा संक्रामति। नारकाणां षण्णवतिरेव संक्रामति।

॥ अविरतसम्यग्दृष्टौ नाम्नः पतद्ग्रहाः ॥

| पत० | कस्य प्रायोग्याः | भङ्गाः | स्वामिनः | पत० | कस्य प्रायोग्याः | भङ्गाः | स्वामिनः |
|---|---|---|---|---|---|---|---|
| २८ | देवप्रा० | ८ | तिर्यङ्नरौ | २९ | देवप्रा० | ८ | मनुष्याः |
| | | | | | मनु०प्रा० | ८ | देवनारकाः |
| | | | | ३० | मनुष्यप्रा० | ८ | देवनारकाः |

॥ ४ र्थे संक्रमसंवेधः ॥

| पत० | संक्रमः | स्वामिनः |
|---|---|---|
| २८ | १०२–९५ | नारका देवाश्च |
| २९ | १०२–९५ | ,, |
| | १०२–९५ | जिननामबन्धावलिकान्तर्गता नराः |
| | १०३–९६ | ,, लिकोर्ध्वं नराः |
| ३० | १०३–९६ | देवाः |
| | ९६ | नारकाः |

देशविरतस्य द्वे प्रतिग्रहस्थाने भवतः, तद्यथा–अष्टाविंशतिः, एकोनत्रिंशच्चेति । अष्टाविंशतिस्तिर्यङ्मनुष्याणां, एकोनत्रिंशच्च मनुष्याणामेव । स्थिरास्थिर-शुभाशुभ-यशःकीर्त्ययशःकीर्त्तिपदैरुभयमप्यष्टप्रकारम् । संक्रमस्थानानि चत्वारि–त्र्युत्तरशतं, द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिरिति । अष्टाविंशत्यां द्व्युत्तरशतपञ्चनवतिरूपं द्वयं संक्रामति । एकोनत्रिंशति जिननाम्नि बन्धावलिकाया अभ्यन्तरे द्व्युत्तरशतं पञ्चनवतिर्वा, आवलिकाया ऊर्ध्वं तु त्र्युत्तरशतं षण्णवतिर्वा संक्रामति । देशविरतस्येव प्रमत्तसंयतस्यापि, नवरमेतद्गुणस्थानं मनुजानामेवेति सुष्ठु विभावनीयम् ।

॥ देशविरते, प्रमत्ते च नाम्नः पतद्ग्रहाः संक्रमसंवेधश्च ॥

| पत० | प्रायोग्याः | पत० भङ्गाः | संक्रमः | स्वामिनः |
|---|---|---|---|---|
| २८ | देवप्रा० | ८ | १०२–९५ | तिर्यङ्नराः |
| २९ | ,, | ८ | १०२–९५ | जि० बन्धावलिकान्तर्गतनराः |
| | | | १०३–९६ | जि० बन्धावलिकोर्ध्वं नराः |

अप्रमत्तस्य चत्वारि प्रतिग्रहस्थानानि, तद्यथा-अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशद्, एकत्रिंशच्च । अत्रास्थिराशुभायशःकीर्तीनां बन्धव्यवच्छेदेन चतुर्णामपि पतद्ग्रहाणां भङ्गाभावो वाच्यः । संक्रमस्थानानि चत्वारि, तद्यथा–त्र्युत्तरशतं, द्व्युत्तरशतं, षण्णवतिः, पञ्चनवतिरिति । अष्टाविंशतिपतद्ग्रहे पञ्चनवतिः, एकोनत्रिंशत्प्रतिग्रहे जिननाम्नि बन्धावलिकाया अभ्यन्तरे वर्तमाने पञ्चनवतिः, उपरि तु षण्णवतिः । त्रिंशत्पतद्ग्रहेऽपि आहारकनाम्नि बन्धावलिकाया अभ्यन्तरे वर्तमाने पञ्चनवतिः, उपरि तु द्व्युत्तरशतं । एकत्रिंशत्पतद्ग्रहे तु जिनाहारकयोर्बन्धावलिकाया अभ्यन्तरे वर्तमानयोः पञ्चनवतिः, उभयोर्बन्धावलिकाया उपरि त्र्युत्तरशतं । जिननाम्नि बन्धावलिकाया अभ्यन्तरे, आहारकस्य च बन्धावलिकाया उपरि वर्तमाने द्व्युत्तरशतं, आहारकनाम्नि बन्धावलिकाया अभ्यन्तरे, जिननाम्नि च बन्धावलिकाया उपरि वर्तमाने षण्णवतिः संक्रामति ।

॥ अप्रमत्ते नाम्नः पतद्ग्रहाः संक्रमसंवेधश्च ॥

| पत० | प्रायोग्याः | भङ्गाः | संक्रमस्वामिनः | संक्रमः |
|---|---|---|---|---|
| २८ | देवप्रा० | १ | नराः | ९५ |
| २९ | ,, | १ | ,, | ९५ जिनबन्धावलिकान्तः— |
| | | | | ९६ ,, कोर्ध्वं— |
| ३० | ,, | १ | ,, | ९५ आहारकबन्धावलिकान्तः— |
| | | | | १०२ ,, कोर्ध्वं— |
| ३१ | ,, | १ | ,, | ९५ जिनाहारकबन्धावलिकान्तः— |
| | | | | १०३ जिनाहारकबन्धावलिकोर्ध्वं— |
| | | | | १०२ जिनबन्धावलिकान्तः, आहारकबन्धावलिकोर्ध्वं च— |
| | | | | ९६ आहारकबन्धावलिकान्तः, जिनबन्धावलिकायास्तूर्ध्वं— |

अपूर्वकरणे पञ्च प्रतिग्रहस्थानानि, तद्यथा–अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशद्, एकत्रिंशद्, एकमिति । संक्रमस्थानानि षड् भवन्ति, तद्यथा–त्र्युत्तरशतं, द्व्युत्तरशतम्, एकोत्तरशतं, षण्णवतिः, पञ्चनवतिः, चतुर्नवतिरिति । चतुर्षु पतद्ग्रहेष्वप्रमत्तसंयतस्येव भावना कार्या । एकस्मिन् पतद्ग्रहे तु त्र्युत्तरशतसत्कर्मणः पतद्ग्रहे कृतां यशःकीर्तिमपनीय शेषं द्व्युत्तरशतं संक्रामति । द्व्युत्तरशतसत्कर्मण एकोत्तरशतं, षण्णवतिसत्ताकस्य पञ्चनवतिः, पञ्चनवतिसत्ताकस्य चतुर्नवतिरेकस्मिन्पतद्ग्रहे संक्रामति ।

॥ ८ मे नाम्नः पतद्ग्रहे संक्रमसंवेधः ॥

| पत० | संक्रमः | स्वामिनः | पत० | संक्रमः | स्वामिनः |
|---|---|---|---|---|---|
| २८ | अप्रमत्तवत् | अप्रमत्तवत् | १ | १०२ | १०३ सत्ताकनराः |
| २९ | ,, | ,, | | १०१ | १०२ ,, |
| ३० | ,, | ,, | | ९५ | ९६ ,, |
| ३१ | ,, | ,, | | ९४ | ९५ ,, |

अनिवृत्तिकरणे सूक्ष्मसम्पराये चैकप्रकृत्यात्मकमेकमेव प्रतिग्रहस्थानम्, अष्टौ संक्रमस्थानानि च; तद्यथा—द्व्युत्तरशतं, एकोत्तरशतं, पञ्चनवतिः, चतुर्नवतिः, एकोननवतिः, अष्टाशीतिः, द्व्यशीतिः, एकाशीतिरिति। तत्राद्यानि चत्वारि उपशमश्रेण्यां, क्षपकश्रेण्यां च त्रयोदशप्रकृतिक्षयादर्वाक्, उत्तराणि चत्वारि तु त्रयोदशप्रकृतिक्षयादुपरि क्षपकश्रेण्यां वर्तमानानां संक्रामन्तीति।

॥ ९–१० मे नाम्नः पतद्ग्रहे संक्रमसंवेधः ॥

| पत० | संक्रमः | स्वामिनः |
|---|---|---|
| १ | १०२–१०१–९५–९४ | उभयश्रेण्याम् (१३ क्षयादर्वाक्) नराः |
| | ८९—८८–८२–८१ | क्षपकश्रेण्यां (१३ क्षयादूर्ध्वं) ,, |

उपशान्तादौ न प्रतिग्रहस्थानं नापि संक्रमस्थानं, नाम्नो बन्धाभावादित्युक्तो गुणस्थानेषु संक्रमप्रतिग्रहस्थानानां संवेधः॥

अथ जीवस्थानद्वारेण संक्रमप्रतिग्रहाणां स्वामिन उच्यन्ते—जीवस्थानेषु गुणस्थानानि स्वयं परिभावनीयानि। तत्र ज्ञानावरणान्तराययोः पञ्च २ प्रकृत्यात्मके प्रतिग्रहे पञ्च २ प्रकृत्यात्मकमेकैकमेव संक्रमस्थानं चतुर्दशस्वपि जीवस्थानेषु संक्रामति।

गोत्रस्य तेजोवायुरूपेष्वेकेन्द्रियेषु उच्चैर्गोत्रे उद्वलिते सति तत्र संक्रमपतद्ग्रहाभावो वाच्यः। तथा तेजोवायुभ्यो निर्गतस्योद्वलितोच्चैर्गोत्रस्य द्वीन्द्रियादिषूत्पन्नस्यानापन्नपर्याप्तभावस्यापि संक्रमप्रतिग्रहाभावो वाच्यः। पर्याप्तभवनानन्तरं तूच्चैर्गोत्रस्य बध्यमानत्वेन नीचैर्गोत्रस्य संक्रमो भवति, मतान्तरेण तु द्वीन्द्रियादिषूत्पन्नः सन् प्रथमसमये एवोच्चैर्गोत्रस्य बध्यमानत्वेन नीचैर्गोत्रं संक्रामति तदुक्तम्—"कलङ्कलीसत्त्वेऽपि द्वीन्द्रियादिषूत्पन्नः सन् प्रथमसमये एव पर्याप्त्युत्तरकालं वोच्चैर्गोत्रं बद्ध्वा मनुष्येष्वसकृदुच्चैर्गोत्रमास्कन्दति, उच्चैर्गोत्रोद्वलनेन कलङ्कलीभावमापन्नः" इति। तथा च सति षट्सु पर्याप्तेषु संक्रमप्रतिग्रहौ भवत एव, सप्तसु चापर्याप्तेषूद्वलितोच्चैर्गोत्रस्य यावदुच्चैर्गोत्रं न बध्नाति तावन्न संक्रमप्रतिग्रहौ भवतः। मतान्तरेण तु द्वीन्द्रियादिषूत्पत्तिप्रथमसमये एव तौ भवतः। अनुद्वलितोच्चैर्गोत्राणां तु त्रयोदशानामपि संक्रमप्रतिग्रहौ परावर्तमानेन भवतः। यस्याः प्रकृतेः बन्धस्तस्याः प्रतिग्रहता, तदन्या तु संक्रामति। संज्ञिपर्याप्तकेषु सास्वादनं यावदुभयोरुच्चैर्गोत्रनीचैर्गोत्रयोः परावर्तमानत्वेन प्रतिग्रहता, मिश्रादूर्ध्वं सूक्ष्मसम्परायं यावदुच्चैर्गोत्रस्यैव प्रतिग्रहता, न नीचैर्गोत्रस्य बन्धाभावात्।

वेदनीयस्य त्रयोदशसु जीवस्थानेषूभयोः प्रतिग्रहता संक्रमश्च। संज्ञिपर्याप्तके प्रमत्त

यावदुभयोः प्रतिग्रहता, अप्रमत्तात् सूक्ष्मं यावत् सातस्यैव पतद्ग्रहता, असातस्य बन्धाभावादिति । यस्याः प्रकृतेः प्रतिग्रहता तदन्यायाः संक्रम इति ।

त्रयोदशसु दर्शनावरणीयस्य नवप्रकृत्यात्मके प्रतिग्रहे नवप्रकृत्यात्मकं संक्रमस्थानं संक्रामति । संज्ञिनि पर्याप्तके च नवकप्रतिग्रहे नवकमेव; षट्कप्रतिग्रहे, चतुष्कप्रतिग्रहे च नवकं, षट्कं चेति ।

पर्याप्तापर्याप्तसूक्ष्मैकेन्द्रियापर्याप्तबादरैकेन्द्रियापर्याप्तद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियासंज्ञिसंज्ञिरूपेषु अष्टसु जीवस्थानेषु मिथ्यात्वं, चारित्रमोहनीयसत्का चैकविंशतिरिति द्वाविंशतिप्रकृत्यात्मकं प्रागुक्तं षट्प्रकारं द्वाविंशतिरूपं मोहनीयस्य प्रतिग्रहस्थानं भवति । अष्टसु संक्रमस्थानानि त्रीणि भवन्ति, तद्यथा–सप्तविंशतिः, षड्विंशतिः, पञ्चविंशतिश्चेति । तत्राष्टाविंशतिसत्ताकानां सम्यक्त्वमोहनीयं यावदुद्वलनासंक्रमेण सर्वथा निष्ठां न याति, तावद् द्वाविंशतौ सप्तविंशतिः संक्रामति । सम्यक्त्व उद्वलिते तु सप्तविंशतिसत्ताकानां षड्विंशतिः संक्रामति । मिश्रे चोद्वलिते षड्विंशतिसत्ताकानामनादिमिथ्यादृष्टीनां, षड्विंशतिसत्ताकानां च मिथ्यात्ववर्जैकविंशतौ पञ्चविंशतिः संक्रामति । अपर्याप्तास्त्वत्र लब्ध्या द्रष्टव्याः, अन्यथा करणपर्याप्ते संज्ञिनि तुर्यगुणस्थाने सप्तदशैकोनविंशतिरूपे द्वे प्रतिग्रहस्थाने, एकविंशतित्रयोविंशतिसप्तविंशतिरूपाणि च त्रीणि संक्रमस्थानानि भवन्ति, तथाहि–आद्यकषायचतुष्कवर्जद्वादशकषायभयजुगुप्साहास्यरतियुगलारतिशोकयुगलान्यतरयुगलपुंवेदमिश्रसम्यक्त्वरूपेष्वेकोनविंशतिप्रतिग्रहेषु सम्यक्त्ववर्जाः सप्तविंशतिः प्रकृतयः संक्रामन्ति । विसंयोजितानन्तानुबन्धिनस्तस्मिन्नेवैकोनविंशतिप्रतिग्रहे त्रयोविंशतिः संक्रामति । मिश्रसम्यक्त्ववर्जे सप्तदशप्रतिग्रहे एकविंशतिः संक्रामति । पर्याप्तबादरैकेन्द्रियद्वित्रिचतुरिन्द्रियासंज्ञिरूपेषु पञ्चसु जीवस्थानेषु द्वे प्रतिग्रहस्थाने भवतः, तद्यथा–द्वाविंशतिरेकविंशतिश्च, सप्तविंशतिषड्विंशतिपञ्चविंशतिरूपाणि च त्रीणि संक्रमस्थानानि भवन्ति । तत्र मिथ्यादृष्टौ द्वाविंशतिप्रतिग्रहे सप्तविंशतिषड्विंशतिरूपं संक्रमस्थानद्वयं संक्रामति । एकविंशतौ मिथ्यादृष्टेः सास्वादनस्य च पञ्चविंशतिः संक्रामति । पर्याप्ते संज्ञिनि प्रागुक्तान्यष्टादशप्रतिग्रहस्थानानि त्रयोविंशतिसंक्रमस्थानानि च सप्रभेदानि भवन्ति ।

नाम्नः सप्तसु लब्ध्यपर्याप्तेष्वाद्येषु पञ्चसु पर्याप्तेषु च पञ्च पञ्च प्रतिग्रहस्थानानि भवन्ति, तद्यथा–त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, एकोनत्रिंशत्, त्रिंशच्चेति । एतानि च तिर्यङ्मनुजप्रायोग्यानि प्रतिग्रहस्थानानि प्रागिवात्रापि सप्रपञ्चं वाच्यानि । एतेषु द्वादशस्वपि जीवस्थानेषु संक्रमस्थानान्यपि पञ्च भवन्ति, तद्यथा–द्व्युत्तरशतं, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिरिति । पञ्चस्वपि प्रतिग्रहेषु प्रत्येकं पञ्च पञ्च संक्रमस्थानानि संक्रामन्तीति तु संवेधः । केवलं तेजोवायुवर्जेषु द्वादशस्वपि जीवस्थानेषु द्व्यशीतिरूपं संक्रमस्थानं शरीरपर्याप्तेरूर्ध्वमावलिकामात्रमेव संक्रामति न परतः, यतः शरीरपर्याप्त्यनन्तरमवश्यमेव मनुष्यद्विकं बध्नाति, तदुक्तं–"शरीरपर्याप्त्या हि पर्याप्तस्तेजोवायुवर्जः सर्वोऽपि मनुष्यगतिमनुष्या-

नुपूर्व्यौ नियमाद्बध्नाति" इति, ततो बन्धावलिकाया ऊर्ध्वं मनुजद्विकस्यापि संक्रमो भवतीति। लब्ध्या पर्याप्तके करणेन त्वपर्याप्तके संज्ञिनि तुर्यगुणस्थाने अष्टाविंशत्येकोनत्रिंशत्त्रिंशद्रूपं प्रतिग्रहस्थानत्रिकं स्यात्। तत्र अष्टाविंशत्यां द्व्युत्तरशतं पञ्चनवतिर्वा संक्रामति। एकोनत्रिंशति, त्रिंशति च त्र्युत्तरशतं षण्णवतिर्वा संक्रामति। असंज्ञिनि पर्याप्तके षट् प्रतिग्रहस्थानानि भवन्ति, तद्यथा—त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशच्चेति। तत्राष्टाविंशतिवर्जानि पञ्च पतद्ग्रहस्थानानि तिर्यङ्मनुष्यप्रायोग्यानि, अष्टाविंशतिपतद्ग्रहस्थानं देवगतिनरकगतिप्रायोग्यमिति। संक्रमस्थानानि चासंज्ञिनि पर्याप्तके पञ्च भवन्ति, तद्यथा—द्व्युत्तरशतं, पञ्चनवतिः, त्रिनवतिः, चतुरशीतिः, द्व्यशीतिश्चेति। तत्राष्टाविंशतिवर्जेषु पञ्चसु प्रतिग्रहेषु प्रत्येकेषु पञ्च पञ्च संक्रमस्थानानि शरीरपर्याप्तेरूर्ध्वमावलिकामात्रं यावत्, तत उपरि द्व्यशीतिवर्जानि चत्वारि स्थानानि संक्रामन्ति। अष्टाविंशतिपतद्ग्रहेऽपि द्व्यशीतिवर्जानि चत्वारि स्थानानि संक्रामन्ति। संज्ञिपर्याप्तके अष्टौ प्रतिग्रहस्थानानि भवन्ति, तद्यथा—त्रयोविंशतिः, पञ्चविंशतिः, षड्विंशतिः, अष्टाविंशतिः, एकोनत्रिंशत्, त्रिंशत्, एकत्रिंशत्, एका चेति। संक्रमस्थानानि द्वादश, तद्यथा—त्र्युत्तरशतं, द्व्युत्तरशतं, एकोत्तरशतं, षण्णवतिः, पञ्चनवतिः, चतुर्नवतिः, त्रिनवतिः, एकोननवतिः, अष्टाशीतिः, चतुरशीतिः, द्व्यशीतिः, एकाशीतिश्चेति। तत्र त्रयोविंशतिपञ्चविंशतिषड्विंशतिषु त्रीषु प्रतिग्रहेषु प्रत्येकं द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि पञ्च पञ्च संक्रमस्थानानि संक्रामन्ति। अष्टाविंशत्यां द्व्युत्तरशतपञ्चनवतित्रिनवतिचतुरशीतिरूपाणि चत्वारि संक्रमस्थानानि संक्रामन्ति। एकोनत्रिंशति, त्रिंशति च प्रतिग्रहे त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतित्रिनवतिचतुरशीतिद्व्यशीतिरूपाणि सप्त संक्रमस्थानानि संक्रामन्ति। एकत्रिंशति त्र्युत्तरशतद्व्युत्तरशतषण्णवतिपञ्चनवतिरूपाणि चत्वारि संक्रमस्थानानि संक्रामन्ति। एकस्मिन् पतद्ग्रहे द्व्युत्तरशतैकोत्तरशतपञ्चनवतिचतुर्नवत्येकोननवत्यष्टाशीतिद्व्यशीत्येकाशीतिरूपाण्यष्टौ संक्रमस्थानानि संक्रामन्तीति जीवस्थानेषूक्तः संक्रमप्रतिग्रहस्थानानां संवेधः। अत्रोक्तशेषं संक्रमप्रतिग्रहसत्ताबन्धप्रकृतिस्थानभङ्गादिकं सर्वं स्वयमेव परिभावनीयं, विस्तरभयाच्च नात्र लिख्यत इति समाप्तोऽयं प्रथमो विभागः॥

संक्रमश्च पतद्ग्रहः स्थानके गुणजीवयोः।
संवेधश्च तयोस्तत्र भागेऽवसेय आदिमे॥
सर्वाश्चर्यकरे प्रभावभवने श्रीदानसूरीशितुः,
साम्राज्ये विजयोत्तरेण मुनिना प्रेमाभिधान्तेषदा।
संदृब्धे वरसंक्रमाख्यकरणे कर्मस्वरूपातिथौ,
सप्ताष्टाङ्कशशाङ्कसंवति शुभे भागोऽजनिष्टादिमः॥

